# गीतानन्तरसम्

(पुरी-चैतन्यखण्डम्)

(तृतीयम्)

प्रमाता

बटोही झा

(प्रवाचकः)

राष्ट्रिय-संस्कृत-संस्थान-
(मानित-विश्वविद्यालयः)
लखनऊ-परिसरः
गोमती-नगरम्
लखनऊ

# परिचयः

गीतानन्तरस-द्वितीयखण्डार्पणेन केषाञ्चित्सहृदय-विदुषां सौहार्द-शुभाशंसनपत्रमधिगतम्। तथाहि-दिल्लीसंस्कृतविद्यापीठ-सहाध्यायिप्रवरसाहित्यिक-श्रीराजेन्द्रझा-महाशयस्य-


**डॉ० राजेन्द्र झा**
एम० ए०, पी-एच० डी०
साहित्याचार्य, साङ्ख्ययोगाचार्य,
(प्राप्त स्वर्णपदक)
उपाचार्य एवं अध्यक्ष,
संस्कृत विभाग.
गोपेश्वर महाविद्यालय हथुआ,
गोपालगंज (बिहार)


गीतानन्तरसस्य
प्रशस्तिपञ्चकम् दिनांक (१३।८।२०००)

(१)

कामादिसौख्य विवशा बहवो वराकाः,
वाञ्छन्ति सर्वफललाभमिह भ्रमन्तः।
तृष्णानदीसलिलपाननिमग्नजीवाः,
स्वार्थं सदा दधति चित्रविचित्ररूपाः॥

(2)

कामानलेन न कदापि सुखं लभन्ते,
तृष्णा न शान्तिसुखदा वरदा च लोके।
वित्तं न चित्त-शमकं कथयन्ति वृद्धाः,
आदर्श देव पुरुषो हि दिशं विधत्ते॥

(3)

चैतन्यदेव शुभचारु-कथा प्रसिद्धा,
रम्या शचीसुत परा परमार्थरूपा,
गौराङ्ग भक्तिपथगा मधुरा च पुण्या,
दृष्टा स्मृता खलु मया बहुशोऽप्यधीता॥

(४)

भावानुवादपरकोऽस्ति तव प्रबन्धः,
मूलानुसारि रचितः सरलार्थयुक्तः।
भाषाप्रयोगकरणे परमः प्रवीणः
विश्लेषणे रसपरे च भवान् नवीनः॥

(५)

सैषा तारणाभिधा परमः प्रकाशः,
शब्दार्थसौष्ठवदृशा नितरां प्रशस्यः।
पाथेयमस्ति च सदा बुधजीवनस्य,
चैतन्यचित्रलसितं पथिकस्य भव्यम्॥

प्रियबन्धो! कस्यचित्प्रकाशनार्थं दातव्यम्। मह्यमपि
तत्प्रकाशितं वस्तु प्रेष्यमित्यनुरोधः।
यथाकालं पत्रोत्तरं देयम्। [signature]



ममैतत्पत्रकार्तज्ञ्यप्रकाशनम्-

दिल्लीसंस्कृतपीठसिद्धसुधियां मध्ये सुसाहित्यिकः
प्रख्यातः प्रतिभाधनी निपुणताऽभ्यासाश्रयो भावकः।
आत्मीयाशुकवित्वकौशलदिशाऽमीरः समीरः सतां
चन्द्रः कोऽपि ललास शास्त्रिसितिमा सत्काव्यसम्पत्तिमान्।।१।।

तत्पीठे विविधे च शास्त्रनिवहे शिष्यास्तथाद्या, यतः
श्रीलक्ष्मीश्वरकालिनाथसहितोपेन्द्रो हि वेदश्रुतिः।
कृष्णानन्दसुरेन्द्रभैरवभवाः शब्दाख्यशास्त्रेऽमला
न्याये वर्त्मनि मित्रनाथयतिकः, पीठप्रतिष्ठा तथा।।२।।

अमीरचन्द्रोऽमलकाव्यधामा
साहित्यमार्गस्य गुरुः प्रमाता।
शिष्येषु मान्यः प्रथमोऽस्य धन्यो
राजेन्द्रझानाम गतोऽद्वितीयः।।३।।

सौम्यः प्रसन्नपदवाङ्मितमिष्टभाषी
स्वाध्यायसंयतमना निजभावसङ्गी।
साहित्यशास्त्रसितकाव्यकलामलात्मा
राजेन्द्रझाः सहृदयोऽग्रजपाठिशस्यः।।४।।

पीठाधीतिवियुक्तिसंस्मृतिरहो! व्यक्ता प्रयागे क्षणे
श्रीराजेन्द्रविलोकनात्प्रमुदिता पान्थस्य हृत्संचिता।
गीतानन्तरसद्वयार्पणविधेर्लब्ध्वा प्रशस्तीस्ततः
स्वं कार्तज्ञ्यमभिव्यनक्ति गुरुकभ्रातुः कृतेऽयं कृती।।५।।

(प्रयागस्थहिन्दीसाहित्यसम्मेलनायोजितगोष्ठीप्रकरणे जातमाकस्मिकमिलनं, तत्रैव पुस्तकद्वयमर्पितम्)



# भागवतादि-सरससङ्गीतमयकथावाचक-सत्प्रवराणां
# डॉ.श्रीयुताखिलानन्दजीमहाराजपादानाम्-

।। श्रीमंगलमूर्तये नमः ।। ।। ........ श्रीकृष्णाय वयं नुमः ।। ।। माँ कामाख्या पातु माम् ।।




संगीतमय आध्यात्मिक कथावाचक
सद्गृहस्थ सन्त-
डॉ० अखिलानन्दशास्त्री जी महाराज
व्याकरणशास्त्राचार्य, एम०ए०, पी-एच०डी०

आवास- बी. २९/१
रामानुज कोट, लंका-अस्सी मार्ग
वाराणसी-२२१००५ (उ०प्र०)
फोन : ३६६७५४


प्राचार्य-
श्रीरामाचारि संस्कृत स्नातकोत्तर महाविद्यालय, वाराणसी

मन्त्री-
श्रीकाशी विद्वत्परिषद् वाराणसी

संस्थापक एवं संचालक-
राष्ट्रिय सांस्कृतिक चेतना संस्थानम्, वाराणसी

संस्थापक एवं संचालक-
माँ कामाख्या अन्नक्षेत्र, काशी (दैनिक सेवा)

संस्थापक एवं संचालक-
माँ विन्ध्यवासिनी अन्नक्षेत्र सेवा समिति, विन्ध्याचल

संस्थापक एवं संचालक-
माँ कामाख्या अन्नक्षेत्र सेवा समिति, गोहाटी

संस्थापक एवं संचालक-
भारत शिक्षा सेवा संस्थान अस्सी, वाराणसी

पत्राङ्क........................ दिनाङ्क 30.1.6.12000

श्रीमता बटोहीझा- महोदयेन विरचितं गीतानन्तरसाख्यं पुस्तकं अतिशयेन शोभनं वर्तते। अस्मिन् पुस्तके अनन्तमहाप्रभुमहाभागानां विषये श्रीप्रभुदत्तब्रह्मचारि महोदयेन रचितं हिन्द्यां चैतन्यचरितावली नामकं पुस्तकं, तस्यैव संस्कृतपद्येनानुवादः कृतः। कस्यचिदपि मौलिकग्रन्थस्यानुवादः तथाऽऽनन्दप्रदो न भवति यथा मौलिको ग्रन्थो भवति, तथापि श्रीझा महोदयस्यायमनुवादो मौलिकायते। नात्र संशीतिलेशः।

अहमस्य पुस्तकस्य प्रचारं प्रसारं च कामये।

अखिलानन्दशास्त्री
मन्त्री
श्रीकाशी विद्वत्परिषदः
वाराणसी

श्रीमता बटोहीझा- महोदयेन विरचितं गीतानन्तरसाख्यं पुस्तकं अतिशयेन शोभनं वर्तते। अस्मिन् पुस्तके अनन्तमहाप्रभुमहाभागानां विषये श्रीप्रभुदत्तब्रह्मचारिमहोदयेन रचितं हिन्द्यां चैतन्यचरितावलीनामकं पुस्तकं, तस्यैव संस्कृतपद्येनानुवादः कृतः। कस्यचिदपि मौलिकग्रन्थस्यानुवादः तथाऽऽनन्दप्रदो न भवति यथा मौलिको ग्रन्थो भवति, तथापि श्रीझामहोदयस्यायमनुवादो मौलिकायते। नात्र संशीतिलेशः।

अहमस्य पुस्तकस्य प्रचारं प्रसारं च कामये।

**अखिलानन्दशास्त्री**
मन्त्री
श्रीकाशीविद्वत्परिषदः
वाराणसी।

एतच्छुभाशंसनपत्रोत्तरे मदीयं तदभिनन्दनम्-

सौजन्येन समन्विताः सहृदयाः सन्तो महान्तो नरा
विद्यन्ते विचरन्ति चावनितले घोरेऽपि काले कलौ।
तेष्वेकः प्रियनामकः सदखिलानन्दाख्यशास्त्री महा-
राजः श्रीभगवद्गुणानुवदनैर्गीतैः प्रदत्ते रसम्।।१।।

काशीसंस्थितिशैवभक्तिभगवत्सत्प्रीतितोऽमुष्य नुः
शास्त्रे पण्डितता समस्तहितता सेवारसाऽऽस्वादता।
काशीपण्डितकर्म भारतमहीमध्ये हरेः कीर्तनं
कामाख्याजगदम्बिकास्थिररतिर्वैशिष्ट्यमस्याद्भुतम्।।२।।

अन्नक्षेत्रपथेन यात्रिकसतां सेवां गृहस्थोऽपि सन्
स्थाने तीर्थधरासु चालयति च स्थाने भ्रमित्वाऽधनी।
श्रीमत्कीर्तनमण्डली सुमनसो विद्यार्थिनामावली,
यस्यामल्पवया मधुस्वरयुता प्राणायतेऽस्याऽऽत्मजा।।३।।

एवं सात्त्विकसौहृदादिगुणवान् साधुस्वभावो महाँ-
ल्लोको भागवतो भुवीह विरलस्तत्सोऽखिलानन्ददः।
"गीतानन्तरसं हि मौलिककृतिः" साधोः समीक्षाऽक्षरै-
र्धन्योऽयं पथिकस्तदीयमहिमस्थाने नतो नौति तम्।।४।।

अखिलानन्दशास्त्रीजी चिरमस्तु तथाऽऽचरन्।
सुजनः सद्गृहस्थश्च सात्त्विकः सत्कृतिः कृती।।५।।



विन्ध्याचलस्थ-श्रीविन्ध्यवासिनीसमुपासक-कविवर-सहृदयविदुषां श्रीदुर्गादत्त-उपाध्यायमहानुभावानाम्-

**पण्डा दुर्गादत्त उपाध्याय** 'दत्त'
साहित्याचार्य, साहित्यरत्न
साहित्य विभागाध्यक्ष (प्राध्यापकाश.)
संयुक्त संस्कृत महाविद्यालय (स्नातकोत्तर)
बरियाघाट, मीरजापुर (उ०प्र०)

निवास
दुर्गा निकेतनम्
विन्ध्याचल, (धानकूप)
मीरजापुर (उ०प्र०) २३१३०७
दूरभाष-(०५४४२)-४२२५८
दिनांक १५-२-२००१ई०

आयुष्मते बटोही झा शर्मणे
शुभाशंसनानि।

मुजफ्फरपुरस्थविश्वविद्यालये सम्पन्नात् पुनश्च-र्योकार्यक्रमात् परावर्तितेनायुष्मता शिशिरचन्द्रेण भवदीयं वृत्तं ज्ञातम्। 'गीतानन्तरसम्' काव्यस्योपरि कतिचयमासेषु व्यतीतेष्वपि किमपि वाक्यं नाऽलिखम्, इत्युपालम्भोऽप्याकर्णितः। तेन लज्जमानः सत्वरं द्वे पद्ये लिखित्वा भवदन्तिकं प्रेषयामि। अनयोः पद्ययोरुपरि स्वकीयं प्रतिक्रियापत्रं सत्वरं प्रेषयतु भवानित्यर्थये।

तदित्थम् —

श्रीचैतन्यमहाप्रभोः सुचरितं सद्भक्तिभावान्वितं,
'गीतानन्तरसम्' निपीय मधुरं मोमुद्यते मे मनः।
कर्ताऽस्य प्रथितस्य शाश्वतरसस्फोटस्य काव्यस्य 'झो'-
पाख्यो भावविभावितः स जयताच्छ्रीमद्बटोही कविः।।

सौम्ये यन्मुखमण्डले स्फुटतरं सारल्यमुद्योतते,
कण्ठे यस्य मनोहरः सुमधुरं पुंस्कोकिलः कूजति।
यद्वक्त्रं सुतरां च चुम्बतितरां काव्यात्मिका भारती,
सोऽयं पण्डितभालपट्टमुकुटो जीयाद् 'बटोही' सुधीः।।

— पण्डा दुर्गादत्त उपाध्यायः 'दत्त'

कदाचिन्नवरात्रावसरे भवति समागते सति स्वकीयं काव्यपुस्तकं "विन्ध्यकाव्यसौरभम्" दास्यामि भवते। दुर्गादत्तः।

पुनश्च — गते आश्विने नवरात्रे 'गीतानन्तरसम्' इत्यस्य काव्यस्य द्वितीयो भागोऽभवता दत्त आसीत्। मुजफ्फरपुरेऽपि पुनरपि द्वितीयो भाग इव शिशिरचन्द्रेण दत्तः। प्रथमो भाग आगमनकाले ज्ञा-गन्तव्यं इत्यपेक्षा — दुर्गादत्तः।

श्रीचैतन्यमहाप्रभोः सुचरितं सद्भक्तिभावान्वितं,
'गीतानन्तरसम्' निपीय मधुरं मोमुद्यते मे मनः।
कर्ताऽस्य प्रथितस्य शाश्वतरसस्फोटस्य काव्यस्य 'झो'-
पाख्यो भावविभावितः स जयताच्छ्रीमद्बटोही कविः।।

सौम्ये यन्मुखामण्डले स्फुटतरं सारल्यमुद्योतते,
कण्ठे यस्य मनोहरः सुमधुरं पुंस्कोकिलः कूजति।
यद्वक्त्रं सुतरां च चुम्बतितरां काव्यात्मिका भारती,
सोऽयं पण्डितभालपट्टमुकुटो जीयाद् "बटोही" सुधीः।।

- पण्डा दुर्गादत्त उपाध्यायः



तन्मधुपद्यरसाप्लुतस्य ममोद्गारः-

यद्यप्यत्र विशालसौम्यहृदयाः प्राज्ञा भवन्ति क्षितौ,
तेषां किन्तु महात्मनां परिचयप्राप्तिर्हि सौभाग्यतः।
भूयस्तेषु कलौ च घोरसमये सत्स्नेहवात्सल्यवान्
पूर्वाज्ञातजने तु योऽत्र मिलते, धन्याऽमुनेयं धरा।।१।।

सद्वंशोद्गतपूतपूर्वजतपःसद्देशवासस्तथा
संस्कारोऽमलधर्मकर्ममिलितः सज्जन्मजन्मान्तरात्।
एतेषां फलमस्ति विन्ध्यधरणीदेवीकृपामण्डितो
'दुर्गादत्त'-सुनामधन्यमतिमान् पण्डेत्युपाध्यायजी।।२।।

चैतन्यचारुकथया च रसेन गीता-
नन्तप्रियेण मुदितोऽत्र यथा दिदेश।
पद्यद्वयेन मधुरेण सुधीरदत्तो,
धन्योऽत्र तेन पथिकोऽधिगतप्रसादः।।३।।

श्रीश्रीलचैतन्यपवित्रनाम
स्वपत्रमध्ये, मधुराक्षरेण।
उल्लेखितं येन, कृतज्ञतात्मा
नमामि पूज्यं कविपण्डितं तम्।।४।।

श्रीमद्दुर्गादत्तप्रीतिं यो लभतेऽसौ धन्यः।
सद्भावाधारः सत्पात्रं, पात्रत्वं सत्कृपया
सद्देशे भवन्तीह सन्तः, काले तदखिलदीप्तिः।
श्रीविन्ध्याचलयात्रालोकितजगदम्बानुग्रहतः
गङ्गानिर्मलदुर्गादत्तप्रतिभाव्यक्तिः प्रीतिः।।



सम्प्रति श्रीमद्गुरूणां सहृदयवरविदुषां सत्कवीनां शुभाशीः–शंसापत्राणि प्रस्तूयन्ते, येषां समयाभावात्पत्रोत्तराऽदानापराधी तदधमर्णमात्मानं मन्यमानः सदा तदाभारी स्थातुमीहे–

अत्रादौ श्रीमद्गुरुवर्य–पूज्यपाद–वयोवृद्ध–डॉ.श्रीहर्षनाथमिश्र–गीतपद्यात्मक–शुभाशीर्वचनम्–

श्रीः

= शुभाशीर्वचनम् =

(1)

गुणगानं भगवतो भक्तस्य च विधाय यः
करोति समयं स्वस्य सफलं तं नरं स्तुमः ॥

(2)

गौरकृष्ण चैतन्य महाप्रभु- विमलं चरितं मधुरम्
सुकवि 'बटोही' भा संगीतं कान्तं भव्यं रुचिरम् ॥
पायं पायं भक्तिरसं नहि तृप्तिमयन्ते भक्ताः
अहो भक्तिमहिमानं वक्तुं के विबुधा अपि शक्ताः?

(3)

कश्चिच्छान्तं, करुणं कश्चित् कश्चिदद्भुतं कश्चित्
शृङ्गारं, रसराजमवोचत् रसवित् – सर्वविपश्चित्।
गीतगोविन्दं जयदेवीयं चैतन्यस्य च चरितम्,
काव्यमिदं पठतो विभाति मे भक्ती रसराजोऽतुलितम् ॥

(4)

ददती लोकोत्तरमानन्दं कृतिः प्रचारं लभताम्
सत्सु, "बटोही" कवेः प्रशस्ती राकेशं अनुहरताम्।
एवंभूतं चान्यत् काव्यं कृत्वा साहित्याकाशम्
श्रिया समृद्धिं नयतु नयतु च हर्षमनः सुविकासम् ॥

– शुभं भूयात् –

हर्षनाथ मिश्रः
देहलीस्थः

❄

दिल्लीसंस्कृतविद्यापीठ-शिक्षाशास्त्रिगुरुवर-पूज्यपाद-श्रीश्रीधरवासिष्ठ-महाशयानाम्-

प्रो. श्रीधर वासिष्ठः
पूर्व कुलपति श्री लाल बहादुर
शास्त्री राष्ट्रिय संस्कृत विद्यापीठ
नवदिल्ली.

## प्रशस्तिः

स्वस्ति

अनन्तरत्नप्रभवं हि संस्कृतवाङ्मयम्। तस्मिन् अनन्तकालात् काव्यानि, महाकाव्यानि, नाटकादीनि च कविभिः सततं विरच्यमानानि सन्ति। एतस्मिन् प्रक्रमे इदानीन्तनकाले संस्कृतविदुषां परमादरभाजां श्रीमताम् अनन्तलाल ठाकुर महाभागानां प्रेरणया अनन्तानन्दमहार्णवस्य महाप्रभु चैतन्यस्य भक्तिभावमङ्गीकृत्य गीतानन्तरसं महाकाव्यं रसिकानां भक्तिभावसागरे च निमज्जताम् सहृदयानाम् अमन्दानन्दसन्दोह विकासाय वर्तते।

स्वनामधन्यानां परमविदुषां स्वर्गगतानां पण्डित प्रभुदत्त ब्रह्मचारिणां मार्गमनुसरन् कविवरः श्री बटोहीझा महोदयः सरसं भक्तिभावयुतम् इदं काव्यं विरचय्य संस्कृत-वाङ्मयस्य श्रीवृद्धिं कृतवान्। अभिनन्दनीयः अयं कविवरः एतस्मै महते कर्मणे। प्रवर्ततां कविश्रेष्ठस्य डा. बटोहीझा महोदयस्य काव्यसरस्वती अधिकाधिकानि काव्यानि स्रष्टुम्। श्रीधरः वासिष्ठः



दिल्लीस्थ-राष्ट्रियसंस्कृतसंस्थान-प्रथमनिदेशक-स्वनामधन्य-सहृदयकविवर-प्रवचनाचार्य-सहजाऽऽर्यावृत्तगुम्फनप्रवीण-पूज्यपाद-डॉ.श्रीयुतरामकरणशर्म-महानुभावानाम्-

"वसुधैव कुटुम्बकम्"

**INTERNATIONAL ASSOCIATION OF SANSKRIT STUDIES**

**Prof. Ram. Karan Sharma**
**President**

**63, Vigyan Vihar, Delhi-110092**
**India**
**☎: 2150045**

'गीतानन्तरसम्' 6.6.2001

प्रशस्तिचतुष्पदी

पन्था भवतोऽनन्तः
प्रीतिसुमनसो चयैः 'पथिकं' सुहितः।
पाय्यं पाय्यमनन्ता-
मृतरसमनिशं पुरः सरतात्॥
गीतानि गाय सुकवे
प्रभोऽनन्तस्य नूतनानि मुदा।
प्रीणय युगपल्लोकं
स्वात्मानं चापि विश्रान्तः॥
वाणी दिव्या, गीतं
दिव्यं, पन्थाश्च ते तथा दिव्यः।
गन्तव्यं ते दिव्यं
गतिरपि दिव्या कवे भूयात्॥
अवतारय तं भावं
दिव्यं वाण्यां प्रसादसंवलितम्।
सर्वे यथा भवेयुः
प्रेमसुबद्धा मिथः सुहृदः॥

रामकरणशर्मा



परमपावनव्रजधरोद्भूत-श्रीमद्गोपालोपासक-माथुरचतुर्वेदिविप्रतिलक-सहृदयकविवर-पवित्राभिधान-साहित्यशास्त्रधुरीण-श्रद्धेय-डॉ.श्रीकृष्णचन्द्रचतुर्वेदि-सचेतसाम्-


डा. कृष्णकान्त चतुर्वेदी,
प्राचार्य - (साहित्य)
केन्द्रीय संस्कृत विद्यापीठ
B 87 गणेश मार्ग (बापूनगर)
जयपुर (राजस्थान)
302015,


॥ श्रीगोकुलो जयति ॥

स्वच्छा साध्वी सुवर्णा सुललितचरणा संभृता भव्यभावैः
सद्यो गम्या प्रसन्ना सहृदयहृदयाऽऽकर्षिणी स्वीयवृत्तैः।
सोऽश्लिष्टाऽऽनन्ददात्री, किमु वरवनिता काऽपि, नो कृष्णभक्त्या-
भक्ता, श्रीमद्बटोहीकविवरकविता लोकलीलाविरक्ता॥

(2)

मृद्वीकामधुरा कथा यदि हरेः श्रव्या मनोहारिणी
दृश्या चेन्मृदुमल्लिकावच्चरिता काचित् प्रसन्ना कृतिः।
पेया चेद् वसुधास्थितेन भवता लीलासुधा श्रीपतेः
संग्राह्यं तदहो बटोहिविदुषः काव्यं समालोचय॥

इति - सस्नेहम् -
समर्पयति
कृ.का. चतुर्वेदः

प्रतिष्ठानाम् -
श्रीबटोहीझा, महोदयानाम्
लक्ष्मणपुरस्थकें.सं. विद्यापीठोपाचार्याणाम्।

पौष कृ. 1 सोम; सं. 2058 (मकरसंक्रान्तौ)
दि. 14.2.2002



श्रीरामप्रिय-अयोध्यापुरवासि-प्रियगीतप्रणेतृ-कविवर-सहृदयादरणीय-डॉ. श्रीदेवीसहायपाण्डेयमहोदयानाम्-

अयोध्या
11.4.2002

प्रियमान्य:

'गीतानन्तरसं' निपीय सन्तृप्तोऽहमस्य रचनाकारमाचार्यप्रवरं विद्वद्वरेण्यं कविगौरवं श्री बटोही-महोदयं तस्य रचना-धर्मितां प्रति प्रीतिपुरस्सरं भावाञ्जलिं समर्पये —

वटो बटोही कवितावनस्य
पुण्यप्ररोहः कलकल्पनायाः।
गुञ्जन्ति मन्दं रसिकालिसंघाः
गायन्ति गौराङ्गगुणानुवादम्।।
धन्योऽयं तव वाट-बटोही;
गीतानन्तरसेन पूरितः प्रेम-पर्वतारोही।
सहृदयहृदयाह्लादनमेवं कृतं काव्यविस्तारम्;
प्रेममहिम्ना महीयते यत् कथयति चरितमुदारम्।
श्रीचैतन्यचरितचूडितपदप्रेमपयःसन्दोही
धन्योऽयं तव वाट-बटोही
रसनां या रसनाय समर्था वाणी सैव पुनीता;
त्वया चात्र गीता ग्रन्थेऽस्मिन् विद्वद्वर सप्रीता।
धन्यवचः स्वीकारय कोविद काव्यकदम्बारोही।।
धन्योऽयं तव वाट-बटोही।।

भवदीय-

**डॉ. देवीसहायपाण्डेय 'दीप'**

❄ साधनासदनम्, मु. दुराही कुआँ, अयोध्या

मधुराकृति–सौम्यसंभाषण–विनोदोपाधिभूषित–ललिताक्षरसंयोजक–कविहृदय–सहृदय–ज्योतिर्वित्ख्याति–सुकुमारस्वरानन–श्रद्धेय–श्रीयुतरामदेवझाविनोदमनसाम्–

वन्दे मातरम्

**रामदेव झा "विनोद"**
पूर्व प्रवाचक (ज्यो० वि०)
**श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ**
(मानित विश्वविद्यालय)
कटवरिया सराय, नई दिल्ली-११००१६
दूरभाष : ६८६८२७४

आवास - अपराजितावास
ए-२६० शिवालिक, पहली मंजिल,
मालवीय नगर, नई दिल्ली-११००१७
दूरभाष : ६६८२८०१
6682801

दिनांक :..................

प्रियात्मन् !

गीतानन्तरसं पीत्वा राधाकान्तपदाब्जजम् ।
मादृशोऽपि जनः शुल्कः परमो मधुपायते ॥
मन्ये, मधुपवृत्तिस्तु लोभं जनयते सदा ।
गन्धवाहः कथमहं भवेयमिति प्रार्थये ॥
लक्ष्यमालक्ष्य यः कश्चिन्मनोवाक्काय कर्मभिः ।
यतते सततं प्राप्तुं लभते तन्नसंशयः ॥
अव्यक्तं हि वरं व्यक्तादनुभूतिर्यथा तथा ।
भवतः सुकृतिः सेयं तां स्थितिं प्रापयत्वलम् ॥

ज्येष्ठ शुक्ल
[redacted] [redacted] प्रतिपदा
मंगलवासरः
सं. २०५९
दिनांक 11. 6. 2002

भवदीयः -

तुलसीदलमिवैतत्समर्पयेऽहं
रामदेव झा विनोद
गीतानन्तरसायनाय । विद्वत्सुभक्तहृदयाय
श्री (डा.) वटोही शर्मणे

— o —



जम्मूस्थ- संस्कृतविद्यापीठ-प्रशिक्षणविभागाध्यक्षस्य सहाध्यायिनः सुहृद्वरस्य कवित्वशक्तिसम्पन्नस्य बादलोपाधिश्रीयुतवेदनारायणचौधरीमहाभागस्य भाषानिबद्ध-मधुरकोमलकान्तपद्यपदावली–

सुमधुर कोमलकान्त पदावलि, की कलियों से गुम्फित काव्य।
कविकोकिल जयदेवानन्तर, जिसका सृजन सहज सम्भाव्य॥
दृग्गोचर हो नहीं रहा है, जग को इस स्वप्निल भ्रम से।
तूने मुक्त किया है कविवर, अपने तपः पूत श्रम से॥
महामनीषी भक्तशिरोमणि, मधुरा कविता कामिनि-कन्त।
श्री जयदेव-कवीश्वर को हे, कविवर तूने दिव्य अनन्त॥
रस-परिप्लावित अपनी अनुपम, कृति से जनमन में जीवन्त।
फिर से है कर दिया, बना है जिससे गीतकाव्य श्रीमन्त॥
कण-कण वासी नटवर नागर, जिनकी लीलाओं का भेद।
नेति-नेति कह प्रकट किये हैं, ऋषि मुनिगण "औ" चारो वेद॥
उसको अपनी नवोन्मेषिणी, मेधा से तूने साकार।
शब्दों में कर दिया बहाकर, विमल भक्ति की सुरसरिधार॥
हे कविवर यह अनुपमेय कृति, जिसमें तेरी श्रद्धा भक्ति।
पद-पद में गुम्फित है निश्चय, प्रभु पद में निर्मल अनुरक्ति॥
के प्रताप का फल है जो अब, करुणा करके दया निधान।
अवसर के अनुरूप किया है, मुक्तहस्त से तुम्हें प्रदान॥
हरिपदप्रीतिपथारोहण में, आनेवाली हर बाधा।
हरण करेंगे भक्त जनों के, पथ से श्री माधव-राधा॥
कारण एक बार भी मन से, तेरी कृति का अवगाहन।
जो कर लेगा उसे कभी तज, सकते नहीं गरुड़-वाहन॥
जब भी कोई बुद्धि विचक्षण, या प्रभुपदरज प्रेमी जन।
श्री जयदेव महाकवि विरचित, मधुमय गीतों का चिन्तन॥
करने को तत्पर होंगे तो, बरबस उनकी स्मृति में।
आयेगी तेरी छवि "औ" जो, अङ्कित है तेरी कृति में॥
श्रीहरिचरणाम्बुज अनन्त रस, का चिर लोभी षट्पदमन।
को अपने षट्पद स्वरूप का, परित्याग है नहीं सहन॥
इसीलिए षट्दल सरोज में, षट्पदीय निज गुञ्जन बन्द।
करके भेजा है यह मेरा, परम हठी मधुकर मतिमन्द॥

(हस्ताक्षर) चौधरी

डॉ. वेदनारायण चौधरी



एतदनुवादः-

सुमधुरकोमलकान्तपदावलिकलिकागुम्फितमिह काव्यम्।
कविकोकिलजयदेवानन्तरमृजु यद्घटनं सम्भाव्यम्।।
नो भवदास्ते दृग्गोचरमिति, जगदेतत्स्वप्नभ्रमतः।
त्वया कृतं मुक्तं कविवर! हे! स्वात्मतपःपूतश्रमतः।।१।।

महाविपश्चिद्भक्तशिरोमणि-मधुकवितावनिताकान्तम्।
श्रीजयदेवकवीश्वरतिलकं त्वं कविवर! दिव्यानन्तात्।।
प्रतिपदरसपूरितनिजानुपमकृतितो जनहृदि जीवन्तम्।
पुनरिह कृतवानसि, यज्जातं गीतकाव्यमधुना श्रीमत्।।२।।

कण-कणवासी नटवर-कृष्णो, यल्लीलानामिह भेदम्।
"नेति नेति" वचसाऽऽह प्रकटम् ऋषिमुनिवृन्दमखिलवेदः।।
तं निजनवोन्मेषिणीमेधामाध्यमतस्त्वं साकारम्।
शब्देष्वकृथाः प्रसार्य सहृदयविमलभक्तिसरितो धाराम्।।३।।

अनुपमेयकृतिरेषा कविवर! यस्यां ते श्रद्धा भक्तिः।
सत्यं, प्रतिपदमस्ति गुम्फिता प्रभुपदनिर्मलानुरक्तिः।।
तत्प्रतापफलमस्तीदानीं यत्कृपया दयानिधानः।
अवसरानुरूपं कृतवाननु मुक्तहस्तमिह ते दानम्।।४।।

हरिपदभक्तिपथप्रक्रमणे चागन्त्रीर्निखिला बाधाः।
हर्ता भक्तजनानां पथतः श्रीमाधवदयिता राधा।।
यस्मादेकवारमपि मनसा तव कृतिसरितो ह्यवगाहम्।
यः कर्ता, तं कदापि हातुं शक्ता नहि तु गरुडवाहः।।५।।

यदापि कश्चिन्मतिमान् पुरुषो वा प्रभुचरणप्रेमिजनः।
श्रीजयदेवमहाकविविरचितमधुमयगीतानां स्मरणम्।।
कर्तुं भविता सन्नद्धस्तद्धठतः सततस्तस्य स्मृतौ।
त्वच्छविरायास्यति नूनं या ह्यङ्किताऽस्ति तव गीतकृतौ।।६।।

श्रीहरिचरणाम्बुजनिरवधिरसचिरलोभी षट्चरणमनः।
भवति कदापि न निजषट्पदतास्वरूपपरित्यागसहनम्।।
तत्षड्दलकमलान्तः पिहितं षट्पदनिजगुञ्जनममलः।
कृत्वा परमहठी प्रेषितवान् मेऽयं मधुपो मतिविरलः।।७।।

(आदरणीय-'बादल'-कविता- भावलयतानमपूर्वमेव, तदिहानुवादे नायातम्, तथापि संस्कृतानुरागिणां कृते यथाकथञ्चित् किमपि कृतमिति)

वाराणसीस्थ-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याचार्य-पुराणेतिहासविभागाध्यक्ष-साहित्यसंस्कृतिसंकायाध्यक्ष-कविसहृदय-मृदुहृदय-डॉक्टरश्रीगङ्गाधर-पण्डामहानुभावस्य-

Ph#: 0542-202188 (R)

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

डॉ. गङ्गाधर पण्डा
आचार्य एवं अध्यक्ष
पुराणेतिहास-विभाग
संकायाध्यक्ष, साहित्य-संस्कृति-संकाय



Dr. Gangadhar Panda
Professor & Head
Department of Purāṇetihāsa
Dean, Faculty of Sahitya and Sanskriti

पत्राङ्क.................................                दिनाङ्क...13/11/02...............

## MESSAGE

After Nimbārka and Vallabhācārya we take the name of Śrī Chaitanya with pride, as the reformer of Vaiṣṇavism. We don't come across the name of the works written by him for the propagation of Vaiṣṇavism, but we know something about him through the literature of his contemporaries and followers. Many a work were written about him in Sanskrit, Bengali, Oriya and Assame. The famous works on Śrī Chaitanya are Vṛndāvana Dāsa's Chaitanya Bhāgavata, Kṛṣṇānanda Kavirāja's Chaitanya Caritāmṛta, Kavikarnapura's Chaitanya Candrodaya-nāṭaka and Prabhudatta Brahmacarī's Chaitanya Caritāvali.

Dr. Batohi Jha, Reader, Department of Sahitya, Rashtriya Sanskrit Samsthan (Deemed University) Lucknow Campus, Lucknow, has translated the work of Prabhudatt Brahmacharī in poetic form. Śrī Chaitanya is considered as the incarnation of Lord Kṛṣṇa. The importance of the book could be gauged from its lucid and poetic presentation. After Gītagovinda of Jayadeva we come across many composition in its style. The work under reference possesses the same beauty of poetic elegance and embellishment that of Gītagovinda. We can also compare its simplicity with Gītagovinda. To quote:

श्रीमन् हरे द्रवतु राम हरे च राम ।
श्रीराम! राम! च हरे! च हरे प्रसीद ।
प्रेमन् हरे! लसतु कृष्ण! हरेऽत्र कृष्ण!
श्रीकृष्ण! कृष्ण! च हरे! च हरे! सदैव ।।

With this, I acclaim the commendable work done by Dr. Batohi Jha and hope the scholars will appreciate this poetic feast.

        Gangadhar Panda

पण्डा गङ्गाधरतः पेया।
मेधा मेधाविनमिह कुरुते पवते प्रज्ञाऽऽत्मानम्
सिनोति धिषणा धियमात्मात्मनि रसमापयति प्रतिभा।
जन्मान्तरसंस्कारादथ वा साधनया गुरुकृपया
प्रायः सिध्यति मनुजो भूमौ, सिद्धिद्वारं भूमिः।
परमोदारहृदामनुकम्पाऽग्रेसरणे पाथेयम्
यस्या,ऽसौ पथिको गङ्गाऽऽस्थाऽखिलविदुषामाभारी।।

समेषाममीषां श्रद्धेयगुरुपादानां सम्माननीयसहृदयानामादरणीयसुहृदां कृतज्ञता-भारावनतो विनतो नौति तदसीमाऽऽशीःसौजन्यसौहार्दशुभाशंसनमयं प्रमाता पथिकः।

सौहार्दस्पृही-
बटोही



# संस्मृतिः

द्वितीयखण्डानुवादकार्यमध्ये दरभङ्गातो गुरुवर्यश्रीयुतहरिहरझामहानुभाव-कुशलाशीःपत्रं (१६.६.१९९९ ई. दिनाङ्काङ्कितम्) समधिगतम्। तेनावगतम्-पुरीसंस्कृतविद्यापीठे २००० ईशवीयेऽगस्तमासे गुरुपाद-श्रीझामहोदयाभिनन्दनं विधातुं तत्रत्यैर्विद्वद्भिः संकल्पितमस्तीति। तत्पत्रपठनक्षण एव तथानुवादकार्य-व्यापृतस्य मे मनसि भावनेयमुद्गता-समयेनानुवादकार्यमिदं पूरयित्वा तन्मुद्रणादिकं विधाय पुस्तकस्य विमोचनं पुरीमध्ये श्रीगुरुपादाभिनन्दनसमारोहे तत्रस्थभगवत्पाद-श्रीशङ्कराचार्यकरकमलाभ्यां सम्पादनीयमिति। श्रीपुरीक्षेत्रं महाप्रभुगौराङ्ग-लीलाऽन्तिमावासक्षेत्रमिति पुरीमध्ये तत्पुस्तकविमोचनाभिनिवेशकारणम्। श्रीभगवज्जगन्नाथकृपयाऽनुवादकार्यं यथा-तथा समयेन सम्पन्नम्। ततो मुद्रणादिना पुस्तकं 'गीतानन्तरसम्' (द्वितीयखण्डम्) विमोचनार्थं प्रस्तुतं जातम्। किन्त्विदं मम मनःकल्पितं पुस्तकविमोचनकार्यमभिनन्दनीयगुरुमहानुभावस्य तथा पुरीविद्वज्जनस्यासूचितमासीत्।

सुसंयोगात्तथाभिनन्दनसमितिसचिव-श्री-उदयनाथझामहोदयप्रेषितं पत्रं मां निर्दिशति-'दिल्लीस्थः प्रख्यातविद्वद्वरेण्यः श्रीवेदानन्दझामहाशयः प्रस्तावित-भिनन्दनसमारोहस्य विशिष्टातिथिर्विद्यते। तस्य दिल्लीतः पुरीं याव,त्पुनः सम्पन्नेऽभिनन्दनसमारोहे पुरीतो दिल्लीं यावद् गमनागमनानुसङ्गिना लखनऊवासिना त्वया भवितव्यम्'। ततो दरभङ्गातो गुरुमहानुभावस्यापि तथाशयं पत्रमधिगतम्। एतदाशयादेशं विलभ्य मन्मनः प्रफुल्लितम्। श्रीजगन्नाथपुरी-प्रवेशसुयोगः, श्रीमद्गुरुपादाभिनन्दनसमारोहामन्त्रणं तदपि श्रीमद्वेदानन्द-झामहानुभावानुसङ्गिनो मम स्वकीयपुस्तकविमोचनमनोरथपूर्तौ सत्कारणमालायोगः।

अपेक्षिततिथौ लखनऊतो दिल्लीं गत्वा ततः श्रीमद्वेदानन्दझामहानुभावानुसङ्गी पुरीं प्राप्तः। तत्र प्रथमतो गुरुपादश्रीहरिहरझामहाशयदर्शनाशिषं लब्धवान्। आवयोरावासव्यवस्था तत्रस्थगोवर्धनपीठाधीश्वर-भगवत्पादशङ्कराचार्याश्रमे विहिताऽऽसीत्। पत्रद्वारा मया पूर्वमेव कलकत्तावासी चिरञ्जीवी गिरीशमिश्रः सङ्केतितोऽभूत्। भगवत्पादपुरीशङ्कराचार्यकरकमलद्वारा तत्स्वर्गीयपूज्यपितृपाद-विरचितमैथिलीगीतसंग्रहस्य गिरीशप्रकाशितस्य 'शिवनाथरचनावलि'-पुस्तकस्य विमोचनं कदापि नूनं कारयिष्यामिति मया वचनं कलकत्तानगरे दत्तमासीत्पूर्वम्। इति कृत्वाऽऽहूतो गिरीशः पुस्तकसहितो निश्चिततिथौ समागतस्तत्रैवा-श्रमपदेऽतिष्ठत्।

श्रावणीपूर्णिमा-रक्षाबन्धनपर्वणि स्वतन्त्रतादिवसे श्रीमद्गुरुपादहरिहरझामहानुभावाभिनन्दनं महासमारोहेण सुसम्पन्नम्। द्वितीयदिवसे गोवर्धनपीठाधीश्वर-भगवत्पादशङ्कराचार्यश्रीनिश्चलानन्दसरस्वतीमहाराजः स्वाश्रमे समाहूतविद्वन्मण्डल-मध्ये गुरुपादाभिनन्दन-महोत्सवमायोजितवान्, सर्वेषां प्रसादग्रहणप्रबन्धमपि तत्रैव निजपक्षतः कृतवान्।

तत्र गुरुपादाभिनन्दनोत्सवे श्रीवेदानन्द-श्रीजयमन्तमिश्रप्रभृतिविद्वदुपस्थितौ भगवत्पादशङ्कराचार्य-गोवर्धनपीठाधीश्वर-स्वामिश्रीकरपात्रीजीमहाराजप्रवरशिष्य-वेदान्तादिसमस्तशास्त्रपारङ्गत-महाभागवत-श्रीनिश्चलानन्दसरस्वतीमहाराजस्य करकमलाभ्यां मम गीतानन्तरस-द्वितीयखण्डस्य तथा गिरीशप्रकाशितस्य शिवनाथरचनावलिपुस्तकस्य विमोचनं लोकार्पणञ्च सुसम्पन्ने। विमोचनानन्तरं विद्वत्समाजे पुस्तकं चोपहृतम्।

तत्राश्रमे स्थितो दिनद्वयं श्रीशङ्कराचार्यमुखारविन्दान्मधुरं श्रीभागवतकथा-श्रवणमपि कृतवान्। तद्यात्रायां महाप्रभुगौराङ्गस्यान्तिमलीलावासस्थलं गम्भीरामन्दिरमपि गत्वाऽवलोकितवान्। अस्माभिर्यावत्स्थितम्- प्रसादग्रहणव्यवस्था श्रीशङ्कराचार्याश्रमे त्वेवासीत्। स्वयं भगवत्पादः प्रसादग्रहणावसरे संस्थितः पङ्क्तिमध्ये परिभ्रमंश्च परिवेषणादिकं निरीक्षमाणोऽभूत्। अभिनन्दनप्रथमदिवसे समेषामाहूतविदुषामभिनन्दनानुरागिसुहृदां दिनभोजनप्रबन्धः पुरीविद्यापीठभवने गुरुपादश्रीझासमक्षव्यवस्थायामासीत्। तदातिथ्यसत्कृतिरूपं सुप्रसिद्धमेव।

ततः पूर्णमनोरथो गिरीशः कलकत्तानगरं प्रस्थितः। तथा सर्वविधं भगवच्छ्रीजगन्नाथप्रसादं लब्ध्वा गुरुपादश्रीझामहाशयाशिषमधिगम्य तदीयाभिनन्दनग्रन्थसहितः श्रीमद्वेदानन्दझामहाशयानुसङ्गी पुरीतो दिल्लीं प्राप्तवानहम्। ततस्तदाशीर्विसर्जितो लखनऊनगरमागतः। अभिनन्दनसमारोहे लखनऊविद्यापीठादागतो मित्रवरः श्रीलोकमान्यमिश्रः पुरीमध्ये कानिचित्स्थलानि स्ववाहनेन दर्शयामास, पुरीविद्यापीठस्य व्याकरण-विभागप्रवाचकश्रीसुरेन्द्र-पाठकमहाशयेन समं परिचितं कारितवान्। यतो लखनऊनगरमागतोऽधुना पाठकमहाशयः पूर्वपरिचितं मां संगृहीतवान्। अभिनन्दनसमारोहभागग्रहणे गुरुपादश्रीझामहानुभावनिर्देशित-श्री-उदयनाथझासौहार्ददिशमेव मुख्यं हेतुं मन्ये। ततोऽहं भूरिशस्तत्कृतज्ञतां प्रकाशयामि। तन्मध्ये बहु पत्रमुदयनाथझा-सुन्दराक्षराङ्कितं लब्धम्। येन मनो मुदितं भवदासीत्। एवं श्रीगुरुपादाभिनन्दनक्रमे गीतानन्तरस-द्वितीयखण्ड-विमोचनवृत्तान्तः।

दिल्लीतः पुरीमार्गे वार्ताक्रमे श्रीवेदानन्दझामुखारविन्दाद् वृन्दावनवासिनो गुरुवृद्धस्यामीरचन्द्रशास्त्रिपादस्य गोलोकनिकुञ्जनित्यवासगमनोदन्तमुपलभ्य बहु

दुःखितं मनः। यद्यपि परमवृद्धावस्थायामासीदेव स, किन्तु समये तदुदन्तसूचनाऽनुपलम्भादतिखिन्नः पुरीतो दिल्लीं प्राप्य तदात्मजश्रीशरच्चन्द्रमहोदयं मिलितवान्। तत्र तन्मुखात्सविस्तरं श्रीगुरुशास्त्रिपादपरलोकप्रस्थानवृत्तान्तमधिगतवान्। मत्पार्श्वस्थं श्रीगुरुहरिहरझामहाशयस्याभिनन्दनग्रन्थमवलोक्य तेनोक्तम्–'पितृपादस्मृतिग्रन्थप्रकाशनं करिष्यामि'। यतो मनः प्रमुदितम्। तन्मुद्रणावस्थायां प्रेसमध्येऽधुना विलसति।

तद्वर्षाभ्यन्तरे २००१ ईशवीये चाकस्मिकं पण्डितप्रवरपरमश्रद्धेयश्रीमद्वेदानन्दझामहाशयस्य भूलोकात्प्रस्थानमभूत्। संस्कृतविद्वत्समाजस्य तत्रापि मैथिलानां कृते तदकल्पितासामयिकमहाप्रस्थानं महती क्षतिरासीत्। तदनुरागिणामस्माकं तु महाशोकविषयः। किन्तु दैवेच्छा बलवती, अस्तु, लखनऊसंस्कृतविद्यापीठायोजिततच्छ्रद्धाञ्जलिसभायां मदीयोद्गारः–

**शास्त्राध्यापनचिन्तनात्मसतताऽऽवेशस्तथा धीमतां**
**नो दृष्टः श्रुत एव तुल्यवयसां यावत्तु तस्याधुना।**
**योगी कोऽपि च भोगिनोऽधिकतया लोके परे रोगिणो,**
**वेदानन्द-नरात्मभूमितिलकाः सत्प्रेमिणः केऽपि कौ ।।१।।**

**दिवङ्गतानामपि तादृशानां**
**स्वकर्मनिष्ठाऽमृतजीवनानाम्।**
**श्रद्धाञ्जलिः संस्कृतपीठमध्याद्**
**वितीर्यते सत्प्रवणात्मभावैः।।२।।**

परमश्रद्धेय-गुरुवरवृद्धपण्डित-श्रीमदनन्तलालठाकुरसत्प्रेरणया प्रवृत्तेन कृते गीतानन्तरसे गुरुवरश्री-अमीरचन्द्रशास्त्रिशुभाशंसोपोद्बलितेन जाते तद्द्वितीयखण्डे गुरुवरश्रीहर्षनाथमिश्रघटितामुखोत्साहितेन मया सम्पन्नस्य तत्तृतीयखण्डस्याधुना प्रकाशनावसरे तेषां समेषामन्येषाञ्चापि गुरुवर-सुधीजन-सहृदय-शुभाशंसिनामयं प्रमाताऽधमर्णः स्वाभारं प्रकाशयति। तृतीयखण्डस्यास्य सन्दिग्धस्थल-संशोधने स्वसहधर्मिणः प्रवाचकस्य डॉ.श्रीविजयपालशास्त्रिणो वैयाकरणत्वोपयोगः कृतः। ततस्तत्कृतज्ञोऽस्मि।

नवदिल्लीस्थ-राष्ट्रियसंस्कृत-संस्थानस्य निदेशकमहोदयस्य पण्डितवरस्य विचक्षणपुरुषस्य डॉ.श्रीकुटुम्बशास्त्रिमहानुभावस्य सततप्रयासेन संस्थानं मानितविश्वविद्यालयपदवीमधिययौ। ततोऽयं शास्त्रिपादः साधुवादार्हो, यत्संस्थानशाखा-लखनऊपरिसरे समुद्गते गीतानन्तरसस्य तृतीयखण्डमिदं प्रकाश्यते।

तत्रैव संस्थाने प्रकाशन-विशेषकार्यरत-वैयाकरण-प्रवाचक-डॉ.श्रीललितकुमार-त्रिपाठिमहाशयस्य प्रोत्साहनं प्रकाशनेऽस्मिन् तथोल्लेखनीयं यथा तत्साधुवादार्पणमपरिहार्यम्।

दोषज्ञाः संशोधनक्षमाः सहृदयाः पूर्ववन्निजौदार्यसौहार्दभावमर्पयिष्यन्ति मेऽर्थनेति।

अन्ते मिहिरप्रतिभासुमनसां संततीनां तन्मातृसुमेधायाश्च सौहार्दयोगं विना कार्यपूर्तिरिवासम्भवा, ततस्तेषामपि कृतज्ञतोल्लेखनीया।

तृतीयखण्डेऽस्मिन् महाप्रभुगौराङ्गदेवो गृहस्थाश्रमतः संन्यासाश्रमे प्रविष्टः 'कृष्णचैतन्य'-नाम्ना नवद्वीपात् पुर्यामागतः श्रीजगन्नाथनिरन्तरेक्षणलोलुपः स्थायी तस्थौ। तत् 'पुरी-चैतन्यखण्ड'-मिति तृतीयखण्डस्यास्य नाम युज्यते।

गोकुलझामहोदयस्य विवाहः फेकूझामहाशयस्य भगिन्या सह बभूव। ततस्तस्य द्वौ पुत्रौ संजातौ-भोकरणझा, अनन्तझा चेति। मम प्रपितामहो भोकरणझा निजमातुलात् फेकूझामहाशयात् खराजग्रामे वासभूमिं लब्ध्वा खराजग्रामवासी सानुजो बभूव। फेकूझाऽऽत्मज-बौआजीझामहोदयेन तस्य गाढं भ्रातृत्वसौहार्दमासीत्। अहं प्रपितामहं पितामहञ्चापि नो लोचनगोचरीकृतवान्। यत्तयोर्दिवङ्गतत्वे ममोत्पत्तिः। किन्तु स्वप्रपितामह-मातुलेयस्य श्रीबौआजीझा-महोदयस्य बहु स्निग्ध-सौहार्दभावमवाप्तवान्। अस्माभिः स 'गाम-बाबा'-पदेन संबोध्यते स्म। तस्य केवलं तृतीयपत्न्याः संततिः प्रचलति। तन्नाम राजेश्वरी देवी। तद्द्वितीयपुत्र-श्रीप्रबोधझा ममैकवर्षज्येष्ठः सहाध्यायी तथाग्रजक्षतिपूरकश्चासीत्। यस्योल्लेखः प्रथमखण्डसंस्मृतिभागे श्रद्धाप्रणयपुरस्सरं विद्यते। राजेश्वरीदेवी-मन्मातृगुञ्जेश्वरी-देव्योर्मध्ये सङ्गिनी-पदेन परस्परसम्बोधनं भवति स्म। मम ज्येष्ठपुत्रिकाया जन्मावसरे दिल्लीनगर्यां ग्रामादागत्य सा राजेश्वरीदेवी तल्लालनं सस्नेहं प्रभूताशंसया कतिपयमासं कृतवती। एवं प्रपितामहादारभ्य पुत्रिकापर्यन्तं तत्परिवारस्य विपुलोपकारभारं स्वेऽङ्गीकरोमि। सा राजेश्वरीदेवी वर्षेऽस्मिन्नेव पौषमासाऽमायां तिथौ २००२ ईशवीय-जनवरीमास-१३ दिनाङ्के दिवङ्गता। तत्स्मृतौ गीतानन्तरसस्य तृतीयखण्डमिदं सश्रद्धं सप्रणयमर्पयामि तत्तृप्तिप्रीति-प्राप्तिसद्भावनया-

**जायन्ते कौ विलीयन्ते भूतानीह क्षणे क्षणे।**
**शुद्धस्नेहप्रदीपस्य हृदो बोधस्तु दुर्लभः॥**

हरिप्रबोधिनी-एकादशी
१५.११.२००२ ई.

सुहृत्तृषः
बटोही



# रसार्पणम्



(दिवङ्गता राजेश्वरी देवी)

देवी राजेश्वरी पूज्या कुलस्य नो दिवङ्गता।
आप्त्वा पान्थार्पितं प्रीयाद् 'गीतानन्तरसं' रसम्।।

शुभाशंसा

नीलाचलनिवासाय नित्याय परमात्मने ।
बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ॥

संस्कृतमाता अस्माकं पुरतः अनेकासु विधासु विलसति । वैदिकवाङ्मयस्य स्वरूपं तद्भाषायां च यद्यपि काठिन्यमनुभूयते तथापि पद्यात्मकस्वरूपं विशेषतः सामगानं चेतो रञ्जयति । वेदात्परं लौकिकसाहित्यस्य आस्वादनम् अभूतपूर्वं किमपि ब्रह्मानन्दसहोदरत्वं बिभर्ति । महाकाव्यानन्तरं गीतकाव्यं शाश्वतानन्दसन्दोहं प्रदाय देदीप्यमानं रत्नमिव पुरतो नो विभाति । एतादृशेषु गीतकाव्येषु कालिदासस्य मेघदूतं सहृदयहृदयेप्सितम् अधिकतरम् आह्लादकारकं च विराजते ।

तदनु श्रीजयदेवकविविरचितं सर्वजनहृदयसंवादि भक्तिरसविह्वलितं गीतात्मकरूपं गीतगोविन्दं संस्कृतमातुः शोभाम् अतितरां वर्धयति । गेयरूपमस्य भारतस्य प्रतिकोणं विजृम्भति । उत्कले, बङ्गे, गुर्जरे, महाराष्ट्रे, दाक्षिणात्येषु सर्वेषु च प्रान्तेषु काव्यस्यास्य गायनशैली स्वस्वपरम्परामाभेडन मूर्तिमयी सती जागर्ति । वरीवर्ति चास्य प्राधान्यं पुरुषोत्तमक्षेत्रे श्रीजगन्नाथमन्दिरे नित्यनैमित्तिकपूजापद्धतिषु ।

केचन भक्तिरससिद्धा आलङ्कारिका मधुररसममुं बहु मन्यन्ते । एतेषां मते मधुररस एव प्रकृतिरसः । सर्वेषां रसानां मूलम् । शृङ्गारादयः सन्ति विकृतयोऽस्य ।

रससिद्धकवीश्वरेण श्रीमता बदोहीका-शुभोदयेन प्रणीतं एतादृशमेव भक्तिसाप्लावितं

श्रीचैतन्यचरितामृतनिर्झररूपं गीतानन्तरसकाव्यस्य भागत्रितयमपि मया समालोचितम्। भावग्राहिणा श्रीझा-महाकविना महाप्रभोः भावभूमिः मौलिकतया प्रतिरूपिता। सिद्धहस्तेन कलाकारेण कविना अविकलतया चित्रिता सा भक्तिधारा सर्वातिशायितया निमज्जयति सहृदयजनान् काव्यानन्दसागरे। काव्येऽस्मिन् न केवलं वैष्णवभक्तिरेव अवतारिता किन्तु गीतगोविन्दस्य मधुरकोमलकान्तपदावली अपि प्रतिबिम्बिता। एवम् उभयोः पक्षयोः समतोलनम् अत्र काव्ये दृश्यते। इत्थं श्रीचैतन्यस्य प्राकृतं स्वरूपम् अतिप्राकृतत्वेन गीतानन्तरसे सहृदयैः अनुभूयते।

एतादृश महद्गीतकाव्यप्रणयन द्वारा निश्चप्रचं श्रीमता बटोही झा महोदयेन प्रदर्शितः कश्चन नवीनः पन्थाः कविकर्म कुर्वतां सहृदयानां गीतकाव्यरसिकानामुत्साहसंवर्धने। ग्रन्थरत्नमिदं सहृदयानां हृदयावर्जकं भविष्यतीति दृढीयान् मे विश्वासः। शुभाभिनन्दनस्य आशंसनपूर्वकं कविं कार्यं च वर्धापयन् तदीयं सार्वभौमं सार्वकालिकं च प्रचारं प्रसारं च कामये इति शिवम्।

हरिश झा
समवाप्तराष्ट्रपतिसम्मानः
पूर्वप्राचार्यः
श्रीसदाशिवकेन्द्रीयसंस्कृत
विद्यापीठस्य पुरीस्थस्य



# (आमुखम्)

## शुभाशंसा

**नीलाचलनिवासाय नित्याय परमात्मने।**
**बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः।।**

संस्कृतमाता अस्माकं पुरतः अनेकासु विधासु विलसति। वैदिकवाङ्मयस्य स्वरूपे तद्भाषायां च यद्यपि काठिन्यमनुभूयते तथापि पद्यात्मकस्वरूपं विशेषतः सामगानं चेतो रञ्जयति। वेदात्परं लौकिकसाहित्यस्य आस्वादनम् अभूतपूर्वं किमपि ब्रह्मानन्दसहोदरत्वं बिभर्ति। महाकाव्यानन्तरं गीतकाव्यं शाश्वतानन्दसन्दोहं प्रदाय देदीप्यमानं रत्नमिव पुरतो नो विभाति। एतादृशेषु गीतकाव्येषु कालिदासस्य मेघदूतं सहृदयहृदयेप्सितम् अधिकतरम् आह्लादकारकं च विराजते।

तदनु श्रीजयदेवकविविरचितं सर्वंजनहृदयसंवादि भक्तिरसविह्वलितं गीतात्मकरूपं गीतगोविन्दं संस्कृतमातुः शोभाम् अतितरां वर्धयति। गेयरूपमस्य भारतस्य प्रतिकोणं विजृम्भति। उत्कले, बङ्गे, गुर्जरे, महाराष्ट्रे, दाक्षिणात्येषु सर्वेषु च प्रान्तेषु काव्यस्यास्य गायनशैली स्वस्वपरम्परामाम्रेड्य मूर्तिमयी सती जागर्ति। वरीवर्ति चास्य प्राधान्यं पुरुषोत्तमक्षेत्रे श्रीजगन्नाथमन्दिरे नित्यनैमित्तिकपूजापद्धतिसु।

केचन भक्तिरससिद्धा आलङ्कारिका मधुररसममुं बहु मन्यन्ते। एतेषां मते मधुररस एव प्रकृतिरसः। सर्वेषां रसानां मूलम्। शृङ्गारादयः सन्ति विकृतयोऽस्य।

रससिद्धकवीश्वरेण बटोहीझा- शुभोदयेन प्रणीतं एतादृशमेव भक्तिरसाप्लावितं श्रीचैतन्यचरितामृतनिर्झररूपं गीतानन्तरसकाव्यस्य भागत्रितयमपि मया समास्वादितम्। भावग्राहिणा झा-महाकविना महाप्रभोः भावभूमिः मौलिकतया प्रतिरूपिता। सिद्धहस्तेन कलाकारेण कविना अविकलतया चित्रिता सा भक्ति-धारा सर्वातिशायितया निमज्जयति सहृदयजनान् काव्यानन्दसागरे। काव्येऽस्मिन्

न केवलं वैष्णवभक्तिरेव अवतारिता किन्तु गीतगोविन्दस्य मधुरकोमलकान्तपदावली अपि प्रतिबिम्बिता। एवम् उभयोः पक्षयोः समतोलनम् अत्र काव्ये दृश्यते। इत्थं श्रीचैतन्यस्य प्राकृतं स्वरूपम् अतिप्राकृतत्वेन गीतानन्तरसे सहृदयैः अनुभूयते।

एतादृशमहद्गीतकाव्यप्रणयनद्वारा निश्चप्रचं बटोहीझामहोदयेन प्रदर्शितः कश्चन नवीनः पन्थाः कविकर्म कुर्वतां सहृदयानां गीतकाव्यरसिकानामुत्साहसंवर्धने। ग्रन्थरत्नमिदं सहृदयानां हृदयावर्जकं भविष्यतीति द्रढीयान् मे विश्वासः। शुभाभिनन्दनशुभाशंसनपूर्वकं कविं काव्यं च वर्धापयन् तदीयं सार्वभौमं सार्वकालिकं च प्रचारं प्रसारं च कामये इति शिवम्।

हरिहर झा
समवाप्तराष्ट्रपतिसम्मानः
पूर्वप्राचार्यः
श्रीसदाशिवकेन्द्रीयसंस्कृत–
विद्यापीठस्य पुरीस्थस्य

(परमोदाराणां महानुभावानां सहृदयशिरोमणीनां वन्दनीयचरणानां तपस्विनां यशस्विनां परमभागवतपुरुषवराणां पावननाम्नां श्रीमद्गुरुवर्याणां डाक्टरश्रीहरिहरझामहाशयानामाशीर्लब्धुं चिरकालादाकाङ्क्षितम्। अधुना शिवपुरी–काशी–सम्पूर्णकार्तिकमासावधि–तपश्चरताऽमुना गृहिणा गुरुणा शुभाशीःप्रदानानुग्रहो विहितः श्रीजगन्नाथं संस्मरता। तमयं हरिजगन्नाथ–हरविश्वनाथस्फुटानुग्रहं मन्यमानस्तद्गुरुदेव–स्वास्थ्यमनःप्रसादपूर्वकदीर्घायुष्यमनु–नाथति हरिहरौ जगन्नाथविश्वनाथौ–

**कार्तिकपूर्णिमा**
१९।११।२००२ ई.।

**तदनुकम्पितः पथिको**
**बटोही**



# अनुक्रमणिका

## ।। अनन्तरसः श्रीचैतन्यो विजयतेतराम् ।।

# मङ्गलानुस्मृतिः

भानुजाजीवनाधारश्यामभवनौनाविकः ।
यथाकल्परसस्रोतोभारतगोधरावनः ।।१।।

श्रीहर्षनाथगुर्वाशीर्द्वितीयाऽऽमुखलाडितः ।
पुनस्तृतीयखण्डेऽयमनन्तं दोग्धुमुद्यतः ।।२।।

गुरुर्हर्षो नाथः प्रथितमिथिलान्तर्गजहरा-
बुधग्रामोत्पन्नः प्रकृतिवरगम्भीरमतिमान् ।
द्वितीये खण्डेऽसौ निजसहृदयत्वाऽऽमुखदिशा
यतोऽदिक्षत्तस्मान्मम पथि तृतीया रसगतिः ।।३।।

(२००० ई.) शरद्राका पूर्णा कविकृतिकृते कौ तिथिरलं
च सत्यां रेवत्यां कविदिनगतायां सफलता ।
सुयोगः श्रीवत्सो, नुदति निखिलं पान्थमधुना
तथानन्तं गातुं पुनरिह तृतीयं रसनिधिम् ।।४।।

१. पुनरिह यास्यति किं दृक्पदवीं? मम तादृक् चैतन्यः।
रथारूढनीलाचलपतिमुपलक्ष्यामन्दानन्दः
संकीर्तनमध्यान्तःप्रेमस्फुरितनृत्यपरतन्त्रः।
मधुरश्रीहरिपदगायकवरवैष्णवसाधुसमाजैः
परिवृततनुरतनुप्रीतैस्तैरनुभूतः स्फुटमात्मा।।

२. अर्पणमखिलचराचरबन्धोः पादे स्वं करणीयम्।
सर्वपरिग्रहपरित्यागतश्चैकान्तिकनिजहृदयात्
सततं तस्याराधनतायां स्थितिरेवाखिलधर्मः
आसक्त्या सांसारिकसंग्रहकृतिरेवात्राधर्मः।
किन्तु स्वामिन्! धर्मपालनं स्वं कुर्यात्किं क्रीतः ?
क्रीतानामद्यावधि कश्चिच्छ्रुतिङ्गतो नहि धर्मः
स्यात्कश्चित्तेषामपि धर्मः, सोऽपि न मम तु ज्ञातः।
जाने केवलमेतावदेव शरणापन्ननियोजक !
त्वया योजितो यस्मिन् कर्मणि तत्रैवास्मि तु मग्नः।।

# प्राक्कथनम्

३. दुष्करममलात्मा भुवि कुरुते।
प्राप्तं दैहिकयोगसाधनं चलमचलं धनजातम्
विवेकसम्पन्निःस्पृहमनसा यन्मुञ्चत्येकान्तः।
नासीत्पूर्वं न तथेदानीं नाग्रे यत्प्राप्त्याशा
वयन्तु तत्केवलवाञ्छाग्रहमपि मोक्तुं न भवामः।।
श्रीगौराङ्गमहाप्रभोर्भुवि जनिस्तद्बाल्यकालस्तथाऽ-
धीतिः शिक्षणगौरवं ततमहो ! चाध्यापनान्तः पुनः ।
गीतानन्तरसस्य वर्णितमिदं ह्याद्ये तु खण्डेऽखिलं
(स्वप्रेयोरसभूमिकापरिचयापेक्षा प्रमातुः कृते)।।५।।

भक्तैः सार्धममुष्य वङ्गनदियाद्वीपेऽत्र लीलाः कृताः
सम्पूर्णा ननु वर्णिताश्च मधुराधारस्य खण्डेऽन्यतः।
वैराग्यं जनितं विलोक्य सुहृदः संकीर्तनं कुर्वतो
द्वीपे क्षुब्धमनात्मलोकहृदयं कीर्त्या सरन्त्याऽऽत्मनः।।६।।

आसीत्कीर्तनकर्म तत्किमपि नो गौरस्य सांसारिकं,
भूयोऽप्यात्महृदं परं रचयितुं गौरो विशालं प्रभुः।
सर्वं स्वं प्रियबन्धुमद्य च परित्यक्तुं नवद्वीपकं
सोऽयं तिष्ठति चिन्तयन्(हि कृतिभिर्व्यक्तिर्महात्माऽऽकृतिः)।।६।।

जीवान् पाठयितुं स्म चेच्छति पुनस्त्यागस्य पाठं, प्रभु-
प्रेमी दर्शयितुं त्वियेष भगवत्प्राप्त्यै तथाऽवश्यकः।
संसारे निजवस्तुनस्त्वपि परित्यागः प्रियस्य प्रियात्,
संन्यासस्य कथं प्रयोजनमभूत्तस्यान्यथा प्रेमिणः।।८।।

'अद्वैतमार्गसदृशो भवता गृहीतः
संन्यासतः कथमसौ दयितेन दण्डः'?
अद्वैतवृद्धगुरुणा स जगाद पृष्टः
स्पष्टं स्वयं दयितकृष्णहरिर्निमायी।।६।।

४. 'भजनं प्राणपतेर्नहि सुकरं सर्वत्यागाभावे।
द्वैताद्वैतकथा स्वस्थाने त्यागः सर्वस्थाने
परमस्तत्सुखसुखितारूपः स्वीक्रियते प्रियहरिभिः।
भूयो दण्डग्रहणं चञ्चलतरमनसो नियमार्थम्
दण्डः सर्वत्यागिजनस्य स्वान्तःस्थस्मारयिता'।।

अत्यन्तं महदेव श्रीगौरप्रभुसाधोः।
आसीत्तस्य तु सत्यं त्यागोऽलौकिककार्यम्।।१०।।

एतादृक्कथनं यदत्र मुखतस्त्यक्त्वा निजासक्तिकं
कुर्वन् कर्म भवेस्तथा भगवतो विज्ञाय सेवां सदा।
स्वस्त्रीबालसमाजपालनमथ त्यागः पुनः कर्मणो
हेयोऽत्यन्तमपेक्षयाऽर्पणमतेः कर्मक्रियायाः प्रभोः ।।११।।

वीरत्वं किमिवास्ति लोकजगति त्यागक्रियायामहो ?

(नारी नाकं याता गेहं सम्पन्नष्टे।
केशापेतं शीर्षं कृत्वाऽभूत्संन्यासी) ।।१२।।

वार्तेयं सरलाऽधिकैव कथने, टङ्कात्मनः कस्यचित्।
जिह्वाया ननु चालने नृवपुषोऽसाधोर्लगत्येव किं ?
दृष्टान्तं जनकस्य (पश्यतु तु यं) जल्पन् स एवायते ।।१३।।

एषामत्र विदेहमैथिलमहाराजापदेशाज्जगत्-
सक्तानान्तु महानुभावमनसामुक्तोक्तिकस्योत्तरम्।
दानं व्यर्थकमेव, सुप्तिकपटं कृत्वाऽस्तु जाग्रत्तु यः
कस्तं जागरयेद् (भवार्णवजले प्रायो हि मग्नः सुखी)।।१४।।

त्यक्तासक्तिजनस्य कर्मजगती वैव स्वतो लीयते,
सम्प्रत्यस्तु, जहि प्रसङ्गमरसं त्वेतं तथाप्रस्तुतम्।
अस्माकं परमार्थमार्गपथिकेष्वेवास्ति तु प्रार्थना,
(भिन्नस्तिष्ठतु लौकिकोऽत्र परमस्त्वर्थोऽस्ति साधारणः)।।१५।।

यल्लक्ष्यं परमार्थ एव विमलो याथार्थ्यतो जीवने
नास्ते यो विषयोपसेवनमनास्त्यागी तथा घोषितः।
अस्माकं विनयोऽस्ति संसृतिपथाऽसक्तेषु तेष्वेव यत्-
त्यागस्यात्र सजीवमूर्तिरपरा प्रेम्णो विरक्तेस्तथा।।१६।।

श्रीगौराङ्गनिमायिवङ्गनदियाप्रेमावतारी तु य-
स्तस्यैवाद्य महाप्रभोः कुरु मनः संन्यासधर्मे भवान्।
ज्ञातं तद् भविता कियान्ननु कियांस्त्यागो महान् वै महान्
संसारे परमार्थसम्मुखहृदः कार्यः क्रमाज्जायते।।१७।।

त्यागस्य क्षणकं समाहितहृदः कार्या परं कल्पना
गौराङ्गस्य समाहितेन मनसा सद्वस्तुनः स्पष्टता।
लोको मत्तविमत्तमाचरति यद्धेतोः, प्रतिष्ठा तथा
सद्वर्णाश्रमधर्मकर्मकलिता भूव्यापिनी स्याद्वरा।।१८।।

साक्षाच्छ्रीभगवन्तमेव कुरुते मत्वा च यस्यार्चनां
विद्वद्भक्तगणस्तथाहि विविधं यस्यात्र निर्मीयते।
नित्यं नूतनवस्तु भोजनकृते, वात्सल्यमूर्तिर्गृहे
वृद्धाऽऽस्ते जननी ममत्वधरणी मर्त्यात्मकाष्ठाऽपरा।।१९।।

बोधन्ती पतिमेव बुद्धिमतिका सर्वस्वमेवात्मनः
सम्पन्ना नवयौवना गुणगणैः पत्नी त्रिलोकोत्तमा।
एतेषां तृणतुल्यमात्मनि परित्यागं विधाय प्रिये
द्वार-द्वारकभिक्षुरूपभवनं, त्यागः कियान् भारवान्।।२०।।

ज्ञातं स्यादमुनैव चात्र भगवत्प्रीतौ कियद्वै सुखं,
यत्प्राप्त्यै क्षणतस्तथाविधमहो ! त्यक्त्वाऽत्र सौख्यं महत्।
आस्ते काननवासिको भुवि गृहत्यागी महात्मा नर,-
स्तत्सर्वं भविता निमायचिरितेऽद्धा पाठकानां स्फुटम्।।२१।।

संन्यासधर्मोत्तमसाधकोऽतः
संन्यासिचूडामणिराह सत्यम्।
रुदंस्तथा भर्तृहरिर्महात्मा
(बोधानुरागाश्रु सतः प्रतीकम्)।।२२।।

५. 'धन्यः परमज्योतिर्ध्याता।
पूर्वं गिरिकन्दरनिवासिनश्चिन्तयतः स्वात्मानम्
आनन्दाश्रुजलं निःशङ्कं खगः पिबत्यङ्कस्थः।
आयुः परमस्माकं लौकिकनानासुखसम्पत्तेः
अभिलाषक्रमसंकलितायाः क्षायति चिन्तायामिह।

स्वयमपि गौरमहाप्रभुरसितो हरिनामामृतमन्त्रः
इह कलिकाले शोकमोहभयरिपुरमलात्मस्वाद्यः।।

भाव्यन्तो रजनीक्षणस्य, भगवच्छ्रीभास्करस्यागते-
र्वृत्तं सारथिरस्य पादरहितः प्राच्यां मिमीतेऽरुणः।
ईषन्म्लानमिवाथ भाति च निशादेवीमुखं साम्प्रतं
(योगः प्राकृतिके जगत्यपि सुखं, दुःखं वियोगक्षणः)।।२३।।

आकाशे स्वपराभवस्मरणतस्तारागणोऽन्तो यथा
खिद्यन्नस्ति, तथारुणोदयमहो ! मत्वैव सूर्योदयम्।
कुर्वन्तः खगशावकाः कलकलं ते सन्त्यबोधाः क्षणे
संज्ञानौ दिशतः शनैस्तु पितरौ स्वप्तुं तु तेषां पुनः।।२४।।

प्रातःकर्मनिवृत्तिलोभमनसा द्राक्कर्मकाण्डिद्विजाः
स्नातुं सन्ति तथोद्यता, विषयिणस्तं कालमेवाऽमलम्।
अत्यन्तं सुखदं प्रबुध्य शयितुं गाढं पुनः प्रस्तुताः
(सामान्यो रुचिभेदतो हि समयोऽरूपस्तथारूपवान्)।।२५।।

श्रीगौराङ्गमहाप्रभुश्च समये तत्रैव पादौ स्वकौ
मन्दं मन्दमसौ निजप्रियतमापत्नीकवक्षःस्थलात्।
उत्थाप्य प्रियभक्तिहेतुकमहाप्रस्थानकस्योद्यमं
संन्यासाय गृहस्थको हि कुरुते प्रेमावतारी युवा।।२६।।

स्मृत्वा धर्ममथैकदा निजमसौ यातुं भवत्युद्यतो
भूयोऽचेतननिद्रितप्रियतमाऽबोधाऽऽस्यपद्माऽऽत्मनः।
दृष्ट्वा सम्मुखमेव तत्र भवति स्थाने च तिष्ठन् पति-
(र्नारीरक्षणसृष्टिवृद्धिकरणं धर्मो विवाहो हि नुः)।।२७।।

तत्तात्कालिकहार्दभावघटनेऽदोऽजीवमल्लेखनी-
सामर्थ्यं कुत एव, तत्सुचतुरः स्याच्चित्रकारोऽधुना।
एतत्पङ्क्तिविलेखको यदि, पुनर्भाषापदापेक्षया
भावव्यक्तिकरोऽस्य सुन्दरतया चित्रे क्षमोऽल्पं भवेत्।।२८।।

त्यक्त्वा स्वां वनितां तथाहि शयितां तां दुःखिनीं मातरं
भक्तानामसमं ममत्वमधुना विस्मृत्य गौरप्रभुः।
गङ्गापारमयं विधाय कटवास्थानाश्रमे पावने
श्रीमत्केशवभारतीपदमया-(न्त्रा केशवोऽर्च्यः कलौ)।।२९।।

गत्वा च तत्र भवता प्रभुणा कृतं किं ?
खण्डे भवान् प्रथममेव पठिष्यतीह।
प्रागेव तस्य कथनन्त्विह नानिवार्यं
(स्थाने विभावनतया प्रथते हि भावः)।।३०।।

अस्ति श्रीमुरलीमनोहरहरेः श्रीमन्मुकुन्दस्य सन्-
माधुर्ये चरणारविन्दयुगले याच्ञेयमेवाधुना।
एतादृशमतिमन्दसाधनधनापेतस्य साधोर्मम -
श्रीगौरप्रभुसत्पदानुसरणं कुर्वन्नदोजीवने।।३१।।

नाभूत्त्यागपथस्य किन्तु पथिको जन्मान्तरेऽयन्त्वपि
स्याद्दत्तप्रभुसाधुरत्र भगवच्छ्रीवासुदेवाङ्घ्रिके।
श्रीकुन्तीस्वरके स्वरं विनयतः क्षुद्रस्य सम्मेलयन्
वक्तव्यस्य समाप्तिमस्य कुरुते कुर्वन्निमां प्रार्थनाम्-।।३२।।

६. 'अच्युतभक्तिरच्युता काम्या।
भजनं सेवनमनिशं चिन्तनमात्मेन्द्रियसंस्कारः
केवलनरतनुमाध्यमसाध्यस्तन्नरता दुर्लभता।
एवंपावनदृढसंस्कारी यां यां योनिं गच्छति
सर्वस्यामपि तस्यां योनौ भक्तिरपैति ततो नहि।
यो निजधर्मात्क्वापि न विचलति नाथाच्युत ! स स्वामी
नरजनतासेवकताऽऽराध्यो, यच्छिवसुन्दरताप्तिः'।।
(भक्तदासानुदासः प्रभुदत्त-ब्रह्मचारी)

७. मङ्गलमूर्तिर्मुरलीधारी।
श्यामो रुचिरवर्णविन्यासप्रेष्ठोत्तमकमनीयः
चेतोमोहकलोचनरञ्जकसुन्दरसौम्याकारः।
श्यामलतनुवरकटिपीताम्बरचित्रकुसुमवनमालः
आकन्धरलम्बितकृष्णालकशीर्षनीलमायूरः
हरिद्वंशमुरलीपिहितारुणबिम्बफलाधरशोभः।
एवञ्छबलितललितोचितनटवरमधुराकृतिपीतिः
केवलभावुकमधुरोपासकसामाजिकवासनया।।

८. हरिरिह चञ्चलचित्तनिरोधः।
दुःखनिवारणसुखलाभार्थं दिवारात्रमुद्योगः
तथापि दैवपरेच्छाद्वारा दुःखाकस्मिकलब्धिः।
संसृतिचक्रे भ्रमतो जन्तोर्ध्रुवमिच्छितसुखजातिः
दुःखाभावे सुखसद्भावे सत्यपि मनो न विरमति
आनन्दे सच्चित्समुपेते मनोविरामः स्थायी।
श्रीहरिभजनास्वादी लभते क्रमशस्तं विश्रामम्
आश्रयनामा यः परमार्थे, प्रेमाभक्तिर्लोके।।



# गौरहरेः संन्यासार्थमाग्रहः

६. गौरः संन्यासोद्यततरुणस्त्यागप्रेमाऽऽदर्शः।
तृणवत्त्यक्त्वा स्थानाऽऽसक्तिं सामाजिकसङ्कोचम्
लोकस्पृहणीयं सम्मानं स्निग्धं बन्धुसमाजम्।
स्वैकाश्रितनैष्ठिकसद्धर्मान् प्राणप्रियतमभक्तान्
तदेकपुत्रां विधवां वृद्धां जननीं वत्सलतान्ताम्।
पतिव्रतां नवयुवतीं साध्वीं विष्णुप्रियगुणपत्नीम्
कृष्णप्रेमी भगवत्प्रेमाऽऽलोकनहेतुर्जातः।
श्रीप्रभुदत्तो ब्रह्मचारी तच्चरितास्वादयिता
काङ्क्षति निजरचिते तच्छ्लोके "स मे प्रसीदतु गौरः"।।

गौरो मत्तगजेन्द्रतुल्यमधुना तूत्तीर्य भागीरथीं
श्रीमत्केशवभारतीपदकुटीहेतुं द्रुतं श्रीप्रभुः।
जन्मद्वीपधरावयस्यकटवाग्रामोन्मुखः प्रस्थितो,
ग्रामोऽभूत्कटवा तथा त्रिपथगापारे परस्मिन् लघुः।।३३।।

श्रीगङ्गापुलिने तथैव कटवाग्रामस्य दूरं मना-
गासीत्सिद्धसमाश्रयो वटतरुस्त्वेको विशालः पुनः।
निर्मायैककुटीं वटस्य च तरोस्तस्यैव चाधस्तले
संन्यासिप्रवरो निवासमकरोच्छ्रीकेशवो भारती।।३४।।

श्रीमद्भक्तिविरक्तिहृन्ननु महाराजोऽभवद् भारती
ग्रामस्त्रीपुरुषास्ततोऽस्य निखिलाः कुर्वन्त्यलं स्माऽऽदरम्।
तत्कुट्यास्त्वध एव सुन्दरमभूच्छ्रीगाङ्गघाटस्तथा
ग्रामीणाः स्नपनाय चाम्बुभरणायाऽऽयान्ति घाटेऽत्र वै।।३५।।

भारतीयतिवरकुटीं वाटिका लसति परितः।
अस्ति चूततरुघटिता स्माऽतिलोचनसुखकरी।।३६।।

आसीद्गोमयलिप्तपूतललितस्वच्छाश्रमस्थण्डिले
सम्प्रत्यातपकस्तृतासनयतिः श्रीभारती स्वे तथा।
गन्धश्चूतकमञ्जरीमधुमयः स्माऽऽयाति तत्राऽभितः
(शोभावस्तु समानमेव भुवि नः शृङ्गारवैराग्ययोः)।।३७।।

दूरादेव निजाश्रमोन्मुखमसावायान्तमालोकयद्
गौराङ्गं पथिकं महाप्रभुममुं, जातो यथा विस्मितः।
उन्मत्तां गतिमस्य तां यतिवरो दृष्ट्वा मनस्यादधौ
'कोऽयं त्वस्ति विलक्षणाद्भुतमहल्लावण्ययुक्तो युवा।।३८।।

दिव्याभा मुखमण्डलेऽस्य विततास्त्यालोकिता, ज्ञायते-
'देवेन्द्रः स्वयमागतो मम पुरो भूत्वा सुरूपो युवा।
कोऽप्येकोऽस्तु कुमारयोस्तदुभयोः स्वं भ्रातरं वाऽधुना
दृष्ट्वाऽन्वेष्टुमहाऽऽश्रमोन्मुखमिहाऽऽयातो वियुक्तं स्वकात्।।३९।।

साक्षाद्वास्ति सुरूपवानयमहो ! श्रीमांस्तु नारायणो
योऽत्रायाति तथा स्वदर्शनविधेः कर्तुं कृतार्थं हि माम्'।
एवं चिन्तयतीह भारतियतौ स्थाने मनस्येव यद्-
(दिव्यं चिन्तनमेति मानसतले लोकोत्तराऽऽलोकनात्)।।४०।।

क्लिन्नाम्बरयुक्तो गौरः क्षणतोऽयं
भूमौ पतितश्च श्रीकेशवपादे।
चक्रे प्रणतिं वै साष्टाङ्गमवोच-
'न्नारायण' साधु'र्नारायण' शीघ्रम्।।४१।।

एवासीत्पतितः क्षणं बहु सुहृच्छ्रीभारतीपादयो
रोमाञ्चो भवति स्म तस्य निखिले प्रेम्णा शरीरे तदा ।
नेत्राभ्यां सरति स्म चाश्रु सततं, लम्बं निमायी श्वसन्
दीर्घोच्छ्वासमहोऽन्तरे त्यजति च (प्रेमाऽसमोर्ध्वस्थितिः) ।।४२।।

उत्थापयन् प्रभुमयं यतिभारतीजी
पप्रच्छ 'कोऽसि तु सुदर्शन ! सौम्यबन्धो !
प्राप्तः कुतः कथमियन्ननु चाकुलस्त्वं
ब्रूहि स्वदुःखविषयं, भविता निदानम्'।।४३।।

आसीनः प्रभुजी निशम्य यतिकप्रश्नं तथोत्थाय तन्-
मन्दं मन्दमुवाद 'किञ्च भगवन्न ज्ञातवान्मां भवान्।
मन्नामास्ति निमायिपण्डित इति द्वीपे वसामि, स्वयं
तत्रागत्य तथा ममोपरि कृपां चक्रेऽमलात्मैकदा ।।४४।।

भूयो मां गृहिणं कृतार्थमकरोत्स्वीकृत्य भिक्षां पुन-
र्मह्यं प्रार्थनया ददावपि भवान् संन्यासदीक्षावचः।
एतस्माद् भवतस्तथाहि शरणापन्नोऽस्मि सम्प्रत्यहं,
मुक्तं त्वं कुरु मां कृपालुहृदयः संसारदुःखाकरात् ।।४५।।

संसारिबन्धं च विधाय भिन्नं
च्छिन्नं मदीयं, च विधेहि मां त्वम्।
संन्यासिनं मे त्वियमेव याच्ञा
श्रीपादपद्मे भवतो विनम्रा' ।।४६।।

वार्ताऽतीतगता स्मृता प्रभुगिरा श्रीभारतीमानसे
श्रुत्वा चास्य निमायिनाम यतिकश्चक्रे तथालिङ्गनम्।
भूयश्चिन्तयतीह सम्प्रति निजे चित्ते यतिर्भारती
(संसारी परमार्थिको हि कुरुते चिन्तां तथा चिन्तनम्) ।।४७।।

'हाऽमुष्यास्ति तु पण्डितस्य ललितो हेमाभदेहः कियान् ?
रूपं किंविधिकं विलक्षणमहो ! लावण्यमाकर्षकम्।
विद्वत्ता कियती, प्रभुं प्रति कियत्प्रेम प्रगाढं तथा-
प्याप्तोऽयं निकटे ग्रहीतुमधुना संन्यासदीक्षां मम ।।४८।।

एतं कर्तुमहं कथं सहृदयं शक्ष्यामि संन्यासिनं ?
वात्सल्यप्रतिमा तथास्ति जननी वृद्धाऽसहाया गृहे।
तस्याः संततिरेकमात्रमधुनाऽसावेव चन्द्रोपमः
(सत्पुत्री च सदङ्गनाऽत्र भुवने काचित्तथा सत्सुता'।।४६।।

सुश्रीरूपवती पुनश्च युवती पत्नी गृहेऽस्याऽधुना
तत्संतानमपीह नास्ति किमपि त्वग्रे कुलं यच्चलेत्।
संन्यासग्रहणाय चैष पतितो ह्यस्यां दशायामपि,
स्यां पापस्य न भाजनं कथमदःसंन्यासदीक्षार्पणात्' ?।।५०।।

ऊचेऽदश्च विचिन्त्य 'साधुहृदय !' श्रीभारतीजी 'नव-
द्वीपेऽत्रासि निमायिपण्डित! महान् सद्बुद्धिमांस्त्वं स्वयम्।
शास्त्राणां ननु मर्म नास्त्यविदितं शब्दादिविज्ञस्य ते
सम्यङ् नो विषयोपभोगविरतिर्लोके युवावस्थितौ ।।५१।।

अस्मिन्नायुषि तन्निषिद्ध इति नुः संन्यासधर्मग्रहः,
पञ्चाशच्छरदुत्तरं ननु भवेद् भोगाद् विरक्तिर्यदा।
संन्यासाश्रमयानमत्र विहितं भूमौ मुमुक्षोस्तदा,
संन्यासग्रहणस्य तत्तव वयो योग्यं तथास्तीह नो ।।५२।।

धेहि त्वं भजनं ततो भगवतो गेहस्थ एवाधुना
संसारे नहि युज्यतेऽत्र भगवद्भक्तिर्गृहस्थस्य किम् ?
द्वार-द्वारकयाचनार्थगमनापेक्षात्वगेहस्थिते-
(रस्माकं मतमस्ति) भावि भजनं निर्विघ्नतापूर्वकम्।।५३।।

कुत्राप्यत्र तथा तु कुक्षिभरणं कार्यं ध्रुवं देहिनः
स्थातुं क्वापि गवेषणीयमवनौ स्थानं निमायि त्वपि।
तत्त्याज्यं गृहमेव पूर्वघटितं कस्मान्मनुष्यात्मनो
भिक्षार्थं दशविंशगेहगमनादेकत्र भुक्तिः सती ।।५४।।

सम्मतौ मे, गृहम्। त्वं निवर्तस्व तत्' ।।५५।

ऊचे तत्करुणस्वरेण 'भगवन्! हे'ऽत्यन्तमेव प्रभुः
'साक्षादीश्वर एव दीव्यति भवान्नारायणो देहभाक्।
उद्धारं कुरु मेऽत्र मग्नवपुषः संसारिगर्ते भवान्
मैवं सारय मां (प्रपन्नहृदयो जीवः कदाचिद् भवे) ।।५६।।

दत्तं मे वचनं पुरैव भवता तत्पालय स्वं वचो
ह्यस्त्यायुः क्षणभङ्गुरं भुवि नृणां द्रष्टुं क्षमः पूर्वतः।
पञ्चाशच्छरदस्तु को,ऽत्र निखिलं कर्तुं समर्थो भवान्
मुक्त्यै संसृतिबन्धनाद् वहतु मां पार्थोपमं केशव!'।।५७।।

शक्तोऽभून्नहि भारती प्रभुगिरो दातुं किमप्युत्तरं
मौनं स क्षणकं बभूव यतिको (योगी विवेकाऽऽकृतिः)।
एवाऽऽप्तोऽत्र तदन्तरे प्रभुजनिः श्रीभारतीकाश्रमे
भक्तश्रीशशिशेखरादिसहितो नित्योऽवधूतोऽपि सः ।।५८।।

पश्यत्यर्पितजानुमध्यशिरसं तत्र स्थितं स प्रभुं
प्रेम्णाऽधीरहृदो बभूवुरखिला दृष्टे प्रभावेव ते।
श्रद्धाभक्तियुताः प्रणेमुरमलं श्रीभारतीं च प्रभुं
सर्वे तेऽपि तथाऽत्र मूकवदनाः पृष्ठे निषण्णाः प्रभोः।।५९।।

दृष्ट्वा नित्ययतिं जगाद निजकं श्रीपादमत्र प्रभुः
'श्रीपाद ! त्वमितस्तथा समुचितं देशेऽत्र पात्रं क्षणे।
संस्कारं किमकारयिष्यदधुनाऽऽचार्यं विनाऽज्ञः परः ?
सम्पन्नं भविता सति त्वयि परं कर्माऽखिलं शोभनम्'।।६०।।

नित्यो ददौ नोत्तरमस्य किञ्चिद्
वाचो निमायिप्रभुगौरबन्धोः।
अधःकृताक्षिः स बभूव मौनं
(वाचो यमः संयमताऽऽद्यरूपम्।।६१।।

ग्रामीणा दश-पञ्च तत्र जनता तन्मध्ययेवागता
श्रीमत्केशवकाश्रमे (जनभरः कौतूहलात्मा सदा)।
दृष्टं तैः - सुकुमारदेवसदृशोऽत्यन्तं तथैको युवा
संन्यासी भवितुं स्थितो यतिमुखे श्रीमातृगङ्गातटे ।।६२।।

कुर्वन्त्यश्रुविमोचनं कतिपये तत्सन्निधौ च स्थिता
गङ्गाद्वीपनिवासिभद्रपुरुषाः, शोकाब्धिमग्नो यथा।
किञ्चिच्चिन्तयते पुरो यतिवरो, दृष्ट्वा प्रभोरद्भुतं
ग्रामीणस्तदभूच्च विस्मित इव श्रीरूपलावण्यकम् ।।६३।।

एवं रूपमलौकिकं नरतनौ तेजस्तथेयद्बहु
द्वीपेऽद्यावधि तैर्विचारिहृदयैर्नो दृष्टमेवावनौ।
वार्तेयं क्षणतः संसार निकटग्रामेषु सर्वेषु तत्
(काव्यात्माऽस्ति रसश्चमत्कृतिगतिः सोऽप्यद्भुताऽऽधारकः)।।६४।।

श्रुत्वा ख्यातिममुष्य लोकमुखतस्तेजस्विलावण्यवद्-
रूपस्य प्रभुदर्शनार्थमिलिताः प्राप्ता विदूराज्जनाः।
सर्वे स्त्रीपुरुषाश्च वृद्धतरुणाः श्रीभारतीकाश्रमे
तत्रागत्य सबालकास्तु कटवाग्रामस्य चैकत्रिताः।।६५।।

या गेहतो नहि कदापि बहिश्च सस्रु-
र्नार्योऽपि ताः प्रभुनिमायि-निमायिबन्धोः।
तद्देवदुर्लभसुदर्शनकामनातः
प्राप्ता विमुच्य निखिलं यतिकाश्रमान्तः।।६६।।

तत्रैकत्र तथाहि मौनमपरश्चासीन्निषण्णः प्रभु-
स्ते स्वाभाविकरूपतोऽस्य नियमं कञ्चिद् विकीर्णा विना।
केशाः सम्प्रति चात्र तत्र सुहृदः श्यामास्तथाकुञ्चिताः
कुर्वन्त्याऽऽस्यरुचिं ततोऽधिकमपि स्वाकृत्रिमावस्थया।।६७।।

आस्तामूर्ध्वमथोन्नते प्रभुहृदः सम्प्रत्युभे लोचने
क्लिन्नं देहगताम्बरं त्वमनसस्तत्रैव शुष्कं स्थितम्।
पश्यत्यूर्ध्वदृशिर्नभश्च निजके धृत्वा शिरो जानुनि
श्रीनेत्रद्वयकोणतोऽश्रुसरणञ्चासीदजस्रं सतः।।६८।।

नित्यादिप्रियभक्ताः पृष्ठेऽस्यापि निषण्णाः।
कुर्वन्त्यश्रुविमोचं मौनं केऽपि सहायाः।।।६९।।

तद्दृष्ट्वैव पुरस्त्रियः प्रभुसतः श्रीरूपलावण्यकं
जाता मत्तसमाः परस्परमतः शोकप्रकाशं जगुः ।
'हा! माता त्वभविष्यदस्य विरहे स्थात्री कथं जीविता?
(सूर्याचन्द्रसुतो दिवानिशमणिः प्राणो हि मातुर्भवे)।। ७०।।

यस्याः सर्वगुणी सुशीलचरितश्चैवंविधः सुन्दरः
संन्यासी भवितुं तथैकसुतको गेहाद् भवेन्निःसृतः।
प्राणानां धरणे क्षमा कथमसौ माताऽविमाता भवेद्
(धात्री यद्विरहे न जीवितसमा भूयाद्धि माता कथम्?)।। ७१।।

हृन्नोऽस्त्येव यदा दलत्परिचयाभावे तदा याप्यमुं
स्वे गर्भे नवमासकालमदधात्तस्यास्तु सा वेदना।
शक्या नानुमितौ हि कर्तुमपरा, हा! धिग्विधिं योऽद्भुतं
दत्वैवं गुणरूपमस्य च मतिं चक्रे पुनस्तादृशीम्।। ७२।।

दशाऽभविष्यदस्य का तु यौवनस्थितस्त्रियाः'
(शरीरधारिणां भवे वयोऽनुरूपभावना)।।७३।।

कुर्वन्तञ्च तथाश्रुमोचनममुं दृष्ट्वाऽत्र वृद्धाः स्त्रियो
गत्वा तन्निकटे वदन्ति 'सुत! ते प्राप्तं दृशीदं तु किम्?।
मातुस्तेऽत्र दशा भविष्यति च का? गेहं निवर्तस्व तत्,
त्वस्माकं दलदस्ति पुत्र! हृदयं दृष्ट्वा तवेमां दशाम्।।७४।।

संन्यासिभावे हितमस्ति किं ?, तत्-
सेवस्व गत्वा पितरौ स्वकीयौ'।
(सेवातपो बुद्धिपुरस्सरं ना
गृहे स्थितः साधु करोति लोके)।। ७५।।

मुञ्चन्त्योऽश्रु वदन्ति (भावभरणं स्थाने) युवत्यः स्त्रियो
'हा! स्यादद्य तु वज्रमेव पतितं हाऽस्य स्त्रियास्तूपरि।
यस्या हाऽखिललोकसुन्दरपतिस्त्यक्त्वा तु तां यौवने
संन्यासी भवितुं गृहादपसृतः, को दुःखमस्या भरेत् ।।७६।।

आधारः पतिरेव सत्कुलवती-नारीकृते केवलो,
गेहे साऽद्य निराश्रया च युवती किं चिन्तयन्ती भवेत्?।
उक्त्वा किन्नतु किं तथाहि रुदती सा भाविनी भाविनी?'
(भावः संसृतिकारणं, प्रियतमो भावो भवेऽसंसृतिः)।।७७।।

ब्रूते कापि च कापि साहसमिता 'याहि त्वजी! स्वं गृहं
सम्प्रत्येव तु याहि सौम्य! मतिमन्! पादं स्पृशामो वयम्।
अस्माकं तव गेहिनीगतदशामद्यानुमाय स्फुटं
नारीणां दलदस्ति भावहृदयं' (भावाऽऽग्रही भावुकः)।।७८।।

तासां तत्र गिरो निमायिहृदयः स्त्रीणां शृणोति प्रभु-
र्धृत्वाऽऽस्ये तृणकं तथा कथयते संयोज्य हस्तौ स्वकौ।
अत्यन्तं ननु दीनभाववचनो 'हे मातरो! दत्त मे
कृष्णप्रेम यथाऽऽप्तमत्र भवतु स्थाने तथा स्वाशिषः।।७९।।

एतन्मानवजीवनं प्रतिपलं निर्धारितं भङ्गुरं
तत्रात्यन्तसुदुर्लभाऽस्ति भुवने श्रीकृष्णभक्तिः सती।
तत्राप्यत्र सतां महात्ममनसां श्रीसङ्गतिर्दुर्लभा
सङ्गत्यैव महात्मनां तु भवितुं शक्नोति सज्जीवनम्।।८०।।

संन्यासग्रहणं विधाय तच्छ्रीवृन्दावनमेत्य तं लभै।
श्रीकृष्णं प्रियमात्मनस्त्वहं, हे! दत्ताशिषमद्य मातरः' ।।८१।।

एवं तद्दृढतामयं प्रभुवचः श्रुत्वा रुदन्ति स्त्रियो
नाप्यल्पं निजनिश्चयाद्विचलितं दृष्ट्वा विरक्तं त्वमुम् ।

पश्चात्तापमथ स्वकेऽत्र मनसि स्थाने मनस्येव ताः
कुर्वत्यो गृहकं स्वकं स्वकमयुः (सीमाऽनुरोधेऽरतिः) ।।८२।।

एवञ्च स्थित एव गाङ्गपुलिने सन्ध्याऽऽगता श्रीप्रभौ,
केनाप्यन्नकणोऽर्पितो न वदने, मौनं यथावत्स्थिताः ।
किंकर्तव्यविमूढवद्यतिवरश्चासीत्स्थितो भारती
युक्तिः कापि न दृश्यतेऽस्य मतिमत्संन्याससंवारणे ।।८३।।

वार्तैका बहुकालचिन्तनविधेर्बोधेऽस्य लब्धा यते,-
र्लब्धं तेन-'गृहे निमायिजननी वृद्धाऽस्ति चैकाकिनी।
अस्य स्त्री युवती, तथा ध्रुवमहोऽपृष्ट्वैव गौरश्च ते
बुद्ध्वाऽद्धा निशि चागतोऽस्ति (यमिनः सुप्तिक्षणोऽलौकिकः)।।८४।।

तद्ब्रूयामिममत्र यत्त्वनुमतिं यावन्न नीत्वाऽऽत्मनो
बन्धूनां गृहबन्धिनां त्वमयसे तावन्न दीक्षां ददे।
माताऽमुष्य च गेहेनी त्वनुमतिं संन्यासहेतोः कथं
दद्यादेव (सुतो हि मातृहृदयं पत्नीविभूतिः पतिः)।।८५।।

दद्यात्सम्भवमस्ति सम्मतिमपि त्वस्याऽऽग्रहे तेऽधिके
यावद्याति गृहन्तु सम्मतिमसौ नेतुञ्च तावत्त्वितः।
उत्थायाऽऽश्रमतः परत्र यतिको यास्यामि कुत्राप्यहं
(संख्यावृद्धिमना भवेन्ननु गृही भूयात्तथा नो यतिः) ।।८६।।

एतावत्सुकुमारदेहमनसां संन्यासदीक्षार्पणाद्।
यूनां, कस्त्वपकीर्तिभाजनमहो! स्यादत्र संन्यासिनाम्।
एतच्छ्यामलकुञ्चितालकभरश्रीकर्तनस्य क्षणे
दीर्णं स्याद्धृदयं न कस्य विरतेः संन्यासिकत्यागिनः'।।८७।।

एतत्सर्वमतो विचिन्त्य वदति श्रीभारती 'पण्डित!
स्वां वृद्धां जननीं सुभावगृहिणीं, प्राप्तस्त्वपृष्ट्वैव (तत्।
ज्ञातं मे भवतीति) रात्रिसमये गेहात्पलाय्याऽऽश्रमे'
(संन्यासो न पलायनं, स्वपरयोस्त्यागेन सम्मेलनम्)।।८८।।

उक्तं श्रीप्रभुणाऽतो'ऽस्ति प्राप्ता भगवन्मे।
सुस्पष्टानुमतिः सा मातुः स्वस्य च पत्न्याः'।।८९।।

ततो गृणाति भारती यतिर्मनाक् सविस्मयः।
'कदा त्ववाप सम्मतिं' (स्वयं न लूयते शिरः)।।६०।।

ऊचे प्रभुर्बहु दिनानि गतानि चादः-
सम्बन्धि सर्ववचनन्तु तदेव दिष्ट्वा।
चक्रे च ते सहमतेऽनुमतिञ्च नीत्वा
संन्यासहेतुमहमत्र तथाऽऽगतोऽस्मि'।।६१।।

ऊचे तद्यतिभारती 'नहि तथा, याता परं विस्मृतौ
वार्ताऽतीतदिनात्मिकाऽद्य तु विनैवाप्तस्तयोः सम्मतिम्।
नो दास्यामि कदापि ते गृहवतः संन्यासदीक्षां त्वहं
संन्यासी, गृहसम्मतेस्तु विरहे' (न्यासो न नाशोऽप्रियः)।।६२।।

श्रुत्वैवेयदयं प्रभुस्तु वचनं गौरो निमायी स्थितो
द्रागुत्थाय, तथा वदन्निदमहो! 'कामं गृहाण, स्वतः।
सम्प्रत्येव तयोश्च सम्मतिमहं नीत्वा तथाऽऽयामि वै'
धावन्नत्र बभूव साम्प्रतनवद्वीपोन्मुखः स द्रुतम्।।६३।।

अल्पं दूरमथाऽऽश्रमात्स तु यदा यातस्तदा भारती
दण्डी चिन्तयति स्म 'कर्तुमुचितं कस्यास्ति सामर्थ्यकम्।
अस्येच्छाविपरीतमत्र यदि वाऽस्तीच्छाऽस्य चैवेदृशी
मद्द्वाराऽस्तु तु कर्म निर्दयमिदं (धर्मः प्रपन्नावनम्)।।६४।।

चेल्लोकस्पृहणीयसत्पदगुरोः सौभाग्यमत्रात्मनो
दातुं वाञ्छति मह्यमेव सदयं, लक्षाऽपदेशे कृते।
तन्मे, तर्ह्यपि कार्यमेव तदिदं सम्पादनीयं मया'
कृत्वैवं मनसि स्वके यतिवरो 'नारायणेच्छा यथा'।।६५।।

आहूव'त्पण्डित! पण्डित!' प्रभुममुं 'पार्श्वे निवृत्याऽत्र मे
त्वन्त्वायाहि, यथा वदिष्यति सुधीस्तत्कारितैवाधुना।
कस्मिन्नस्ति निमायिनस्तव गिरः क्षेपेऽत्र सामर्थ्यकं'
(तत्सत्यस्य कथं प्रमाणमपरं, यत् पारदर्शि स्वयम्)।।६६।।

एतन्मात्रमसौ निशम्य तरसा तेन क्रमेणैव तत्-
चायातः पुनरेव चाकृत नतिं श्रीभारतीपादयोः।

ऊचे गातुमतो निजं किमपि तन्मन्दं मुकुन्दं पदं
(गानं निश्चितगायकेन सुहृदः पुष्णाति रागं प्रियम्)।।६७।।

अत्यन्तं करुणार्द्ररुद्धगलतो बन्धुर्मुकुन्दो रुदन्
गौराङ्गेण निमायिनाऽत्र नुदितो गायन्नभूच्छ्रीपदम्।
सोऽरोदीच्च मुकुन्दगीतपदकं श्रुत्वा प्रभुर्विह्वलः
प्रेमाक्तो हि मुकुन्ददत्तमवदद् (गौरो हि कृष्णप्रियः)।।६८।।

वारम्वारमसौ 'तु गायतु तथा, जातं पुनः किं त्वहा!
धन्यास्तीह निमायिनी जगति सा श्रीराधिकाजी-रतिः।
एवं गानसमाप्तितोऽभवदहो! संकीर्तनारम्भणं
(श्रीप्रेम्णः श्रवणे कृतस्य फलमुद्गारो हि संकीर्तनम्)।।६९।।

तद्ग्रामस्य शतं जनाश्च मिलिताश्चागत्य संकीर्तने
संप्राप्ताः करतालखोलसहिता मञ्जीरझाँझादिभिः।
वाद्यैस्ते बहुभिः समं निजगृहाद् ग्रामीणकाः साम्प्रतं,
नानावाद्यरवो बभूव, मिलिताः कुर्वन्ति सर्वे तथा-।।१००।।

१०. कीर्तनमुत्तमनामपदानां गानं सात्त्विकतायाम्।
हरि-हरि-शब्दैः संस्मृतिपूर्वकनमनं संबोधनमपि
कृष्ण! श्रीयदुनन्दन! माधव! गोपालक! गोविन्द!
प्रियतम! राम! श्रीमधुसूदन! रत्योच्चारणमेवम्।
प्रियवरनाममधुरसंकीर्तनयोगो नृतनौ सुलभः।।

तच्छ्रीमत्पदकीर्तनञ्च मधुरं, संकीर्तनस्यान्तरे
भावावेशगतश्च नृत्यति करावुद्यम्य चोभौ प्रभुः।
सर्वे ग्रामजना विलोक्य सुहृदो नृत्यं प्रभोरद्भुतं
तज्जाताः प्रियमन्त्रमुग्धसदृशाः (काम्यं हि मौग्ध्यं प्रियम्)।।१०१।।

प्रेम्णः सम्प्रति भारतीयतितनावप्यत्र संकीर्तने
भावानामुदयोऽखिलं दृशिगतस्तत्सात्त्विकानां भवन्।
मत्ताभोऽद्य ननर्त सोऽपि च तथा सन् विस्मृतात्मा यति-
र्ज्ञातोऽमुष्य तदा प्रभोश्च महिमा, स प्रेम्णि मग्नो यथा।।१०२।।

एवं कथाकीर्तननृत्ययोगे गुणानुवादे च हरेस्तथैव।
सम्पूर्णरात्रिर्मधुरं व्यतीता (प्रियं वरेण्यं च सदा तदेव)।।१०३।।



# संन्यास-दीक्षा

११. रागस्वादस्वादयिता भुवि कश्चिच्चेतनपुरुषः।
घटते रागी प्रायः पुरुषः पार्थिववपुरभिमतितः
आसक्तिस्तत्प्रियसम्बन्धिनि रागो लौकिकबन्धः।
परमेतत्पिण्डं यद्द्वारा चेतयते ब्रह्माण्डम्
तच्चिन्तकरागी यतिभक्तः प्रेमी कोऽपि विरक्तः।।

वैराग्ये ननु मत्तताऽस्ति कियती, तां ज्ञातुमत्र क्षमः
संसारे पुरुषः स एव, हृदये यस्यामले स्यान्निजे।
श्रीश्रीमद्भगवत्सरोजचरणे प्रीतेर्बुभूषोद्गता
(जानात्यम्बुदकप्रतीक्षणसुखं लोकेऽरतश्चातकः)।।१०४।।

धावत्यत्र तथाहि लोकविषयो भोगश्च यं कर्तितुं
वैराग्येऽनुभवं स एव महतः कर्तुं सुखस्य क्षमः।
अत्रेच्छन्ति तु भोगमेव सततं यस्येन्द्रियाणि प्रियं
चेतश्चिन्तयदस्तु चैव जगतीवस्तूनि यस्यारतम्।।१०५।।

वैराग्यस्य सुखं किमेव मनुजः कामं स बोद्धुं क्षमः,
त्यागायाऽऽकुलमस्ति यर्हि महते भोगाद्विरक्तं मनः।
वैराग्यं क्षणिकं जलस्फुटमिव स्याद्यस्य न, स्थायि सत्,
तर्हि त्यागसुखानुभूतिकरणे श्रेष्ठोऽधिकारी स वै।।१०६।।

आवेशेऽत्र गतश्च यस्तु मनुजो ह्यस्थायिवैराग्यतः
कुर्वंस्त्यागपथस्य चानुसरणं बोभूयते साहसी।
अन्ते तस्य भवेत्तथाहि पतनं, लोके तदुक्तं तथा-
त्यागः स्थातुमिह क्षमो नहि विना वैराग्यमेवाऽवनौ।।१०७।।

तद्वैराग्यविशिष्टरागरसिको योऽभून्न, भावी स किं
श्रीमद्रागरसस्य भागवत-नाऽलं भक्तिनिष्ठो रसी?।
एवं त्यागकृते सदैव हृदयं भूयात्तथाव्याकुलं
प्राणः श्वासकृते बहुक्षणजलाऽऽलीनो भवत्याकुलः।।१०८।।

दातुं साम्प्रतमुद्यतः प्रभुकृते संन्यासदीक्षां तथा
श्रीमत्केशवभारतीयतिमहाराजस्तपस्वी सुहृत्।

अन्तो नास्ति विलक्ष्य सम्प्रति मनोमोदस्य चादः प्रभो-
(र्बद्धस्वात्मविमुक्तिकाममनसः कश्चित्प्रसादः सतः)।। १०९।।

मत्तः प्रेम्णि बभूव रात्रिमखिलां नाम्नो हरेः कीर्तने
कुर्वन्नृत्यमसौ प्रमोदभरितश्चोत्थाय चोत्थाय तु।
वैकल्येन समं यथाहि मिलितुं लोकेऽनुरागी युवाऽऽ-
स्ते रात्र्यागमनप्रतीक्षणरतः सद्योनवोढां वधूम्।।११०।।

दीक्षाप्राप्तिकृते तथैव सुमनाः संन्यासधर्मे प्रभु-
स्तद्रात्र्यन्तदिनप्रतीक्षणमसौ कुर्वन्नभूच्चातुरः।
निद्राऽस्यां ननु नागता क्षणमपि स्थाने निशायां प्रभोः
(शृङ्गारो मधुरस्तथाऽस्य मधुरः पक्षोऽभिलाषो रसः)।।१११।।

नेत्रेऽस्य स्वत एव तर्ह्यविरतं संकीर्तनं कुर्वतो
यातोऽल्पं त्विव मीलनाऽऽकृतिमहो,ऽस्मिन्नेव साधुक्षणे।
स्थाने कोमलकण्ठतोऽत्र विहगास्ते चाम्रशाखास्थिता
गानारम्भमकार्षुराश्रमवने नानास्वकीयस्वरे ।।११२।।

संन्यासदीक्षाग्रहणोपलक्ष्यके
महाप्रभोर्गौरनिमायिधीमतः।
कुर्वन्ति ते पूर्वत एव मङ्गलाऽऽ-
चारन्तु मन्येऽनुमतिर्विधेरपि।।११३।।

तन्द्रा दूरमगात्तथाकलरवं श्रुत्वा खगानां प्रभो-
रुत्थाय द्रुतमेव च प्रभुरयं गौरो निषण्णस्तथा।
श्रीनित्यादिमबोधयत्स्वनिकटे चैव स्थितान् मूर्च्छितान्
सर्वेष्वेषु समुत्थितेषु विधितो नित्यान्निवृत्तः प्रभुः।।११४।।

गङ्गास्नानमसौ विधातुमधुना सर्वैः समं सङ्गिभि-
र्भाविश्रीगुरुदेवपद्मपदयोश्चक्रे नतिं चात्मनः।
भूयो नम्रगिरा निवेदनमिदं बद्धाञ्जलिः साम्प्रतं
'किं किं कार्यमतो ममास्ति भगवन्! मोपस्थितं साधय'।।११५।।

वैवश्यं किमपीव तत्प्रकटयन् श्रीभारती भाषते-
'सामग्री यदपेक्षिता यदधुना संन्यासदीक्षाकृते।

तत्तत्संकलनीय,मस्य करवै शीघ्रं प्रबन्धं त्वहं'
तद्वस्तुग्रहणाय तेन कटवां त्वेको जनः प्रेषितः।।११६।।

ह्यो यावत्कटवानिवासिजनतानारीनराणां हृदि
त्वासीच्चिन्तनमेतदेव, भविता साधुर्न वै कर्हिचिद्।
यूनेऽस्मै यतिभारती सहमतः संन्यासदीक्षार्पणे.
(श्रीमत्केशवतः परो भगवतः साधुर्यतो भारती)।।११७।।

प्रातोऽद्यैव यदा श्रुतो ननु समाचारो जनैस्तैरयं-
जातः केशवभारती सहमतो विप्रं युवानन्तु तम्।
संन्यासिप्रियभारतीं रचयितुं चाद्यैव कृत्वा तथा
शीर्षच्छिन्नशिखाप्तसूत्ररहितं द्वारात्पुनर्द्वारतः।।११८।।

भिक्षायाचनकं विरागिणमहो! कर्ता गृहत्यागिनं,
नो शेषस्तु तदा गृहार्द्रमनसां तेषाञ्च दुःखावधिः।
तेषां ग्रामनिवासिनां सुगृहिणां जाता प्रभुं किं प्रति
स्थाने दर्शनमात्रतो हि ममता जाने न शुद्धात्मनाम्।।११९।।

सर्वे ते स्वगृहस्य सङ्गिनमिव स्थानेऽबुधंश्च प्रभुं
स्वं संबन्धिनमेव, चाश्रमपदे ह्यागत्य चैकत्रिताः।
स्थाने स्त्रीपुरुषाः. क्षणात्तु बहवश्चैकत्र भागे स्त्रियः
कुर्वन्त्यश्रुविमोचनं, बहुवचोऽन्योन्यं नराश्च स्थिताः।।१२०।।

ब्रूते कोऽपि 'तथैष एव युवको नो बोधनीयोऽधुना,
संबोध्येममितो-यथा ननु भवेत्-संप्रापणीयस्त्वयम्।
पार्श्वे मातुरमुष्य' तत्र तरसा ब्रूते परो बुद्धिमान्
'बोधेदेष, तदा तु पण्डितवरं तं बोधयामो वयम्।।१२१।।

शक्ता नैव यदाऽस्य बोद्धुममुकं संबन्धिनः सङ्गिनः
कामं त्वं तु वयञ्च बोधनकृतावेव स्युरत्र क्षमाः?'।
एको वृद्धनरस्तदन्तरमथ स्थाने जगाद द्रुतं,
(वृद्धत्वं जरसा विनेति भणनं सूक्तिर्न सर्वत्र कौ)।।१२२।।

'सर्वे चैकमतास्त्वजी! वयमहो! स्मोऽत्र त्वियन्तो जना-
स्तत्संन्यासकृतित्वपूर्तिभवनं स्थानेऽत्र नो दद्महे।

आस्तामेत्तु कथा' तदुक्तिविषये कश्चिद्विचारी जगौ
(श्रीवेदान्तविचारपद्धतिरहो! लोकेऽपि मुख्यायते)।।१२३।।

'हे भ्रातर्ननु युज्यते कथमिदं, कार्ये तथैवं शुभे
कस्मादत्र बलप्रयोगममले कर्तुं भवेम क्षमाः।
एवं पुण्यकृतौ भवेत्किमपि नो शक्यं स्वसाहाय्यकं,
नैवं स्यादुचितन्तु विघ्नकरणं (कार्यो न विघ्नः सति)।।१२४।।

आस्येनैव तु बोधने वयमतः शक्ता, न धर्मो हठो
गङ्गातीरनिवासिनाञ्च सुहृदां नो भारतीश्रेयसाम्'।
अस्मिन्नुद्धतकस्वभावयुवकः प्रोचे तथोच्चैः'स्त्वजी!
धर्मश्चेदृशि यातु तादृशि, महान् धर्मोऽवनं सङ्गिनाम्।।१२५।।

एवं धर्मविधौ तु तैलमनलो निक्षिप्य योज्योऽवनौ,
धर्मात्मा भुवि कस्यचिच्च जगतो भूत्वाऽत्र तद्वर्तते।
चेद् वार्तैवमथैव, किन्न दधसे न्यासं त्वमेवात्र तत्,
किं कुर्वन्नसि भो! नयाऽऽनय (दिनं) रक्षेदमुत्थापय।।१२६।।

१२. वृद्धा बोधयतीह त्वन्यम्।
शिक्षयतीहाऽऽजीवनमवनौ त्वं त्यज वस्त्वासक्तिम्
अन्नं वस्त्रं किमु खट्वामपि कुरुते निजगेहान्तः।
पलिताभावे यद्वृद्धत्वं तदबुद्धिर्व्यवसाये
वृद्धा बुद्धिरिहाऽऽसक्ता भुवि तनुते तनुवृद्धत्वम्।।

संन्यासी भव तु स्वकांश्च गृहतः पुत्रान् विहायात्मजा-
स्तद्विद्याम तवात्मनो वयमपि' ह्युक्त्वा तथेयद्युवा।
पश्यन् लोकमुखं जगाद च सहाऽऽवेशेन तेनैव स
'भ्रातः! पश्य (लपेदयं) मतिरहो! षष्ठिङ्गताऽस्याधुना।।१२७।।

कामं यस्य गृहे भवेत्तु युवती स्त्री, चाद्वितीयात्मजा
वृद्धा स्याद् विधवा नमायिवसुधा माताऽसहायाऽभितः।
तच्चैवं चतुरुक्तविंशतितमे वर्षे तु यूनः सतो
द्वारद्वारकभिक्षुसर्जनमहो! गौरस्वभावाकृतेः।।१२८।।

संसारे भविता तु कुत्र लिखितं धर्मे च शास्त्रे तथा,
कस्मिंश्चिल्लिखितं भवेदपि तु चेद्, बाबा! वयं दण्डवत्।

कुर्मस्तादृशधर्मशास्त्रनमनं स्वं दूरतश्चैव तत्
स्यादस्यैव मुबारकं प्रियतरं बाबास्तु धर्मायणम् ।।१२९।।

एष ज्येष्ठसुतं करोतु निजकं संन्यासिनं योगिनं,
संन्यासी स्वयमेव वायमयतामस्यास्त्यवस्था तथा।
एतद्विप्रकुमारकस्य सुमतेस्त्यक्त्वा शिखासूत्रके
काषायाम्बरकं पुरो निजदृशोर्धर्तुं न देयः क्षणः ।।१३०।।

सारल्येन यदीह भारतियतिर्मन्येत, तच्छोभनं,
तत्कण्ठं त्वभिभूय वा तमधुना ग्रामात्तु कृत्वा बहिः।
आगन्ताऽह,ममुञ्च नावि युवकं कृत्वा भवन्तोऽस्य तद्-
गेहं प्रापयतान्तु यत्र युवती पत्नी च माताऽतुरा ।।१३१।।

अनुनयभारं यतिवरसाधोः।
अहमयमस्य स्वगतमवामि' ।।१३२।।

यूनस्तस्य तु जोषपूर्णवचनं तावन्निशम्याऽऽगत-
स्तच्छृण्वत्सु जनेषु तादृशहृदां जोषो बहूनां तथा।
'सत्यं सत्यमिदं तथैव सुहृदां कार्यं' तथोक्त्वा च ते
कुर्वन्तोऽस्य समर्थनं प्रियमयु(र्वीरः प्रियः सर्वतः) ।।१३३।।

एतस्मिंस्तु विचारवान् सहृदयो वृद्धः स एवोक्तवान्
'कार्यं सेत्स्यति नो तथाहि करणाद् भ्रातर्विचारं कुरु।
कर्तुं न प्रभवेम चेन्ननु वयं धर्मं स्वदौर्बल्यत-
स्तत्किं तत्करणात्परानपि पथो नृन् वारयेम क्षितौ ।।१३४।।

दौर्भाग्यान्नकटा वयं यदि भुवि स्यामाऽऽत्मनो दोषतो,
द्रष्टुं तत्परनासिकामपि कथं नो शक्नुयामावनौ।
जोषस्यास्ति तथा वचोऽखिलमिदं, ह्येतावदेवाधुना
शक्ताः कर्तुमतो वयं (सहृदयैरौचित्यमात्मेक्षितम्) ।।१३५।।

संबोध्यानुनयेन सार्धमपरं श्रीभारतीजीयतिं
दीक्षादानविधेर्निमायिगृहिणः संवारयेमाऽऽश्रमे'।
सर्वेषामुपयुक्तकं रुचिकरं स्थाने प्रतीतं वचो
वृद्धस्येदमथाखिलाश्च मिलिताः श्रीभारतीसन्निधिम् ।।१३६।।

सर्वे श्रीयतिभारतीप्रणमनं कृत्वा निषण्णास्तथाऽऽ-
सीनोऽन्यत्र महाप्रभुर्नतशिराश्चासीत्तु भागे क्षितौ।
ते सन्त्यस्य समीप एव सुहृदः श्रीनित्यचन्द्रादय-
श्चासीना निहिते पुराणसदृशे शीर्णे तथैकाऽऽस्तरे।।१३७।।

पश्यन्त्यत्र परस्परं ननु जनाः स्थित्वा यतेः सन्निधौ
ज्ञात्वा सर्वजनस्य तादृशमभिप्रायं स एवाधुना।
ऊचे तत्र विचारवांस्तु पुरुषो वृद्धश्च बद्धाञ्जलिः
'किञ्चित्त्वान्तु निवेदितुं वयमिताः स्वामिन्! महाराज! हे!'।।१३८।।

श्रीभारती प्रकटयंस्तरसा प्रसादं
'त्वामामवश्य'मवद'त्कथय प्रजल्प।
स्थानेऽत्र यत्कथयितुं लषसीह सर्वं
संकोचतो ननु विना कथयाऽऽत्मनस्तत्'।।१३९।।

वृद्धेनोक्तमथा'खिलं भुवि महाराज! स्वयं वेत्सि हे !
वार्ता कापि न गुप्तमेव भवतो (ब्रह्मप्रकाशो यतिः)।
एतद्विप्रकुमारकोपरि दयाऽऽयातीह गुर्वी तु नो
(दुःखं भर्तृवियुक्तनारिजगतां जानाति लोके गृही)।।१४०।।

गेहेऽमुष्य निमायिनश्च सुहृदो वृद्धाऽस्ति माता पुनः
साध्वी स्त्री युवती, नरो ननु परो द्वीपे गृहे कोऽपि नो।
निर्वाहाय तयोर्न कापि नियता वृत्तिर्निमाय्यात्मनो-
र्नास्त्यद्यावधिकं निमायिसुधियः संतानमस्य स्त्रियाः।।१४१।।

एषोऽस्यामपि तु स्थितौ निदधते संन्यासमावेशत-
स्तन्नो चेतसि विद्यते च गृहिणां दुःखानुभूतिः परा।
सर्वं वृत्तमदोऽपि साम्प्रतमदःसंबन्धिनामेव न-
श्चास्यात्तु श्रुतमस्ति, नो च भविता गुप्तं तथा तेऽपि तत्।।१४२।।

सत्प्रार्थना नस्त्वियमेव तस्मात्
कियानपि स्यात्तु तथाऽऽग्रहोऽस्य।
संन्यासदीक्षां न कदापि चास्मै
ददातु योग्याय बुधाय बोधम्'।।१४३।।

सर्वेषाञ्च निशम्य भारतियतिस्तेषां जनानां वचो
दुःखेनातिशयेन तु प्रकटयन् वैवश्यमाहात्मनः।
'युष्माभिः कथितं निमायिसुधियो यावद्वचो भ्रातरः!
सर्वं पूर्वत एव तत्तु विदितं मेऽस्तीह संन्यासिनः।।१४४।।

पक्षे नास्मि निमायिनः स्वयमहं संन्यासदानस्य तु
श्रीदीक्षामधुना ददामि सुमतेर्नामुष्य च स्वेच्छया।
अस्येच्छाक्षणवञ्चनस्य नहि मे सामर्थ्यमस्त्येकतः
कोऽप्येतं नहि धर्ममर्म परतः संबोधयेदेव च।।१४५।।

अस्त्येष स्वयमेव गाङ्गनदियाद्वीपे महान् पण्डितो,
मूर्खः स्याद्यदि कोऽपि तर्हि भवतां स्यादेव संसारिणाम्।
सन्देहावसरस्तथाहि यतिना गेही मया वञ्चितः
(श्रद्धातो भुवि गेहिनामतिशया शङ्काऽत्र संन्यासिषु)।।१४६।।

धर्माधर्मरहस्यमस्य विदितं सम्यक् तथा विद्यते
गार्हस्थ्येऽयमपि स्थितः सहृदयो वर्णाश्रमस्यात्मनः।
धर्मस्याचरणञ्च वेदविहितं कुर्वन् भवेच्छोभनं,
किन्त्वेषोऽद्य तथोद्यतोऽस्ति हि महात्यागस्वदीक्षाकृते।।१४७।।

मत्सामर्थ्यबहिस्त्वयञ्च विषयस्तस्माद् भवन्तः स्वयं
विद्वासं ननु बोधयन्तु, भवतां मत्वा वचोऽयं यदि।
स्वं गेहन्तु निवर्तितुं सहमतो भावी, प्रसादस्तथा
चित्ते मेऽत्यधिको भविष्यति (यतिर्दुःखी जगद्दुःखतः)।।१४८।।

तन्निस्सारयतैव चात्महृदयाद् यूयन्तुं वार्तामिमां
कुर्वे सम्प्रति दीक्षितं स्वयमहं गौराङ्गमेतं प्रभुम्।
आचार्योऽयममुष्य योऽस्ति पुरतः पश्येदमत्र स्थितः,
संबन्धे पितृतुल्य-मातृभगिनीस्वामी भवत्यस्य वै।।१४९।।

नो शक्तस्त्वयमेव बोधयितुमाश्चैतं यदा, प्रत्युत
स्थाने कारयितुं स्वसङ्गिसहितः संन्यासकर्माऽखिलम्।
अस्येच्छानुसृतेर्निमायिमनसः सज्जः स्थितो वै, तदा
भूयो मे भवतां तथास्ति विषये सामर्थ्यमेवात्र किम्'।।१५०।।

श्रुत्वैवं वरयुक्तियुक्तवचनं श्रीभारतीजीमुखात्
सर्वे कातरया प्रति प्रभुमुखं पश्यन्ति लोका दृशा।
तेष्वेके पुरुषास्तथाप्रभुदशां दृष्ट्वा रुदन्तोऽभवन्
(वाल्मीकेः करुणस्थशोकसुगतिः काव्यं हि रामायणम्)।।१५१।।

तांश्च ग्रामनिवासिनोऽखिलजनान् स्वस्नेहहेतोः प्रभु-
र्दुःखार्तानधिकन्तु कातरगिरा दृष्ट्वा निमायी जगौ।
'आत्मीया मम सन्ति यूयमपरे बन्धुः सखा भ्रातरः!
संसारे भवतां ममोपरि तथा स्नेहस्त्वियांश्चाधिकः।।१५२।।

जातं सम्प्रति गद्गदं तु हृदयं मे चिन्तयित्वेदकं
यूयं यद् वदथा,ऽखिलां स्वयमहं बोधामि वार्तां तु ताम्।
वर्तेऽहं विवशो,ऽधुना निजवशे नाहं परं भ्रातरः!
श्रीकृष्णोऽत्र निगृह्य मां प्रियतमः स्थाने तु नीत्वाऽऽगतः।।१५३।।

आशीर्वादमथैवमद्य निखिला यूयं प्रिया भ्रातर-
स्तद् दद्ध्वं यदहं निजप्रियतमं श्रीकृष्णमत्राप्नुयाम्।
श्रीवृन्दावनमेत्य च व्रजधरासंवासिनां गेहतो
याचित्वा शकलं क्षुधाशमनकं त्वत्ता प्रसादं प्रियम्।।१५४।।

श्रीवृन्दायमुनाकदम्बललितद्रूणां करिष्ये त्वधो-
वासं, श्यामलवर्णनिर्मलरसं पाता जलं यामुनम्।
कर्ताऽहर्निशमेव कीर्तनमृतश्रीकृष्णनाम्नामहं
(जिह्वाया रसनाऽभिधा समुचिता, नामप्रिया सा यदा)।।१५५।।

यावन्मे मिलितो भविष्यति नहि प्राणप्रियः कृष्णजी
तावन्नो भविता सुखी, भुवि न मे प्राप्तैव शान्तिर्भवेत्।
ज्वाला मद्धृदये तथास्ति विरहे कृष्णप्रियस्वामिन-
स्तच्छान्तिर्भवितैव कृष्णमिलनश्रीशीतलाऽऽस्वादतः।।१५६।।

आशीर्वादमथैकवारमधुना सर्वे भवन्तो हृदा
स्थाने मे ददता'मिदञ्च कथयन् श्रीनाम चोच्चारयन्।
उच्चैस्तत्करुणस्वरेण महता चक्रे प्रभुः क्रन्दनं
(मेदिन्यां परितोऽबलः परिवृतः खं पश्यति ह्यातुरः)।।१५७।।

सर्वे मनुष्याः श्रुतिदर्शनाभ्यां
जाता यथा सम्प्रति मन्त्रमुग्धाः।
अग्रे पुनः कस्यचिदत्र नासीद्
वक्तुं मनाक् साहसमेव तेषाम्।।१५८।।

दृष्टं तैर्निखिलैर्जनैर्ननु यदा युक्त्या कयापि प्रभुः
संन्यासग्रहणं विना न मनिता, ते तर्हि सर्वेऽभवन्।
अस्मिंस्तस्य तथाहि कर्मणि शुभे साहाय्यभावोद्यताः
(प्रेमन्यासविधौ मिलन्ति जनताः स्थाने निमाय्यात्मनः)।।१५९।।

पृष्ट्वा श्रीयतिभारतीन्तु कटवापार्श्वस्थसंन्यासिना-
माह्वानाय तथाहि कोऽपि चलितः, कश्चिच्च धावन् गतः।
तत्तत्पूजनवस्तुहेतुमधुना, कोऽप्यत्र नीत्वाऽऽगतो
रम्भामेव तथाम्रपल्लव-(मलं प्रीतिः प्रसङ्गेऽमले)।।१६०।।

हण्डीमेव च कोऽपि तत्र पयसो नीत्वाऽऽययौ, तत्परो
मिष्टान्नं बहुमात्रमेव नयते दीक्षोत्सवे स्माऽधुना।
एवं तत्क्षणतस्तु भारतियतेः सम्पूर्ण एवाश्रम-
श्च्छन्नः खाद्यपदार्थपूजनभरैः (काले वनेऽप्युत्सवः)।।१६१।।

आसीद्यस्य गृहे च वस्तु यदपि त्वादाय सोऽत्राश्रमे
नीत्वाऽऽप्तः क्षणतस्तदेव, पचते चैकत्र भोज्यान्नकम्।
भागे कान्दविकः, परत्र मिलिताः संन्यासिनः पण्डिताः
कुर्वन्त्यत्र च वेदिकाविरचनं संन्यासदीक्षाकृते।।१६२।।

तत्राम्रोपवने मनोहरतमे तस्याश्रमस्यामुखे
गङ्गाभारतिनिर्मलस्थितिमुखे श्रीहोमवेद्यः कृताः।
वर्णैस्ता मधु चित्रिताश्च विविधै रोलीहरिद्रासुधा-
रक्ताऽऽपीतसितै-(स्तथाहि ललितं चेतोदृशो रञ्जकम्)।।१६३।।

स्थाने-स्थाने रम्भास्तम्भाः। भूमौ प्रोताः कुम्भोपेताः।।१६४।।

आचार्यं शशिशेखरं प्रतिनिधिं चक्रे स्वकीयं प्रभुः
संन्यासस्य समस्तकर्मकरणे स्थानेऽत्र दीक्षाविधेः।
एतत्कर्कशसम्मतिं त्वपि बुधश्रीचन्द्ररत्नः प्रभोः
स्वीचक्रे विवशस्तथैव गुरुणा कष्टेन वाष्पाक्षिकः।।१६५।।

गङ्गास्नानमतो महाप्रभुरयं कृत्वा ऋषीणां पुरा
चक्रे तर्पणमत्र शास्त्रविधितः श्राद्धं पितॄणां तथा।
प्रत्यक्षं प्रभुणाऽवलोकितमहो! प्राप्ताः स्वयं पूर्वजा-
स्तद्दत्तं पितृलोकतोऽस्य सुहृदो गृह्णन्ति पिण्डं मुदा।।१६६।।

पिता पितामहादयः प्रसन्नतायुतास्तथा।
अमुष्य चाशिषो ददुस्ततोऽमुनाऽर्चिताः सुराः।।१६७।।

श्रीवेदीं परितो लसन्ति विविधं गन्धाढ्यपुष्पस्रजो
नानासुन्दरयागवृक्षसमिधो नैवेद्यवस्तूनि च।
मिष्टान्नं बहु नारिकेलसहितं ताम्बूलपूगीफलं
भूयः शुष्कफलं त्वनेकविधिकं (वस्तूपयोगः क्रतुः)।।१६८।।

सामग्रीहवनस्य वै तिलयवा दूर्वाऽऽज्यदर्भाक्षतं
कुम्भः, साम्प्रतगन्धवस्तुनिवहो धूपस्तथा चन्दनम्।
सन्ति ब्राह्मणपण्डिताश्च बहवः संन्यासिनस्त्वृत्विजः
श्रीवेदीं परिवृत्य संस्थितियुताः (पात्रैर्हि भाति स्थलम्)।।१६९।।

सङ्गे स्वेऽत्र नयंस्तथैकपुरुषस्तन्मध्यमेवाश्रमे
संप्राप्तो हरिदास-नाम कटवा-ग्रामस्थलान्नापितम्।
दृष्ट्वा तं हरिदासमत्र तरसा श्रीभारती चोक्तवान्
'शेषं सम्प्रति कृत्यमस्ति विविधं, भूयोऽतिकालोऽभवत्।।१७०।।

कारयतु द्रुतमात्मक्षौरमतोऽमलचेतः!'।
(मूर्ध्नि निजे मलकेशं साधुयतिर्नहि धत्ते)।।१७१।।

क्षौरं कारयितुं निमायिसुमनाश्चोत्थाय वेदीस्थलाद्
भागेऽन्यत्र निषीदति स्म यतिकाऽऽदेशात्किलिञ्जेऽधुना।
आसन्नो हरि-नापितोऽपि निकटे पेटीं निधायात्मनो
(वैचित्र्ये जगतोऽपि दैवविधितो योगः समानात्मनोः)।।१७२।।

आसीत्काममसौ तु नापितकुलो जात्याऽत्र दासो हरि-
स्तस्याभूदधिकः परन्तु कटवा-ग्रामे प्रभावो भरः।
आसीत्पूर्वत एव शुद्धभगवद्भक्तः स्वभावादयं
पञ्चोऽप्येष च सर्वनापितनृणां (रामेऽवरो धीवरः)।।१७३।।

पञ्चायतेषु नदियास्थितनापितानां
द्वीपे नवेऽत्र महतोऽपि तथा महत्सु।
आहूयते जनतयैव स निर्णयार्थं
सर्वे तथाऽस्य वचनं त्वनुपालयन्ति।।१७४।।

पूर्वन्त्वेष तु पूर्णसज्जितयतिश्रीकाश्रमस्यामुखं
पश्यत्यत्र तथैकवारमधुना दासो हरिर्नापितः।
संन्यासिद्विजवेष्टिताऽमलमखश्रीवेदिकां तत्पुनः
श्रीगौराङ्गमुखाब्जसम्मुखमलं ध्यायन् यथैवाभवत्।।१७५।।

नासीदस्य तु तृप्तिरेव मधुरालोकाद् भवन्ती प्रभोः
पश्यत्येष मनोहराकृतिमिमां मूर्तिं यथाऽयं यथा।
आकृष्टं भवदस्ति तस्य हृदयं गौरे तथैवाधिकं
पश्यन्नेवमसौ निमेषरहितञ्चासीत्क्षणं तन्मुखम्।।१७६।।

दृष्टं निमायिहृदयप्रभुणा स्फुटं तत्
काष्ठस्य सोऽयमभवन्ननु मूर्तिरेव।
संबोधनेन तदयञ्च तमाह 'बन्धो!
कार्यं द्रुतं कुरु, कथं कुरुषे विलम्बम्'।।१७७।।

साम्प्रतभावादन्यमनस्कं 'किन्तु महाराज!' द्रुतमूचे।
'किञ्च परं, क्षौरं कुरु शीघ्रं, तत्तु तथाऽऽहूतस्त्वमनन्यः'।।१७८।।

'केशास्तु भवतः सन्त्यम्यलघवः।
जानेऽलकभरं नो सज्जयति तु ?'।।१७९।।

'सत्यं त्वस्ति, परं तत्संन्यासस्य हि काले।
शास्त्रीयं तु विधानं, पूर्णं मुण्डनमेषाम्'।।१८०।।

'अस्तीदं वचनं स्फुटन्तु नदियाबन्धो! महाराजजी!
कामं वा प्रियमप्रियन्तु मनुतां, मद्भावि न द्वीपजात्।
कर्मेदन्तु कदापि निर्दयमहो! चाज्ञापयेच्चेद् भवान्,
शक्तः कर्तुमहं निजक्षुरिकया स्वस्निग्धसूनोर्वधम्।।१८१।।

एतेषां ननु कर्तनस्य तु गुडश्यामालकानां न मे
सामर्थ्यं, क्षुरिका चलिष्यति च नो कौशेयतुल्यात्मसु।

एतत्कुञ्चितकुन्तलेषु मम सा गौरप्रभोऽत्र स्खलेत्,
कर्मेदं मम शक्तितोऽस्ति तु बहिः (स्यान्नापितो बालवित्)।।१८२।।

भूयो वसन्ति कटवाकलितेऽपि चान्ये
ग्रामेऽत्र नापितजना ननु गाङ्गतीरे।
केनापि तेषु भवतः करणीयमेतत्,
स्वप्नेऽपि नो धरतु चास्य मया तथाशाम्'।।१८३।।

ऊचेऽसौ 'हरिदास' तत्प्रकटयन् स्वाधीरतां श्रीप्रभुः
'काले त्वं कुरु नाऽत्र कर्मणि शुभे बन्धो! मम प्रस्तरम्।
श्रीकृष्णेन तथाहि मेलितुमहं वर्तेऽधुना व्याकुलः
कार्येऽस्मिंस्तु सहायको मम भवन् भूयादनन्तं सुखी।।१८४।।

कार्येऽत्र मे प्रियहरेः सहयोगदानात्
कल्याण-मङ्गलमवश्यमतो भवेत्ते।
वित्तञ्च दास्यति तथा भगवान् यथेच्छं,
स्थाता सुखी सततमत्र ममाशिषा त्वम्'।।१८५।।

ऊचे शुष्कहसं विहस्य तरसा दासो हरिर्नापितो
'वित्तं त्वस्ति न मे, म्रियेत सुतको वा काममद्यैव मे।
कामं सम्प्रति कुष्ठमेव गलितं देहेऽखिले स्यान्न किं
कर्मेदन्तु मया प्रभो! न भविता (लोभी कदाचित्सुखी)।।१८६।।

स्वर्गस्य लौकिकधनस्य तथाहि लोभं
दत्वा परं कमपि वञ्चयतां भवान् वै।
नेच्छामि तानि, नगरात्परनापितं किं
स्थानेऽत्र नाह्वयति? यो द्रुतमेव कर्ता'।।१८७।।

'सम्पन्नो हरिदास! सम्प्रति कथं भावी विना मुण्डनं
संन्यासस्य विधिस्त्वदोयतिकृतौ साक्षी त्वमेकोऽपरः।
दीने दुःखिनि निर्धने न कुरुषे स्थाने दयां त्वं कथं?
श्रीकृष्णाय तथाऽऽकुलोऽस्मि, पथि मे त्वेवं करोष्यश्मकम्।।१८८।।

भ्रातः! पश्य, तथात्मनस्त्वनुमतिं सद्धर्मपत्न्यारिह
प्राप्तोऽहन्तु विगृह्य, मे च जननी मह्यं तथाज्ञां ददौ ।

संन्यासी भवितुं, पुनः पितृसमः पूज्यश्च मातृष्वसुः
स्वामी कारयति स्वयं स्वकरतः संन्यासकृत्यं सुधीः।।१८६।।

श्रद्धेयो गुरुवर्यपूज्यचरणः श्रीभारतीजी त्वपि
स्वीकृत्याऽस्ति ममार्थनां, त्वमधुना कार्ये ममास्मिञ्छुभे ।
विघ्नोपस्थितिकं करोषि किमिदं?, त्वं मां निमायिप्रियं
संन्यासग्रहणात्तु वारयसि किं?' (बन्धुर्न विघ्नप्रदः)।।१६०।।

'क्वाहं भवन्तमपरं तु निवारयेऽतः
संन्यासिको भवतु सम्प्रति काममेव।
मेऽदो न भावि (कथनं मम) पापकृत्यं
कस्मादपीह परतः कुरु नापितत्वम्'।।१६१।।

'अहोऽस्ति नेयं हरिदास! वार्ता,
त्वयैव कार्यं भविता तथेदम्।
मां ब्रूहि तत्त्वं भयमस्ति यत्ते'
(बन्धोर्भये नात्र निमायिशान्तिः)।।१६२।।

ऊचे सम्प्रति नापितोऽश्रुनयनः 'सर्वाधिकं मे भयं
त्वेतत्सुन्दरकुञ्चितालकभरस्थानश्रियां शीर्षतः ।
गौराङ्गस्य पृथक् तथैव करणेऽलोकात्मनो जायते,
पश्याम्यत्र पुनः स्वधर्मविषयप्रत्यक्षभावक्षतिम्।।१६३।।

पूतानां भवतो यया क्षुरिकयाऽप्यद्याऽलकानामहं
संन्यासाय करोमि मुण्डनमहो! तामेव भूयः कथम्।
शीर्षैः स्पर्शयिताऽनिमायिमनसां सामान्यदेहात्मनां
(स्पर्शो यत्पदयोस्तथाहि, भविता मूर्ध्नोऽस्य कीदृक्पुनः)।।१६४।।

स्पर्ष्टा येन निमायिपण्डितशिरो हस्तेन, तेनात्मनो
मुण्डं नैव पुनः स्पृशेयमवनौ सर्वस्य कस्याप्यहम्।
स्वस्यैवं परिवारपोषणमहं कुर्वेऽधनो नापितः
केशानां क्रिययैव, कर्म चलिता भूयो मदीयं कथम्?'।।१६५।।

'त्यक्त्वा त्वं हरिदास! तत्परमतोऽदोनापितत्वक्रियां
कञ्चित्तु व्यवसायमन्यमपृथुं-स्थूलं पृथिव्यां क्रियाः।
संन्यासस्य ममास्य कर्मणि परं मुख्यं त्वयैवाधुना
भव्यं किन्तु सहायकेन' (लगति क्वाप्यत्र पात्रे मनः)।।१६६।।

एतावत्क्षणमेष तु स्वमभवद् बद्ध्वा स्थितो नापितः
स्थाने किन्त्वधुना स्थिरेण मनसा नाभावि तेनात्मनः।
उच्चैः सोऽयमभून्निमायिपुरतो दासः सुभावो रुदन्,
ब्रूते स्वात्मगतं रुदन्ननु रुदन् (वैवश्यमश्रु क्वचित्)।।१९७।।

'एतद् भोः! क्षुरिकान्तु चालयति मत्कण्ठे भवान् हे प्रभो!
हा! शक्तश्च तथाहि केन विधिना कर्तुं भवेयं पृथक्।
गौराङ्गस्य महाप्रभोस्तु भवतः केशानिमान् सुन्दरान्,
क्षन्तव्योऽयमहं, तथाहि करणेऽदःकर्मणः सर्वथा।।१९८।।

मन्तव्यस्त्वसमर्थः क्षुद्रो नापितकोऽसौ'।
(सामान्यः कुजनोऽहो! स्प्रष्टा दिव्यशिरस्कम्?)।।१९९।।

दृष्टं श्रीप्रभुणा यदा सहमतो न त्वस्त्ययं केनचित्
क्षौरार्थं विधिना, निमायिसुहृदा कर्तुं मनोऽकारि तत्।
स्वैश्वर्येण, नवस्वरेण यतितं न्यासाय बन्ध्वात्मना
'कार्यं नो हरिदास! कालहरणं, क्षौरं विधेहि द्रुतम्'।।२००।।

आसीन्न स्ववशस्तु सम्प्रति हरिर्बिभ्यत्कराभ्यां प्रभोः
स्निग्धश्यामलकुञ्चितालकभरं पस्पर्श दासस्त्वसौ।
मुञ्चन् वाष्पमभून्निमायिशिरसः क्षौरंश्च कुर्वंस्तथा
कुर्वन्नेव कदापि तादृशमपि स्थाने व्यरंसीत्पुनः।।२०१।।

उच्चै रोदिति विह्वलश्च भगवन्नामानि सूच्चारयन्
भूयस्त्वेष करोति, बोधयति तं गौरो यदा स्वाग्रही।
उत्थाय क्षणतो हि नृत्यति पुनः क्षौरंश्च कुर्वन्नसौ
तन्मध्ये हसतीह रोदिति तथा गायत्यतो नृत्यति।।२०२।।

क्वाप्येवं ननु सायं यावत्क्षौरमयं तत्।
गौराङ्गप्रभुधाम्नः कर्तुं सम्प्रति शक्तः।।२०३।।

गौराङ्गो हरिदासनापितमहो! क्षौरे समाप्ते प्रभुः
प्रेम्णा गाढकमालिलिङ्ग सहितः, प्रेमावतारस्य तत्।
प्राप्याऽऽलिङ्गनमेव सोऽयमपतत्पृथ्व्यां क्षणान्मूर्च्छितः
संज्ञाशून्यनरो यथाऽस्ति पतितो यावत्क्षणं चाधिकम्।।२०४।।

चैतन्येऽधिगते स च व्यपगते तावत्क्षणे तूत्थितः
सर्वं क्षौरककर्मवस्तु निजकं तस्मिंस्तथैव क्षणे।
चक्रे कल्मषहारिणीभगवतीभागीरथीनिर्मल-
श्रीधारासलिले प्रवाहित-(महो! सङ्गः प्रभावी क्वचित्)।।२०५।।

तत्करोत्युच्चकैः। श्रीहरेः कीर्तनम्।।२०६।।

तच्चाल्पक्षणमेव तादृशविधेः संसर्गतः सत्प्रभोः
संसारावधिकं स भागवत-ना जातोऽमरो नापितः।
अद्याप्यत्र समाधयश्च कटवा-पार्श्वे हि तेषां प्रभोः
केशानां 'मधुमोदक'-स्वमिधया तन्मुण्डितानां तथा।।२०७।।

लोकानां वरभाग्यशालिजनुषस्तन्नापितस्यापि च
प्रेमत्यागविरक्तिपाठमपरं संपाठयन्तस्तथा।
दासस्याध्वनि घोषयन्त्यसदृशं तस्यानुरागं हरेः
(सच्चेतोऽनुरतिर्हि चेतनजगत्सन्मार्गनिर्देशिका)।।२०८।।

तच्छ्रद्धेयसमाधिदर्शनदिशा श्रीगौरभक्ताः स्वके
नेत्रे सम्प्रति कुर्वतेऽत्र सफले, तत्स्थञ्च पूतं रजः।
कुर्वन्तो निजमूर्ध्नि तत्स्थघटनास्मृत्या रुदन्तस्तथा
प्रेमोद्रेकवशात्पतन्ति, कथितं (धन्यं) तदैवावनौ-।। २०९।।

१३. पारस ! किं स्पर्शस्तव वाच्यः ?

अपि बहुमूल्यत्वे स्थायित्वे तेजस्वित्वे भूमौ
धातूनामिह हेम्नः स्थानं व्यवहारे सर्वोपरि
आत्मस्पर्शाल्लौहं कुरुषे तद्धेमैव सुवर्णम्।
चिन्तामणिरपि निखिलं यच्छति केवलचिन्तनयत्नात्
तस्मै, यो तन्निकटे याचति धरणीतरतरुसदृशः।
सन्तोऽलौकिकहृदयाः पुरुषा निजनैसर्गिकभावैः
सच्चित्परमानन्दस्फुटतां पात्रस्वगतां विदधति।।

सार्धं हि गौराङ्गमहाप्रभोर्गुणै-
रहैतुकी सा हरिदासभावना।
अपीह जाताऽमरतां, तथा हरि-
र्दासोऽपि पूज्योऽमत गौडमण्डले।।२१०।।



# श्रीकृष्ण-चैतन्यः

१४. शरणं मधुररसाकुलमनसां श्रीकृष्णश्चैतन्यः।
वङ्गभूमिगङ्गापावनतटनदियापुण्योत्सङ्गे
जगन्नाथगृहिणीशचिदेवीजातौ बालावतुलौ।
विश्वरूपविश्वम्भरसंज्ञौ सुन्दरमधुराकारौ
प्रथमः शान्तगभीरप्रतिमस्त्वनुजश्चञ्चलकुतुकी।
तत्फलितं प्रथमप्रव्रजनं परनिमायिगार्हस्थ्यम्
मध्येयौवनमयमपि गृहतः प्रियानुरागी यातः।
शिक्षापरिणतिशशिसमलोचनहृदयाह्लादककीर्तिम्
कीर्त्या, भुवि विद्याफलविरतिं भक्तिप्राणप्रीतिम्
द्योतयितुं श्रीगौरनिमायी भारतिचैतन्यात्मा
संन्यस्तः, फलितः कलिकाले कृष्णरागराधात्मा॥

अस्ति त्वग्निमयं हि जीवनमहो! संन्यासतात्पर्यकं
ज्ञानाग्नौ निखिलं त्वतीतविषयं संदह्य सर्वात्मना।
संसारे स्वयमग्निरूपभवनं, संन्यासनाम्नस्तथा
ह्यादर्शोऽस्त्ययमेव चास्य महतस्त्यागव्रतस्यावनौ॥२११॥

पूर्णत्वेन ममत्वबद्धजगतोऽभावादुपेक्षां क्रिया,
मैत्रीभावमलं निधेहि विमलं त्वं जीवमात्रे स्वतः।
संबन्धस्य परिग्रहस्य च परित्यागं तु संसारिणः
सम्पूर्णस्य विधाय तत्त्वभगवत्सन्नामनिष्ठो भवन्॥२१२॥

श्रीवैराग्यविशुद्धरागसिको लोकोत्तरस्त्वं भव,
क्षिप्यात्सर्वमुदन्तमेव हृदयान्निःसार्य सांसारिकम्।
श्वेतं सत्त्वगुणस्वरूपमपि तद्वस्त्रं सितं मुञ्च तत्-
सत्त्वादित्रिगुणात्तथोपरि महासत्त्वे सदा स्याः स्थिरः॥२१३॥

संसारेऽत्र ततोऽग्निवर्णमखिलं संन्यासिनोऽस्त्यम्बरं,
यज्जीवन्नपि चाग्नयेऽर्पिततनुर्लोके स्वतो दृश्यते।
श्रीनारायणभिन्नमेव कथमपि ह्यन्यं न पश्यत्यसौ
(न्यस्तस्य प्रथते तदेव करणग्रामेऽत्र सच्चित्परम्)॥२१४॥

तत्पूर्वाश्रमनाम चापि धरते संन्यासदीक्षाक्षणे,
श्रीदीक्षागुरुदत्तकेन च महत्सत्त्वप्रकाशात्मना।
सङ्केतः क्रियते तथाऽस्य वपुषो नाम्ना नवीनेन तत्
संन्यासी भुवि नामरूपरहितो वै जायते वस्तुतः।।२१५।।

क्षौरं कर्म तथा समाप्तमभवत्संन्यासहेतोः प्रभोः,
चूडासूत्रविहीनशीर्षतनुको जातोऽत्र सम्प्रत्ययम्।
स्नानं गाङ्गसुशीतलाम्बुनि गतश्चक्रे सति क्षौरके,
प्राप्तोऽसौ परिणम्य वस्त्रमधुना वेदीसमीपे प्रभुः।।२१६।।

आसीनस्त्वतिदैन्यभावसहितो बद्धाञ्जलिः सम्मुखे
श्रीमत्केशवभारतीवरयतेस्तत्कारयित्वाऽखिलम्।
संन्यासोचितकर्म तत्र विजयाहोमादिकं भारती
दातुञ्चास्य तथोद्यतोऽस्ति यतिकस्तन्मन्त्रदीक्षां प्रभोः।।२१७।।

जिज्ञासां विनयेन संयुतकरः संन्यासमन्त्रग्रहे
गौराङ्गः कुरुते स्म, सत्तुमवदच्चैतं स्वपार्श्वे यतिः।
आसीनो गुरुदेवभारतिगिरा तत्सन्निधौ च प्रभु-
(र्लोके सन्निधिरत्र सात्त्विकहृदः सान्निध्यलाभः सताम्)।।२१८।।

कुर्वन्नस्ति मनाग् विलम्बमिव तत्सन्मन्त्रदाने यति-
स्तद्यौत्सुक्यमयं प्रभुः प्रकटयन् पप्रच्छ 'चैवं श्रुतम्-।
वक्तव्यो नहि कस्यचित्तु पुरतः संन्यासमन्त्रो मया
(कर्णे श्रीगुरुणाऽर्पितं जपति यं शिष्यः, स मन्त्रः स्मृतः)।।२१९।।

'आ'मुक्तवान् श्रीयतिभारतीजी
'संन्यासमन्त्रः परमो हि गोप्यः।
शास्त्रेषु चोक्तं, गुरुवर्गभिन्ने
सर्वस्य कस्यापि स न प्रकाश्यः'।।२२०।।

श्रुत्वेदं यतिमुक्तवान् प्रभु'स्त्वेकं तत्त्वयि मे निवेदनम्।
गुप्तं किन्तु वचस्तथाऽस्ति तत्कर्णे चैव वदेयमत्र ते'।।२२१।।

प्रभुदिशं नयन् स्वदक्षिणश्रवणमाह भारतियतिः।
'कथय नूनमामवश्यमाम् वचनमस्ति कीदृशं तथा ?'।।२२२।।

श्रीमद्भारतिकर्णपार्श्वमनयद् गौरप्रभुः स्वं मुखं
मन्दं मन्दमथाह चै'कदिवसेऽपश्यं तथैकं द्विजम्।
स्वप्नेऽहं, यतिरेव सोऽप्यभवदास्तद्रूपवर्णौ तथा
बह्वल्पं भवतः समौ दृशिगतौ (स्वप्नोऽद्भुताऽऽदर्शकः)।।२२३।।

संन्यासी भवितुं निदेशनमयं स्वप्ने ददावेव मां,
मत्कर्णे स्वयमाह साम्प्रतमहो! संन्यासमन्त्रं तथा।
मन्त्रः स त्वधुनापि मत्स्मृतिपदे चास्ते यथावत्पुन-
स्तं पूर्वं कृपया शृणोतु यदयं शुद्धस्त्वशुद्धोऽथवा'।।२२४।।

उक्त्वेदं यतिभारतीश्रवणके मन्त्रं तमेव प्रभुः
स्वप्नाप्तन्तु पपाठ, पूर्वमधुना मन्ये प्रकारान्तरात्।
संन्यासी विहितोऽस्तु भारतियतिस्तेन स्वशिष्यः स्वयं
(कर्णे मन्त्रजपं करोति गुरुकः, शिष्यस्तु कश्चिद्गुरोः)।।२२५।।

श्रुत्वा साम्प्रतशुद्धशुद्धमपरञ्चास्याद्यथावत्प्रभोः
श्रीमत्केशवभारतीयतिवरः संन्यासमन्त्रं तथा।
प्रीतौ गद्गदकण्ठतः प्रकटयन् प्रोचे मनाग् विस्मयं
(पुत्रः पुण्यवतोऽतुलो, ऽतितपसः शिष्योऽद्भुतो लभ्यते)।।२२६।।

'कृष्णप्रेम यदाऽऽप्तमस्ति ननु ते, भूयस्तदा त्वत्कृतेऽ-
गम्यः को विषयस्तथैव भविता? सारोऽस्ति तत्प्रेम वै।
पूजापाठतपोजपादिसहिताः संन्यासवन्याश्रमा
धर्मास्ते निखिला भवन्ति भुवने प्राप्त्यै तु तस्यैव ते।।२२७।।

कृष्णप्रेम निमायिभावमनसः प्राप्ताऽस्ति यस्यापरं
मन्त्रस्य ग्रहणं तथाहि भुवने दीक्षाव्रतं तत्कृते।
स्पष्टं केवललोकशिक्षणमयं, गृह्णासि संन्यासकं
मर्यादाऽवननार्थमेतदमलं जाने त्वहं पूर्णतः।।२२८।।

श्रीमत्कृष्णसुकीर्तनं त्वमभवो गेहस्थितोऽपि क्षमः
कर्तुं, किन्तु तथा प्रदर्शयितुमा! लोके गृहस्थो वसन्।
कृत्यं लौकिकवैदिकन्तु गृहिणां वेदादिशास्त्रे कृतं
येषामस्ति विधानमेतदखिलं कुर्वन्नवश्यं भवेत्।।२२९।।

तच्छास्त्रश्रुतधर्मकृत्यकरणं द्वारा न ते सम्भवं
सम्प्रत्यस्ति गृहे, करोष्यनुसृतिं संन्यासधर्मस्य तत्।
पूर्णा ज्ञानमयी न यावदवनौ निष्ठा भवेदात्मनि
प्रीतिः श्रीभगवद्गुणेषु हृदये यावत्तथा नोद्गता।।२३०।।

श्रीवेदस्मृतिशास्त्रकेषु मुनिभिर्निर्दिष्टधर्माः सदा
कर्तव्या ध्रुवमेव तावदवनीस्थानस्थितैर्मानवैः।
गार्हस्थ्यस्थितितस्ततोऽत्र भवता लोके कृतं पालनं
सम्यग् वैदिककर्मणां (वसुमतीयं कर्मलोकाऽभिधा)।।२३१।।

कर्मत्यागमनास्तथैव कुरुषे पूर्वाश्रमस्याधुना
त्यागं, तद्यतिधर्मकानुसरणात्संन्यासधर्मस्य वै।
कर्ता कर्कशताप्रदर्शनमहो! दण्डिस्वरूपात्सदा,
त्वत्कर्माऽखिलमेतदेव भुवने सल्लोकशिक्षार्थकम्'।।२३२।।

एवं स्तुतिमस्य विधाय तद्भूयोऽत्र निमायिहृदः प्रभोः।
दीक्षां यतिकेशवभारती मन्त्रस्य तु दातुमथोद्यतः।।२३३।।

एकेनागुरुणाम्बरेण यतिकः संच्छाद्य कर्णौ प्रभोः
श्रीमत्केशवभारती कथयते संन्यासमन्त्रं गुरुः।
तस्मिन्नेव भुवि श्रुतेऽत्र पतितो मन्त्रे प्रभुर्मूर्च्छित-
स्तच्चक्रन्द सचीत्कृतिं पृथु गिरा 'हा कृष्ण! हा कृष्ण!' सः।।२३४।।

पार्श्वे चैव निषण्णो नित्यस्तस्य सहायः।
भूत्वाऽचेष्टत नेतुं संज्ञाने प्रभुमेतम्।।२३५।।

सर्वं पूर्वधृतं सितं प्रभुतनोर्वस्त्रं परित्याज्य तत्
काषायाम्बरमग्निवर्णकमदाद् धर्तुं यतिः पूर्वतः।
कौपीनद्वयमेकमस्य च बहिर्वासस्तथैकां पुनः
कन्थां तत्कटिवस्त्रमेकमपरं भिक्षार्थवस्त्रं प्रभोः।।२३६।।

रक्तं भास्वरमम्बरं तदखिलं धृत्वा तदानीं प्रभोः
शोभाऽजायत तादृशी सितशरत्कालेऽखिलात्मप्रियः।
मन्ये खे शिशिरार्तलोकवपुषां दुःखं भवेत्सारयन्
बालोऽर्कोऽरुणवर्णकोऽलमुदितो (वर्णागमोऽर्कोऽनलः)।।२३७।।

गौराङ्गस्य सुवर्णवर्णतनुके काषायवर्णाम्बरं
स्थाने चाधिकमेव सुन्दरमभूत्तस्य प्रतीतं तदा।
कन्था स्कन्धगताऽस्य शीर्षविषये बद्धञ्च लघ्वम्बरं
चासीत्काष्ठकमण्डलुश्च करयोः संन्यासदण्डस्तथा।।२३८।।

मुञ्चन्नश्रु च 'कृष्ण!कृष्ण!' मुखतश्चास्ते तथैव ब्रुवन्
भद्रं रूपमिदं त्रिलोकसुभगं नेत्रात्मनोः पावनम्।
सर्वं दर्शकवृन्दमाश्रमधरास्थल्यां तदोपस्थितं
दृष्ट्वाऽवाग्वदनं यथा प्रभुसतः स्थाने बभूव क्षणम्।।२३९।।

आसंश्चेतनकाष्ठमूर्तिसदृशाः सर्वे निषण्णास्तदा,
संलक्ष्याद्भुतविग्रहं प्रियतमं लावण्यरूपान्वितम्।
सर्वेषां स्वयमेव नृत्यति मनो भूत्वा विमुग्धं प्रभोः
प्रेमस्रोतसि तद्विलक्ष्य (नयनाह्लादो मनोनर्तकः)।।२४०।।

सर्वेषान्तु निमायिभावनयनप्रेमाश्रु चासीत्पतत्-
तत्रासीदवनम्य सम्प्रति मनाक् स्थाने प्रभुश्च स्थितः।
एकस्मिन् पुर एव भारतियतिश्चासीत्तथोच्चासने
गाम्भीर्येण पुनः स्थितः (स्थिरतया स्वस्मिन् धियो योगिता)।।२४१।।

उच्चैः श्वासमपीह कोऽपि तु धरेत्स्यात्तत्तदापि श्रुतं
मन्येऽत्राश्रमपक्षिणोऽपि निजकं रुद्ध्वा भवेयू रवम्।
गौराङ्गाद्भुतशोभयाऽस्य वशगो लावण्यरूपं रसं
स्थित्वा स्यात्पवनोऽपि सम्प्रति पिबन् (स स्याद्रसो यत्तृषा)।।२४२।।

संबन्धे हृदि चिन्तयन् यतिवरः संन्यासनाम्नः प्रभोः
सम्प्रत्यस्ति, स भारती गुरुपदस्तस्य स्वभावान्वयम्।
नामैच्छत्परमप्रियस्य सुधियः स्वस्यास्य शिष्यस्य वै
धर्तुं सार्थक-(मत्र नाम भुवने स्थाय्यस्ति रूपात्तु नुः)।।२४३।।

नायात्येव तु नाम सुन्दरमिव ध्यानेऽत्र किञ्चिद्गुरोः
साक्षाद् देविसरस्वती ध्रुवमदात्साहाय्यमस्यां कृतौ।
लब्धा दृष्टिरनेन तत्क्षणमहो! श्रीभारतीभादिशा-
चैतन्यं प्रियकृष्णभक्तिरहिते लोके ततान प्रभुः।।२४४।।

यस्मिन् साम्प्रतजीवने नृवपुषः श्रीकृष्णभक्तिर्नहि
स्थाने जीवनकं त्वचेतनमिदं (कृष्णः स्वरूपात्मदः)।
चक्रेऽचेतन-जीवमेष भगवन्नामाध्वना चेतनं
(कश्चिच्चेतनपक्षपातिहृदयः काव्ये प्रमाता भवे)।।२४५।।

एवं विचिन्त्यात्मनि भारतीगुरु-
श्चकार शिष्यस्य निमायिचेतसः।
'श्रीकृष्ण-चैतन्य'-सुनाम भारती-
त्युपाधिनाऽमुष्य तथोचितं ततः।।२४६।।

जातश्चिन्तनलब्धितः प्रमुदितोऽत्यन्तं तथा भारती,
ब्रूते नीरवतां तथाऽयमखिलां तां भञ्जयञ्छ्रावयन्।
'श्रीकृष्णस्य तु नामभिः सुमधुरैश्चैतन्यसंचारणं
लोकेऽनेन निमायिना कृतमहो! चाग्रेऽपि तत्कारिता।।२४७।।

तच्चाद्य क्षणतोऽस्य नाम भवति 'श्रीकृष्णचैतन्य'-जी,
संज्ञाऽऽचार्यपरम्परासु विषयेऽस्माकं तथा 'भारती'।
तत्संन्यासिषु भारते भुवि तले स्वामी च दण्डी प्रभु-
र्युक्तोऽयं भविताऽन्तभारतिपदः श्रीकृष्णचैतन्यतः'।।२४८।।

श्रुत्वैवेयदयं प्रभुस्त्विदमतश्चागत्य भावे ब्रुवन्
'श्रीकृष्णं मिलितुं निजप्रियतमं गन्ताऽस्मि वृन्दावनम्'।
भागेऽन्यत्र दधाव, तत्र समये स्थाने प्रभोर्धावनाद्
(तिष्ठत्यत्र कथं स्थिरः प्रियतमेऽदृष्टे नरात्मा भवे?)।।२४९।।

स्पन्दन्तौ दिवि दक्षिणे भुवि करे काषायवस्त्रध्वजो
दण्डः, पात्रकमण्डलुस्त्वतिशयं वामे प्रतीतौ वरम्।
धावन्नस्ति महाप्रभुर्हरि-हरीत्युच्चैः प्रियञ्चाह्वयन्
दृष्ट्वेदं बहवो जना धुरि गता मार्गं प्रभो रुन्धते ।। २५०।।

अग्रे स्वाध्वनि तत्स्थितं बहुजनं दृष्ट्वा रुदन् सोऽभणत्-
'श्रीवृन्दावनमार्गमद्य दिशत प्रेम्णा तु मां भ्रातरः !।
श्रीकृष्णं त्वधिकं निजं प्रियमहं द्रष्टुं तथास्म्यातुरः
शान्तिर्मे नहि तावदत्र, मिलितः कृष्णो न यावद्दृशोः।। २५१।।

तद्भ्रातस्त्यजत मे निखिलास्तु मार्गं,
दत्ताऽऽशिषो ननु तथा च निमायिबन्धोः।
प्राणप्रियं प्रियतमं स्वकमाप्नुयाम,
(स्थाने भवन्ति वरभाग्यवतः सहायाः)।। २५२।।

नित्येनोक्तमथ 'प्रभो! प्रथमतः कृत्वा प्रणामं भवान्
पूज्यस्य स्वगुरोस्तु पद्मपदयोरायाहि, भूयश्च सः।
आज्ञां यद्विधिकां करोति भगवान्, कर्ता तदेव प्रभु-
स्तस्याज्ञाग्रहणं विना तु गमनं ते नोचितं कुत्रचित्'।। २५३।।

तस्थौ तच्च निशम्य सौम्यहृदयः स्थाने मनाक् चिन्तयन्,
निर्वृत्तः स च मौनमाश्रममुखोऽदत्वा किमप्युत्तरम्।
मौनं तेऽपि जनास्तथा प्रभुमनु स्थाने च सर्वेऽचलन्
(शिष्टाचारविधिः सनातनपथे पाल्यो हि सर्वाश्रमे)।। २५४।।

सम्प्रत्याश्रममेत्य सात्त्विकविधेः संन्यासिनां दण्डिनां
साष्टाङ्गं प्रणतिं प्रभुर्निजगुरोश्चक्रे पदाम्भोजयोः।
लब्ध्वाऽऽदेशमथैष भारतिमहाराजस्य तत्रैव च
स्थानेऽस्यां निशि तन्निवासमकरोदासेवमानो गुरुम्।। २५५।।

अद्याऽऽसीदधिकाऽप्यतीतदिवसात्संकीर्तनस्य च्छटा,
श्रीकृष्णस्य सुकीर्तने च भगवच्चारित्र्यसच्चिन्तने।
रात्रिः सापि निमायिसौहृदवतस्त्वेव व्यतीता प्रभोः
(सत्पात्रस्य मनोऽनुकूलमखिलो निर्याति देशः क्षणः)।। २५६।।

एवं प्रभुः साम्प्रतलोकशिक्षा
निमित्तमद्याश्रमगाङ्गतीरात्।
निर्देशयन्नस्ति गुरोर्महत्ता-
(मुपासना दोग्धि रसं गुरूणाम्) ।। २५७।।



# राढदेशे उन्मत्तभ्रमणम्

१५. अन्तः स्यात्किं तमसो जगतः ?
सुखदुःखात्मकजगतीचक्रं विद्युच्चेतनचलितम्
अविरलगतिकं नानास्थितिकं जीवानालोकयते।
संस्कारः परिवेशश्चोभौ मूलधनं जीवानाम्
अन्योन्यं संघर्षं कुरुतो, यदि विपरीतौ भवतः,
तौ चेत्सदृशौ तत्सरतोऽग्रे, निजानुरूपं जयतः।
एतच्चक्रफलन्तु तमोऽन्धं दुरन्तपारमसंज्ञम्
केवलसच्चित्परमानन्दोपासनयाऽस्मिन् लोके
निजचैतन्योद्बोधपूर्वकं भवसागररसमुदिता ।।

रात्र्यन्ते सति चारुणोदयकृतश्च्छन्नोऽधुना रक्तिमा
पूर्वस्यां दिशि भारतीनवयते रक्ताम्बरस्य प्रभोः ।
मन्येऽस्ति प्रतिबिम्बमद्य पतितं व्योम्नि स्फुटं निर्मले
(भूमेर्व्योम तथानिमायिविरतिर्याति क्षणात्कस्यचित्) ।।२५८।।

श्रीसंन्यासिनवीनगौरसुहृदं श्रीकृष्णचैतन्यकं
द्रष्टुञ्चास्ति दिवाकरोऽपि भगवानुत्कः प्रतीतो यथा।
आकाशे द्रुतवेगतोऽद्य गमनं कुर्वन्नसौ लक्षितः
(काषायाम्बरधारिहेमतनुकप्रेमान्तरोऽत्राऽपरः) ।। २५९।।

प्रातः साम्प्रतनित्यकर्मविधितोऽपूर्वो निवृत्तः प्रभु-
स्त्वात्मश्रीगुरुदेवपादकमले चक्रे प्रणामं यतिः।
आज्ञां याचति भारतीं निजगुरुं गन्तुन्तु वृन्दावनं
(वृन्दाकाननमत्र भक्तिमनसां संन्यासिनामाश्रमः) ।। २६०।।

संन्यासिप्रवरस्तु भारतिमहाराजो विरक्तो, भवन्
मत्तः प्रेम्णि, नवीनशिष्यसुहृदो जातो निजस्याधिकम्।
दुःखी, स्वात्मवियोगदुःखमपरं स्मृत्वा, द्वयोर्नेत्रयोः
पूर्णोऽस्याश्रुभरो जगाद यतिकस्तन्मार्जयन् भारती ।। २६१।।

'कालं (त्वासमहं बुधन्) कतिपयं हे कृष्णचैतन्य ! ते
स्थित्वा साम्प्रतसङ्गतावहमपि स्थाने सुपाने क्षमः।

कृष्णप्रेमरसामृतस्य भविता,ऽन्यत्र त्वमस्युद्यतो
गन्तुं किन्त्वधुनैव, मेऽस्ति हृदयं त्वेतेन दीर्णं भवत्।। २६२।।

त्यागी त्वस्मि गृहस्थ यद्यपि तथाऽहं वीतरागी पुनः
संन्यासी जनतोक्तितस्त्वभिहितो, भूयोऽपि जाने न किम्?।
अस्ति त्वद्विरहान्मदीयहृदयं वै कम्पमानं तथाऽ-
तीव व्याकुलताऽस्ति चैकविधिका हृद्युद्गतैव स्वतः।। २६३।।

भ्रातर्निमायिन्! समयं ततोऽल्पं
ममाश्रमे तिष्ठ दृशोः पुरस्तात्।
यत्रापि भूयः क्वचिदस्तु यानं
सहैव यावः पथिकौ तथोभौ' ।। २६४।।

नम्रो बद्धकरद्वयाञ्जलिरयं चैतन्यदेवोऽभणत्-
'कर्तव्यं गुरुदेव! मर्त्यभुवने सर्वप्रधानन्तु मे।
आज्ञापालनमस्ति तेऽत्रभवतः, कुर्यां परं किं न्वहं,
श्रीकृष्णेन तु मेलितुं मम मनोऽस्तीह प्रियेणाऽऽतुरम् ।।२६५।।

शान्तिः सम्प्रति नास्ति मेऽत्र हृदयेऽदृष्ट्वा स्वकृष्णं प्रियं,
श्रीकृष्णं प्रियमाप्नुयां स्वमपरं त्वेवं ददात्वाशिषः।
कुर्वन् स्यां स्मरणं तथाहि भवतः पादाब्जयोः सर्वदा
त्वाज्ञामेव लषामि सम्प्रति गुरो'! (चैतन्यभृत्केशवः)।। २६६।।

बद्धो जल्पति भारतीयतिगुरुस्तत्प्रेमपाशे प्रभो-
'श्चेत्त्वं नो मनुषेऽसि च प्रियतमं स्वं गन्तुमेवातुरः।
सार्धं तर्हि चल, त्वयाऽस्म्यपि मनाग् दूरं चलामि' स्वकौ
नीत्वा दण्डकमण्डलू गुरुरपि प्रैतुं सहोक्त्योद्यतः।। २६७।।

अग्रे स्वं गुरुदेवभारतिमहाराजं विधाय प्रभुः
संन्यासी प्रचचाल पश्चिमदिशं, पृष्ठेऽस्य चेलुस्तथा।
आचार्यः शशिशेखरश्च सुहृदो नित्यो मुकुन्दो गदा
भक्तास्तेऽपि (निमायिनो हि भुवने यत्सङ्गिनोऽसौ कृती)।।२६८।।

आयान्तं त्ववलोक्य पूज्यचरणं रत्नं स्वपृष्ठे प्रभु-
स्तं प्रोचेऽधिकमेव दीनहृदयस्त्वा'चार्यदेवाऽत्र हे !।

मद्धेतुं भुवि कष्टमेव भवता भुक्तं सदा पूर्वतः,
कार्यं मन्मुदिताकृतेऽत्र विहितं स्वेच्छाविरुद्धं त्वपि।। २६९।।

मुक्तो भवेयमपि साम्प्रतजन्मतः किं ?
जन्मान्तरन्तु ऋणतो भवतोऽहमात्मा।
एषैव मे भवति पूज्यपदेऽर्थना यद्
द्वीपस्थगेहमधुना हि निवर्ततां स्वम्' ।। २७०।।

श्रुत्वा नाम निवर्तनस्य पतितो रत्नः क्षणान्मूर्च्छितो
भूमौ, तच्च रुदन्-रुदन् कथयते स्वाज्ञाविरुद्धन्तु ते।
कर्तुं कर्म नु शक्तिरेव जगति क्वास्तीह सन्मानवे,
कार्यं तेन तथैव, यस्तु भविताऽऽदेशोऽत्र ते यत्कृते।। २७१।।

इच्छाऽऽसीन्ननु हार्दिकी तु मे कञ्चित्कालमितोऽपि चाधुना।
कुर्यां धन्यमिहात्मजीवनं सन्मूर्तेः सहवासतः प्रभोः'।। २७२।।

स्नेहेनाधिकमेव तत्सरलतापूर्वं जगाद प्रभु-
'र्नेदं तूचितमस्ति नो,ऽद्य दिवसा गेहाद्बहिर्वा त्रयः।
चत्वारो भवतो गता, नु शिशवः किं चिन्तयन्तो गृहे
(नो जाने) स्युरथैव यातु' (भगवान् ध्येयः स्वकीयाश्रमः) ।। २७३।।

आचार्योऽश्रुविमोचनं प्रभुपदे कुर्वंश्च धृत्वाऽवदद्-
'विस्मार्योऽहमथ प्रभो ! न हृदयात्प्रेमस्वरूपात्स्वकात्।
संतापोऽस्त्यधिकोऽपि सम्प्रति नवद्वीपस्य नारीनृणां,
कुर्यात्तानपि दर्शनाच्च निजकाद् धन्यान्नवालोकनात्।। २७४।।

सिद्धस्तथाहं ननु भाग्यहीनः
प्रभोर्न सेवाऽपि कृताऽल्पमात्रम्।
सदानवद्वीपगतोऽपि सेवा-
धर्मादहं वञ्चित एव जातः' ।। २७५।।

एतावत्क्षणमेष वाष्पमभवद्रुद्ध्वा बलादात्मन-
स्तस्थौ सम्प्रति तु स्थिरो न सुमनाश्चोच्चै रुदन् भाषते।
'आचार्योऽत्र सदाऽभवत्पितृसमः कुर्वंस्तु मत्पालनं,
(जन्तोः केवलजन्मदौ न पितरौ, तेऽप्यत्र ये भावकाः)।। २७६।।

संज्ञानं नहि मे तथा निजपितुर्ध्याने स्फुटन्तु स्फुटं
त्वद्द्वारैव सदा पितुस्त्वनुभवं कुर्वन् सुखस्यास्मि तत्।
किं पित्रा सदृशः, पितैव नु भवान् मे, बाल्यतोऽद्यावधिं
सिद्धस्त्वं मयि तन्निजात्मजसमं स्नेही सदा वत्सलः।। २७७।।

एवं किन्त्वहमेव चाभवमहो! तद्भाग्यहीनो नव-
द्वीपे गाङ्गतटे भवत्समहृदः सेवा कृता नो मनाक्।
स्वं देह्याशिषमद्य तादृशमतः शीघ्रातिशीघ्रं लभै
स्वप्राणप्रियकृष्ण-(मात्मजगतोः कृष्णो निरोधाश्रयः)।। २७८।।

गेहं यातु भवांस्तथाधिकमितः कुर्याद् विलम्बं न तत्'-
चोक्त्वेदं स्वकरद्वयेन पतितं भूमौ तथोत्थापयत्।
आचार्यं, वदति प्रभुः सहृदयो गाढं तथालिङ्गयन्,
'याहि त्वं मम मातरं विरहतो भक्तांस्तथादुःखितान्।। २७९।।

सर्वान् सान्त्वय, भाषताञ्च जननीं, स्थाने सुतो दर्शनं
कर्ता सत्वरमेव तच्चरणयोः' श्रुत्वा च वार्तां प्रभोः।
कृत्वाऽऽज्ञां शिरसीह दुःखितमनाश्चाचार्यरत्नो नव-
द्वीपं जन्मधरां निमायिवसुधां गेही निवृत्तो बुधः।। २८०।।

कृतेऽधिकेऽप्यथाऽऽग्रहे न चान्यलोकवृन्दकैः।
अनुष्ठितं निवर्तनं (सुखं मनःसुखस्थितौ)।। २८१।।

सर्वाग्रे चलति स्म भारतियतिः, पृष्ठेऽस्य नृत्यन् प्रभु-
र्मत्तः प्रेम्णि तथा कमण्डलुमयाद् दण्डं कराभ्यां धरन्।
नित्यानन्दगदाधरौ तदनुगा दत्तो मुकुन्दस्तथा
(सौहार्दं सुहृदां, यतोहि भगवानास्तेऽखिलानां सुहृत्)।।२८२।।

सोऽयं याति हसन् कदापि तु रुदंस्तत्प्रेम्णि मत्तः प्रभु-
'हा श्रीकृष्ण! (कदापि) हे प्रिय! गतः कुत्राऽव मां सत्वरम्।
मामुद्धारय विप्रयोगजलधेरस्म्यत्र ते व्याकुल'-
श्चीत्कारेण सहैवमुच्चरवतो रोदित्यहो! प्रीतिमान्।। २८३।।

तद्वाण्यामधिका बभूव करुणा, श्रुत्वाऽस्य तत्क्रन्दनं
लोकोऽश्मात्मसमोऽपि सौहृदवतो दुद्राव कारुण्यतः।
आसीन्नो किमपीह तत्स्ववपुषः संज्ञानमस्याधुना,
यातोऽमुष्य पदे, न चेतति परं मार्गं निजप्रेयसः।। २८४।।

एवं भारतिपृष्ठतः परिसरन् राढप्रदेशेऽविशत्,
ते सन्ध्यासमये तथाहि भवति ग्रामे तथाप्ता लघौ।
एकस्मिन्, वरभाग्यसत्कुलवतः कस्यापि विप्रस्य सत्-
स्थाने वासमकार्षु-(रत्र वसनस्थानं भवेन्निर्मलम्) ।। २८५।।

श्रद्धालुस्त्वतिथिप्रियो द्विजवरः शंसन् स्वभाग्यं परं
सत्कारं स्वबलानुरूपमकरोत्सर्वाऽऽगतानां सताम्।
श्रद्धाभक्तियुतस्तथाखिलहृदां भिक्षाञ्च संन्यासिना-
मन्यद् भोजनमेष कारयति (कौ देवोऽतिथिर्गेहिनाम्)।। २८६।।

आस्तीर्यासनमेष चात्र शयितः पृथ्व्यां विधाय प्रभु-
र्भिक्षां, साधितमासनं प्रभुगुरोः श्रीकेशवस्योपरि।
श्रीचैतन्यमहाप्रभुन्तु परितश्चावृत्य ते सङ्गिनः
सुप्ता नित्यगदामुकुन्दसुहृदो (गुप्तस्तनौ चेतनः)।। २८७।।

सुप्ताश्चादिवसन्तु मार्गचलनाच्छय्यागता एव ते,
किन्तु श्रीप्रभुनेत्रयोः प्रियतृषोर्निद्रा क्व चातृप्तयोः।
श्रीकृष्णार्थमयन्तु चातुरमनाश्चासीत्तथाव्याकुलो,
दृष्ट्वा तांश्च तथाप्रगाढशयितान् सोऽयं शनैरुत्थितः।। २८८।।

उत्थाप्य पार्श्वगतदण्डकमण्डलू स
प्रेमी तथैव शयितांश्च विहाय भक्तान्।
निश्येव पश्चिमदिशन्तु विधाय लक्ष्यं
प्रीतौ वदन् दयितनाम रतश्चचाल।। २८९।।

१६. बोधनपूर्वकसंबोधनमिह यच्छति मधुरमभीष्टम्।
भगवत्कृपया सत्सङ्गतितो मतिचिन्तननिर्मलता
सद्वस्तुनि निष्ठातः सङ्गतिलाभाद् भगवत्प्रीतिः।
नामरूपकलिते व्यवहारे परमार्थोऽस्ति निगूढम्
नामरूपरहितः परमोऽर्थो धत्ते निजलीलायाम्
रूपमलौकिकमक्षिचित्तहरमखिलेन्द्रियविश्रामम्।
तद्वाचकगुणलक्षकवस्तुस्थितिसद्व्यञ्जकमखिलम्
नाम स्फुटमिह लोकोत्तररसमर्पयति श्रुतिकरणात्।
रहसि स्थाने चातुरमनसा रसनातस्तूच्चरितम्
विरहिभावनाकुलचेतसि तद्बुद्धं बोधयति स्वम्।।

याति महामन्त्रमसावुच्चरवादत्र वदन्।
दैन्यगिरा (क्वापि पथि प्रीणयति स्वं पथिकः)।।२६०।।

१७. अवनं स्वामी कुरुते नियतं तत्सेवनधर्माणाम्।
दैहिकसेवां कुरुते प्राणी स्वत एवास्मिन् लोके
सा नूनं करणीया जन्तोः, धर्मसाधनं देहः।
दैहिकतत्संबन्धिपोषणावृत्तावपि सेवाऽऽस्ते
सूते नाना भौतिकसौख्यं त्वनन्तसंसृतिसहितम्।
नेत्रं पश्यति जगदिदमखिलं स्वयं न तु स्वं रूपम्
तस्यादर्शो दर्शयतीह स्वात्मनि विमले स्पष्टम्।
आदर्शः पुरुषः संसारे काले देशे जातः
लोकोत्तरनिर्मलचरितैः स्वैस्तनुते दिव्यालोकम्।
ज्ञानज्योतिः कर्मरहस्यं प्रकटितमप्यप्रकटम्
भक्तिप्रीतिः केवलमुचितेन्द्रियबोध्या कलिसरलम्।
रामकृष्णहरिराघवकेशवनाम्नां स्वयमुद्गानम्
कृत्वा चैतन्यः संन्यासी तच्चेतनमालोडति।।
अस्ति रुदन् यन्नाम वदन् सः। 'राम! हरे! श्रीकृष्ण! हरे!हे'!।। २६१।।

उद्बुद्धेऽत्र विलोचनेऽस्य सुहृदो नित्यस्य तत्संभ्रमा-
देव द्राक्परितस्तु पश्यति, परं कुत्र प्रभुः साम्प्रतम् ?।
नित्यानन्दयतिर्हृताखिलधनव्यापारिवत्तद् वदन्-
'त्यक्त्वाऽभाग्यवतः स्वयञ्च शयितानस्मान् क्व यातः प्रभो!'।।२६२।।

उच्चै रोदिति, नित्यरोदनमथ श्रुत्वा प्रबुद्धाश्च ते
सर्वेऽन्योन्यमतो निमायिसुहृदो दोषं ददाना जगुः।
'अस्माभिस्त्विह पूर्वमेव कथितं-जागर्तु चास्मासु यत्-
प्रत्येकः क्रमशः, परन्तु समये नैवाधृतं केनचित्' ।।२६३।।

निद्रां निजामेव चकार कश्चिद्
धिग्धिक् पुनर्जीवनमात्मनश्च।
तथैव भूयो विविधं विलापं
चक्रुश्च सर्वेऽत्र निमायिनस्ते।।२६४।।

नित्यः प्रार्थितवांश्च सम्प्रति महाराजं यतिं भारती-
'मेतस्माच्च निवर्ततान्तु भगवन् ! गङ्गातटं स्वाश्रमम्।
अस्माभिः सह कुत्र-कुत्र तु भवान् द्वीपेऽत्र यास्यत्यटन्,
यत्राऽऽप्तो भविता तं मृगयिता तत्रैव गत्वा वयम्'।।२९५।।

तत्सम्प्रत्यकरिष्यदेव यतिकः श्रीभारतीजी तु किं ?
चक्रे निश्चयनं निवर्तनमसावेवान्ततः स्वाश्रमम्।
दुःखी सन् यतिभारती प्रभुगुरु,र्नीत्वा मुकुन्दं गदां
सङ्गे नित्ययतिः प्रभुं मृगयितुं यातः प्रतीचीदिशम्।।२९६।।

आसीत्सम्प्रति निर्गतः प्रभुयतिर्दूरं त्वितश्चाधिकं
मत्तः प्रेम्णि पपात लोटति पुनर्भूमौ कदाचित्त्वसौ।
होरा मूर्च्छित एव तत्र पतितो यावत्त्वभूत्कर्हिचिन्-
(मूर्च्छा वस्तुनि लौकिके सदसतोस्तत्प्रेममूर्च्छाऽपरा) ।।२९७।।

कृष्णप्रेम्णि तथेयदुच्चरवतो रोदित्यधीरः स सन्
यत्तत्क्रन्दनकध्वनिः श्रवणगः क्रोशेन दूरादभूत्।
दूरं यावदलं स्वतोऽपि हि रवो रात्रिक्षणे श्रूयते,
दूरादेव ततः प्रभोस्तु करुणं भक्तैः श्रुतं क्रन्दनम्।।२९८।।

एवाऽस्य श्रुतिमात्रतः पुलकितो देहोऽखिलानां ध्वनेः
कुर्वन्तो निखिलाश्च हर्षभरितास्त्वन्योन्यमालिङ्गनम्।
नृत्यन्तोऽनुमितेः प्रभोश्च निकटे प्राप्तास्तथाऽस्य ध्वनेः
क्रोशे पञ्चषके तथाहि मिलितो वक्रेश्वरोऽप्यत्र तैः।।२९९।।

तन्मधुकण्ठाद् दत्तमुकुन्दः। गायति साधु श्रीहरिनाम।।३००।।

१८. भगवन्! नामप्रीतिं यच्छतु।
श्रीकृष्णाकृतिचिन्तनयोगं श्रीगोविन्दप्रकृतिम्
हरिसंबोधनमन्त्रोपासनमथ मुरहरपदभक्तिम्।
नाथ! प्रियतम ! सदसज्जगतां नारायण ! जीवानाम्
पालक ! रक्षक ! भवसञ्चालक ! वासुदेव ! परमात्मन्!।।

आरब्धं मधुरस्वरेण भगवत्तन्नामसंकीर्तनं
सानन्दं श्रुत एव नृत्यति हरेः संकीर्तने तत्प्रभुः।

सर्वे स्वप्रभुदर्शनाच्च परमं प्रीताः प्रसन्नास्तथा,
(सेना नायकसङ्गतौ हि लसति, प्रीतिर्नहि स्वं विना)।।३०१।।

मन्ये कस्यचिदत्र सम्प्रति हृता सम्पूर्णसम्पत्पुनः
प्राप्ता स्या,न्मुदिता तथैव सुहृदां चैतन्यलाभात्पथि।
दृष्ट्वा भक्तजनान् सुखी प्रभुरपि स्थाने प्रभूतोऽभवद्
(यात्रायां भुवि साम्प्रते परिचिते प्राप्ते मनः प्रीयते) ।।३०२।।

जातः स्वप्रकृतौ स्थितः प्रभुरयं पश्चात्तथाल्पक्षणाद्
बाह्यज्ञानममुष्य सम्प्रति भवच्चासीत्प्रभुप्रेमिणः।
भक्तांस्तांश्च विलोक्य तत्कथयते नित्यादिवक्रेश्वरान्
'प्राप्ताः शोभन,मेकमत्र भवतश्चेच्छामि वक्तुं वचः'।।३०३।।

औत्सुक्येन समं प्रभोः प्रति मुखं पश्यन्ति भक्तास्त्वमी,
ब्रूते 'मह्य'मथ प्रभुर्भगवदादेशः श्रुतोऽयं मया-।
''गच्छ त्वं पुरुषोत्तमप्रियजगन्नाथस्य भद्रां पुरीं''
पुर्यां सम्प्रति शीघ्रमेव भगवान्मामच्युतस्त्वाह्वयत्।।३०४।।

यास्यामि नीलाचलमुन्मुखस्तत्
सम्प्रत्यहं चेतनभारतीकः।
पुर्यां मया तद्द्रुतमेव गत्वा
स्वस्वामिसंदर्शनमस्ति कार्यम्'।।३०५।।

सर्वेषां त्वभवन्निशम्य परमा प्रीतिः प्रभोस्तद्वचो,
वार्तां को मनसः प्रभोः सुमनसस्तु ज्ञातुमेव क्षमः।
किं किं कर्तुमसौ तथेच्छति सुहृद् भक्तप्रमोदाय यद्,
भूयः पूर्वमुखश्चचाल स तथा त्यक्त्वा प्रतीचीगतिम्।।३०६।।

श्रीमन्नामसुकीर्तनस्य विषये राढे प्रचारोऽधुना
यावन्नाऽभवदत्र, तादृशदशां स्थानस्य तस्य प्रभुः।
दृष्ट्वा सम्प्रति दुःखितोऽभवदसावत्यन्तमेवात्मना
नित्यानन्दमुवाद तत्प्रकटयन् वैकल्यमेष स्वकम्।।३०७।।

'श्रीपादाऽत्र धरातले सुमधुरः संकीर्तनस्य ध्वनि-
र्गङ्गामातृपवित्रवारिशिशिरे कुत्रापि न श्रूयते।
नो चास्मिन्मुखतः श्रुतं भगवतस्तूच्चारणं कस्यचि -
न्नाम्नामेव, यथार्थतोऽस्ति विषयोऽयं भक्तिशून्यो भुवि।।३०८।।

व्यर्थं मेऽस्ति ततो विनाऽत्र भगवन्नामश्रुतिं जीवनं,
धिग्व्यर्थभ्रमणं मदीयमिदकं' (धन्यं, यतः प्रीयते)।
दृष्टास्तत्क्षणमेव तत्सुरभयोऽरण्ये चरन्त्यः प्रभोः
(खिन्ने प्रेमिणि तत्प्रियो हि दयते चिह्नैर्विशेषैः स्वकैः)।।३०९।।

बह्व्यस्तासु तथाहि गोषु सुहरिद्दूर्वाश्चरन्त्योऽभवन्
पश्यन्त्यश्च मुखं प्रभोः कतिपयास्ता निर्निमेषाः प्रति।
धावन्त्यः परितस्त्वितो बहु ततश्चोत्थाप्य पुच्छं प्रभुं
काश्चित्तासु हरिप्रियं ननु परिक्रामन्ति मन्येऽत्र ताः।।३१०।।

प्रच्छन्ना ननु कम्बलेन निखिला बालाश्च तच्चारकाः
पश्यन्तो विलसन्ति तु प्रभुमुखं लट्ठं धरन्तः करे।
उच्चैस्ते 'हरि-बोल-बोल-हरि-हे !' दृष्ट्वैव चोक्त्वा प्रभुं
क्रोशन्तस्त्वभवन् (तथाऽपरिचितैः साधुप्रियश्चीयते)।।३११।।

बालानां मुखतस्तदल्पवयसां गोपालकानां तथा
श्रीनाम श्रवणप्रियं सुमधुरं श्रुत्वा प्रभुः श्रीहरेः।
जातोऽधीरमनास्तदस्य सहसा वृन्दावनन्तु स्मृतं
गत्वा तन्निकटे निधाय शिरसि ब्रूते प्रभुः स्वं करम्।।३१२।।

'आम्, भूयो वद साम्प्रतं ''हरि-हरि'' त्वं ब्रूहि भूयस्तथा'
चक्रुः श्रीलहरिध्वनिञ्च शिशवस्तूच्चैः प्रभोर्हर्षिताः।
सीमा नास्ति ततो महाप्रभुमुद,स्तद्बालकानां स्थितः
पार्श्वे क्रीडति बालतुल्यमखिलान् पप्रच्छ वार्तां बहु।।३१३।।

वार्तास्वेव तथायं बालान् पृच्छति तांश्च।
'गङ्गाजी कति दूरं त्वस्मादस्ति सुधारा ?'।।३१४।।

एको जल्पति चञ्चलप्रकृतिको बालो 'महाराजजी !
गङ्गाजी कथमस्ति दूरमधुना स्वं विद्धि गङ्गातटे।
गङ्गोत्सङ्गगतोऽस्ति चैव ननु नो ग्रामो हि तस्माद् भवान्
धारासन्निधिमेष्यतीह चलनाद्धोराक्षणैर्द्वित्रकैः'।।३१५।।

ऊचे तन्मुदितां प्रभुः प्रकटयन् 'धन्यं, प्रभावोऽस्त्यसौ
श्रीगङ्गाऽमरमातुरेव, यदहो ! बालास्तथा कुर्वते।

अत्रत्या लघवोऽपि तद्भगवतो नाम्नां प्रियोच्चारणं
(श्रीरूपस्मृतिनामकीर्तनरतिः श्रीमत्कृपायाः फलम्)।।३१६।।

अस्त्येवैवमहो ! भवे भगवतीभागीरथीश्रीजग-
न्मातुः साम्प्रतिकः प्रभावमहिमा, यत्तीरसंवासिनः।
लोके कूकर-शूकरास्त्वपि हरेः पात्राणि यातुं क्षमाः'
(सन्मार्गेण भवे समेति पथिकः स्वानन्दसच्चिन्मयम्)।।३१७।।

बालैरेवमसौ बहुक्षणमहो ! वार्ताक्रियानन्तरं
प्राप्तो भक्तजनैः प्रभुः सुरसरित्तीरेऽत्र सन्ध्याक्षणे।
गङ्गामातुरभूत्स गद्गदमनाः संदर्शनादेव तद्
बद्ध्वाऽस्तौत्स्वकरद्वयं (भगवती भागीरथी भूसुधा)।।३१८।।

'गङ्गे! त्वं जगतोऽस्य सर्वविधकं पापं तथा वस्तुत-
स्तापं लुम्पसि, ते सहस्रवदनः शेषोऽपि गातुं यशः।
हे मातर्नहि शक्नुयाच्च जगतामस्यादिशक्तिस्तथा
रुद्राणी जननि ! त्वमेव कुमुदा लक्ष्मीश्च साक्षादसि।।३१९।।

स्वे शीर्षे दधदस्ति चात्रभवतीं देवाधिदेवो महा-
देव,स्त्वं स्फुटिता तथा भगवतः पादारविन्दाद्धरेः।
अस्माकं ननु कोटि-कोटि नमनं मातस्तु ते पादयोः,
कल्याणं जगताञ्च मङ्गलमयि! श्रीमातृके! नः कुरु'।।३२०।।

श्रीगङ्गास्तुतिमेवमेष सुमनाः कृत्वा पुनस्तद्व्रज-
श्चक्रे मूर्ध्नि तथाऽऽचचाम जननीपूताम्बुना श्रीप्रभुः।
आनन्देन समं प्रविश्य निखिला गङ्गाप्रवाहेऽमले
चक्रुः स्नानमतोऽवसन्निशि तटग्रामैकविप्रालये।।३२१।।

प्रातर्नित्ययतिं प्रभुः कथयति 'श्रीपाद ! गत्वा नव-
द्वीपं सूचय मातरं मम शचीञ्चान्यान्यभक्तांस्तथा।
आयातोऽस्मि यदत्र, सम्प्रति नवद्वीपं भवान् गच्छतु,
द्रष्टुं शान्तिपुरन्तु तावदहकं गच्छाम्यतोऽद्वैतकम्।।३२२।।

सर्वेषां भविता तथाहि मिलनं तत्रैव शीघ्रं भवान्
यातु श्रीभगवन् ! विलम्बकरणात्कार्यं न तत्सेत्स्यति'।

नित्यानन्दसुहृद्यौ सुरनदीमुत्तीर्य चाज्ञां प्रभो -
र्धृत्वा मूर्ध्नि सुजन्मभूमिनदियां (भूमिर्वरा जन्मदा)।।३२३।।

प्रभुश्च गङ्गातटमार्गतोऽस्मिन्
निमायिनः शान्तिपुरस्य पारे।
ग्रामे तथाऽऽप्तः फुलियाऽभिधाने,
सदाश्रमे दासहरेरतिष्ठत्।।३२४।।



# शान्तिपुरे अद्वैताचार्यस्य गृहे

१६. वृन्दाविपिनं गन्तुमना यस्तीर्थीकुरुते राढम्।
संन्यासग्रहणाच्छ्रीकृष्णश्चैतन्यः श्रीकृष्णम्
लब्धुं विकलो वृन्दोद्देश्याद् भ्राम्यति मध्येराढम्।
भागवतोऽद्वैतो गौराङ्गप्रेमी वृद्धो निवसति
शान्तिपुरे, तत्सन्निधिमित्वा भक्तैर्विलसति मुदितः।।

आचार्यः शशिशेखरोऽत्र चलितो द्वीपोन्मुखो दुःखित-
श्चैतन्येन विसर्जितः प्रभुहृदा, नाग्रेऽस्य यातः पदे।
रोदित्येष कदापि, पश्यति पुनः पृष्ठे भ्रमित्वा क्षणा-
'दायान् (सम्भवमस्ति) मेऽनु दयितोऽयं स्याद् दयित्वा प्रभुः'।।३२५।।

क्वाप्येव भ्रमितः स्वयं कथयति 'त्वं त्वागतोऽसि प्रभो!,
भद्रं जात'मतः क्षणेन परितः पश्यत्यसौ स्वं भ्रमम्।
दूरं कर्तुमथैष चिन्तयति तच्चास्ते चलित्वा मनाक्
'स्थाने जीवनमद्य धिङ् मम (धरा धार्या नरैः सार्थकम्) ।।३२६।।

स्थास्याम्यद्य विना प्रभुं कथमहं स्थाने नवद्वीपके
चैकाकी कथमेव यानि नदियाभूमौ निवृत्याधुना।
आर्ता पुत्रवियोगतो ननु शची माता च वृद्धा तथा
मामागत्य यदा हि पृच्छति (सुतध्याना हि माता सदा) ।।३२७।।

''मे लालञ्च निमायिनामहृदयं प्राणप्रियं मत्सुतं
वार्धक्यैकसहायकं मम दृशोर्बाह्यात्मनस्तारकम्।
गौराङ्गं मम लाडलं त्वमवनौ त्यक्त्वाऽऽगतः कुत्र तं ?''
किं दास्यामि तदा तदुत्तरमहं तन्मातृदुःखात्मनः ?।।३२८।।

प्रष्टारः परिवृत्य माञ्च परितो गौराङ्गभक्ता यदा
''स्थाने कुत्र महाप्रभुस्तु नदियादूरे कियत्सोऽधुना ?।
आगन्ता कियता क्षणेन'' तदहं पाषाणहृद्दारक-
प्रश्नानामथमुत्तरं त्ववितथं वक्ष्यामि चैषान्तु किम् ?।।३२९।।

वक्ष्यामीदमहं किमस्य सुहृदस्तान् यन्निवृत्य प्रभु-
र्नागन्ता पुनरत्र, तु प्रचलितो गौरः स वृन्दावनम्।

वार्तैवं कठिना च केन विधिना सर्तुं क्षमा स्यान्मुखा-
न्मे गौराङ्गपितुः समस्य (सुधियः सर्वं हि दुःखं भवे)।।३३०।।

चेद्वज्रस्य विधाय चात्महृदयं ब्रूयामपीदं वचो
द्वीपे निश्चितमेव तर्हि विहगाः प्राणा बहूनां क्षणात्।
प्रस्थास्यन्ति निमायिबन्धुसुहृदां तत्पार्श्वमेव प्रभो,-
स्तेषां शून्यशरीरमेव पतितं स्थाता पुरो मे बहु।।३३१।।

स्थातुं स्युर्मम तत्र केन विधिना प्राणाः शरीरे क्षमा-
स्त्वास्तां, सर्वमिदं हि वज्रहृदयं सोढुं मम स्यादपि।
तस्याः स्वामिपरायणव्रतहृदो विष्णुप्रियायाः परं
द्रोताऽमायिनिमायिभावकरुणाऽऽक्रन्दात्त्वपि प्रस्तरम्।।३३२।।

साध्वी श्रोष्यति सा निवर्तनसमाचारं यदा मे तदा
कुर्वाणा निजरोदनेन च दिशं हृद्दारकेणाऽऽकुलाम्।
जिज्ञासां स्वनिमायिकान्तविषये गौरप्रिया कुर्वती
स्थित्वैकत्र च रोदनं विदधती शब्दं विना भाविनी।।३३३।।

भावी निश्चितमेव रोद्धुमपरं नाहं समर्थस्तदा,
धिक्कारं मम दास्यतीह नदियावासी हि सर्वो जनः।
कर्ता कर्मविगर्हणं मम परं, ज्ञाता च भावी यदा
संन्यासस्य मयैव कृत्यमखिलं सम्पादितं तत्प्रभोः।।३३४।।

स्थाने स्वेन करेण गाङ्गममताक्रोडे विरोधे सतां,
वृत्तान्तो विदितो निमायिसुहृदां तेषां यदा भाव्यसौ।
संन्यासी विहितो मयैव नदियाप्रेमावतारः प्रभुः,
सर्वे ते मिलितास्ततोहि विविधं धिक्कारयिष्यन्ति माम्।।३३५।।

तत्सर्वप्रभुभक्तदत्तमपरं शक्ताऽभिशापं त्वहं
सोढुं द्वीपनवेऽत्र केन विधिना, तेनेदमेवोत्तमम्।
कूर्दित्वाऽमलगाङ्गवारिणि निजप्राणान् विजह्यामहं'
(येषां साधुमुदे न कृत्यमभवत्प्राणैरलं तैर्भवे)।।३३६।।

एषोऽदश्च विचिन्त्य शीघ्रमगमद् गङ्गातटं, भावुको
गङ्गायां किल कूर्दनाय सरिति स्थानेऽभवच्चोद्यतः।

तस्मिन्नेव तथाक्षणे प्रभुगिरां जाता स्मृतिस्तस्य यत्-
'संदेशो बहु मातृभक्तसुहृदां दत्तोऽस्ति तत्प्रेमिणा।।३३७।।

संदेशस्य महाप्रभोश्च लगिताऽदानात्तु पापो मम
स्थाने श्रीप्रभुसम्मुखे त्वभिहितो भावी कृतघ्नस्तथा।
आयानेव भवेन्निमायिभुवि (को विद्यान्) निवृत्य प्रभुः
सङ्केतः, स्फुरतः, सिनोति हृदयं, मद्दृग्भुजौ दक्षिणौ।।३३८।।

मे विश्वास इवात्मनि प्रभवति स्वेऽनेन नूनं प्रभु-
श्चागन्ता, स्वजनैः समं सहृदयो भक्तैर्मिलित्वैव सः।
यत्रेच्छा गमनस्य तस्य भविता गन्ता निमायिव्रती'
(हार्दं सद्व्रतधारिणां रसयते लक्ष्यं विशेषस्थलात्)।।३३९।।

भावे स्वागत एव चेदृशि हृदि स्थाने, विचारं निजं
गङ्गाकूर्दनचेष्टयाऽऽत्महननोद्योगस्य तत्याज सः।
तत्रैव प्रभुचिन्तनञ्च विदधद् गङ्गातटे सैकते
स्माऽऽस्ते श्रीशशिशेखरो-(ऽमलरहः सद्भावकोद्दीपकम्)।।३४०।।

चित्ते तेन कृतं स्थिरं 'बहु निशि स्थाने गतायां गृहं
गन्ता, तावदथाखिलो हि नदियावासी प्रसुप्तो भवेत्।
गत्वा गुप्तमहं पुनर्निजगृहे स्थास्यामि लीनं, ततो
मद्द्वीपागमनस्य कस्य चलिता सङ्केत एवापि नो'।।३४१।।

पूर्णं यापितवांस्ततोहि दिवसं तद्बालुकायामसा-
वेकाकी स्थित एव, तत्र निबिडे जातेऽन्धकारे पुनः।
गङ्गापारगतः स्वगेहमगमल्लीत्वा जनानां दृशोः
(पीडा माऽस्तु मयाऽत्र साधुमनसां, भीतिर्विवेकात्मनः)।।३४२।।

प्राप्ते त्वेव गृहं निवर्तनसमाचारोऽस्य विद्युत्समं
व्याप्तोऽभून्नगरेऽखिले क्षणभरे ह्यन्योन्यवार्ताऽध्वना।
योऽप्यत्र शृणुते स एव निकटे धावन्नमुष्याऽऽगतो
द्वीपे चागत एव तस्य विषये गौरप्रभोः पृच्छति।।३४३।।

ब्रूते धैर्यमसौ निमायिसुहृदः सर्वांस्तथा बन्धय-
'न्नामाऽऽयास्यति शीघ्रमेव नदियाबन्धुर्नवद्वीपकम्।'

अस्मिन्नेव तथा क्षणे सुतसमाचारार्थमत्युत्सुका
सङ्गे पुत्रवधूं निजाञ्च दधती माताऽत्र वृद्धा शची।।३४४।।

प्राप्ताऽऽचार्यगृहे, गृहं प्रियतरस्तस्या निमायी यत-
स्त्यक्त्वाऽयात्तत एव सा तु दिवसान्माता शची स्वे मुखे।
यावन्नान्नकणं ददा,ववविरलं तस्या दृशौ रोदना-
दुच्छूने, शिथिलं शरीरमखिलं कण्ठोऽवरुद्धस्तथा।।३४५।।

उत्थायापि निषीदनस्य नहि तत्सामर्थ्यशेषोऽस्ति, तु
श्रीमच्चन्द्रकशेखराऽऽगमसमाचारे तथैव श्रुते।
नो जाने, बलमागतं प्रभुशचीमातुः शरीरे कुतो,
धावन्ती शशिशेखरस्य गृहकं सा प्राप माता शची।।३४६।।

विष्णुप्रियाजी त्वपि पृष्ठतोऽस्या
वस्त्रं दधाना रुदती तथाऽऽसीत्।
मार्गे सरन्ती स्वनिमायिभावा
(निमायिवार्ताश्रुतिभक्तिराद्या) ।।३४७।।

आयान्तीञ्च विलोक्य मातरमसावाचार्यकः सम्भ्रमात्
सार्धं शीघ्रमथोत्थितश्च परितो भक्ताश्च मातुः कृते।
पन्थानं विजहुः स्वयं, शशिबुधं स्प्रष्टुं तथाप्तैव सा
माता चाभिललाष (सङ्गिमिलनं सम्बन्धिनस्तुष्टिदम्)।।३४८।।

शोकावेगसहेऽसमर्थहृदयप्राणा तु माता निजे
मध्ये त्वेव पपात सा च दिशती भूमौ 'निमायिंस्तु हा !'।
आचार्यो द्रुतमग्रमेत्य जननीं वृद्धां कराभ्यां दधौ,
श्वश्रूपादमुपस्थिताऽपि करुणं चक्रन्द विष्णुप्रिया।।३४९।।

दृश्यं तत्समयस्य तत्र करुणापूर्णं तथासीद्बहु
स्थाने मातृदशामथैवमखिला दृष्ट्वा तथोपस्थिताः।
उच्चैस्ते रुरुदुर्जुगुञ्ज शशिनश्चाचार्यरत्नस्य तद्-
गेहं क्रन्दनवेदनाध्वनिभरैः (स्थाने हि सत्क्रन्दनम्)।।३५०।।

नान्यः कोऽपि च शब्द एव मुखतो मातुः ससाराधुना,
'हा! मेऽमायिनिमायिगौर!' रुदती सोक्त्वेदमेवाऽभवत्।

कालञ्चाधिकमेवमेव जननी तद्रोदनं कुर्वती
पप्रच्छाऽलमनन्तरञ्च रुदती रुद्धस्वरेणैव सा।।३५१।।

'कुत्राऽऽचार्य ! निमायिनं मम सुतं त्यक्त्वाऽऽगतो, वस्तुतः
संन्यासी किमसौ बभूव, कथय त्वाचार्य ! सत्यं मम।
किं मे दुर्ललितस्य तस्य शिरसः स्कन्धावलम्बी वरः
केशः श्यामलकुञ्चितः पृथगभूत् ? (केशः शिरःसौभगम्) ।।३५२।।

तीक्ष्णाग्रक्षुरया तु कश्चिददयश्चुच्छोर तान्नापितः,
किं जातः सुकुमारकायहृदयो भिक्षुर्निमायी मम ?।
याचित्वाऽत्ति कथं स सम्प्रति, दयामाचार्य ! कृत्वाऽबला-
दुःखिन्यां मयि, जल्प, भाविनि किमागन्ता निमायी न मे ?।।३५३।।

किं भक्तं द्विदलं तथा किमधुना पक्त्वा करेणात्मनः
शक्ता भोजयितुं न तं ? कथमसौ कर्ताऽऽग्रहं न क्षुधि।
प्राप्तायां निजभोजनार्थकमितो मह्यं यथा बावलो ?
हृत्खण्डः पृथगेव सम्प्रति कथं भावी निमायी स मे ?।।३५४।।

शक्ता लोपयितुं स्वदेहतपनं किं स्वोरसाऽऽलिङ्ग्य तं
नाहं सम्प्रति?, गन्धितालकयुतञ्चाघ्राय तन्मस्तकम्।
नाहं किं भविता तथाऽद्य सुखिनी, ब्रूषे त्वमाचार्य ! नो
किं ?, नायाति दया कथं तव सतोऽद्याकिञ्चनायां मयि ?।।३५५।।

मम वचसां नोत्तरमपि दत्से।
कथमसि मौनं ?' (मुखमिह वक्तुम्)।।३५६।।

आसीनोऽस्ति च चन्द्रशेखरबुधो मातुर्निशम्येयतः
स प्रश्नानपि मौनमेव, नयनाद्बाष्पं त्यजन् केवलम्।
दृष्ट्वाऽऽचार्यमथैवमत्र बुबुधे माता रुदन्तं शची -
संन्यासं नियतं निमायिसुतको विश्वानुजो मे दधौ।।३५७।।

ब्रूतेऽसौ तदधीरताप्रकटनं माता शची कुर्वती
'सङ्केतन्तु निमायिनो मम दिशत्वाचार्य ! मह्यं भवान्।
यत्रापि क्वचिदेष चात्र भविता तत्रैव यास्याम्यहं
(स्नेहालम्बनवत्सयोगविरहे किं वत्सलाऽऽस्वादनम् ?)।।३५८।।

संन्यासी जगतीह कीदृगपि किं कामं स जातोऽस्तु नो,
मातुर्मेऽस्ति तु पुत्र एव, भविताऽहं साकमेवाऽमुना।
वृद्धा गौरबलेव रम्भणयुता याति स्ववत्सानुगा
यास्याम्यस्य निमायिनोऽहमवनौ पृष्ठे तथैव ध्रुवम्।।३५९।।

शक्ता नात्र विना निमायिनमहं स्थातुं पुनर्जीविता,
द्वीपेऽत्र त्वियतीं ममोपरि कृपामाचार्य ! हे ! त्वं कुरु।
यत्राप्यस्तु निमायिसूनुरवनीखण्डेऽबलाया मम
स्थाने प्रापय तस्य पार्श्वमधुना तत्रैव नीत्वा तु माम्।।३६०।।

याचित्वाऽऽः! प्रतिगेहमद्य भविता भक्तस्य खादन् कणं
वृद्धा कापि ममोपमैव सदया भक्तं त्वदास्यन्मनाक्।
भूमौ स्यादपि कापि कापि वनिता दुत्कारदात्री ध्रुवं
(नारी कोमलसृष्टिरत्र भुवने सर्वा सुभावा न तु)।।३६१।।

भक्तं सम्प्रति शुष्कमेव वनिता काप्यर्पयिष्यत्तथा
काचित्पर्युषितं निमायियतिनोऽदास्यच्च झोलीपटे।
शाकान्मत्करनिर्मितान् द्विचतुरोऽत्रात्स्यन्न यावत्त्वसौ
तावत्तस्य न कुक्षिरेव गृहके स्वे स्नेहिनोऽपूरयत्।।३६२।।

शुष्कं पर्युषितं च केन विधिना तद्भक्तमत्तुं क्षमो
भावी सम्प्रति, मे निमायिसुतकः सोऽस्ति क्षुधादुर्बलः।
अप्यल्पक्षणमत्र पूर्वमभवत्स्थाने विलम्बः कदा-
चिद्गेहे जलपानके सुमनसो यामे तृतीये स्वके।।३६३।।

मिष्टान्नं गृहनिर्मितं भवति वा नोपस्थितं कर्हिचित्,
तर्ह्येकं कुरुते स्म भूमिगगने पुत्रो निमायी मम।
स्थानेऽत्तुं स सदैव पक्ववटिकां पाके पचन्त्यां मयि
त्यागत्यैव निषीदति स्म (हि सुतोऽतुल्योपहारः स्त्रियाः)।।३६४।।

कस्तं कारियताऽम्बुपानमधुना यामे तृतीयेऽत्र, हा !
धिङ् मज्जीवनमेवमस्ति, मम हा ! पुत्रो गुणी सर्वतः।
चक्रुर्यस्य नृपादपीह सुहृदः पूजाप्रतिष्ठेऽधिकं
द्वारद्वारकमुष्टितण्डुलकृते भूमौ भवेत्स भ्रमन्।।३६५।।

एवं तेऽमृदुचेतसेऽदयहृदे त्वां धिग्विधातो ! भवे
वारम्वार,मपेक्षयात्तमनसां सत्प्राणिनां पक्षतः।
लावण्योत्तररूपमेवमधिकं सन्मानसम्मानकं
यो दत्वापि, निमायिनं त्वमकरोस्तं गेह-गेहार्थिनम्'।।३६६।।

मातैवं विविधं प्रलापमभवत्कालं भृशं कुर्वती
संन्यासाखिलवृत्तमाह सुहृदो धैर्यन्तु धृत्वा मनाक्।
आचार्यः, श्रुत एव तत्र जननी भूयोऽभवन्मूर्च्छिता,
गौरश्रीः पतिता प्रियापि च शचीदेवीपदेऽचेतना।।३६७।।

एवं कुर्वति रोदनं गतवती रात्रिस्तथार्धाधिका
चक्रे भोक्तुमथाग्रहं बहु शचीमातुः स्वसा चाधिकम्।
माता किन्तु चखाद किञ्चिदपि नो, तस्थौ सविष्णुप्रिया
तस्यामेव तु सा स्थितौ च पतिताऽऽरात्रिं लपन्ती तथा।।३६८।।

रत्नः प्रापितवांस्तदीयगृहकं प्रातः शचीं सप्रियां,
श्रीवासप्रभृतिर्बभूव सुहृदः सर्वोऽत्र भक्तः प्रभोः।
हेतोरेव निजान्नपानरहितोऽधीरो विलापारतः,
श्रीनित्योऽपि तृतीय एव दिवसे प्राप्तस्तथा द्वीपकम्।।३६९।।

श्रीनित्याऽऽगमनस्य वृत्तमखिलाः श्रुत्वा क्षणं सर्वतः
सम्पूर्णस्य पुरस्य वृद्धशिशवो नारीनराः संयुताः।
आगत्यास्य च सन्निधौ प्रभुसमाचारन्तु पृच्छन्ति ते
(यद्वृत्तं हृदयं दुनोति करुणं तत्प्राणिनामेकता)।।३७०।।

पप्रच्छ 'प्रभुरस्ति कुत्र, च कदाऽऽगन्ताऽत्र ?' कश्चित्पुनः
'स्थानं नो दिश, तस्य दर्शनमतो गत्वाऽधुनैव क्षणात्।
कृत्वाऽऽयाम वयं' प्रभोश्च विषये द्वेषी तथा यो जनः
पश्चात्तापमथाद्य सोऽपि हृदये कुर्वन् कुकृत्ये स्वके।।३७१।।

दैन्येनाधिकमेव नित्ययतिकं ब्रूते रुदन् साधुहृद्-
'हे श्रीपाद ! तथाहि दुष्टमिलितैरस्माभिरेव प्रभुः।
श्रीगौराङ्गनिमायिको ननु गृहत्यागी विरागी कृतः,
संन्यासी स बभूव गौरहृदयो नः कारणादेव सः।।३७२।।

द्वीपात्स्मो वयमेव हेतुरपरो निर्वासने श्रीप्रभो-
रस्माकं भुवि निष्कृतेरपि कथं स्यात्कोऽप्युपायः प्रभो!।
किञ्चास्मत्समपापिनामपि नृणां कुर्याद् दयालुः क्षमा-
दानं गौरमहाप्रभुः (सहृदय-प्रेमी कलौ दुर्लभः)।।३७३।।

कामं क्षाम्यतु नायमद्य तु वयं भोक्तुं तथा प्रस्तुताः
पापानां फलमात्मनः, परमसौ पश्येत्पुनः केवलम्।
अस्माकं मुखमेकवारमधुना स्वस्यानुकम्पादृशा,
किं नो सम्भवमस्ति दर्शनसुखं भूमौ कदापि प्रभोः?।।३७४।।

तेजस्विसुन्दरमनोहरशीतलस्य
श्रीमन्मुखस्य भुवि दर्शनसौभगं किम् ?।
प्राप्तं कदापि भविता ननु जीवनेऽस्मिन्
सद्द्वीपगौरशशिनोऽत्र निमायिनो नः ?'।।३७५।।

नित्यानन्दविभुस्तु तादृशवचः श्रुत्वा जनानां मुखात्
सर्वान् जल्पति 'नो महाप्रभुरहोऽत्यन्तं दयालुर्हृदा।
सर्वप्राणिकृते तथाऽस्य हृदये भावो दयायाः परः,
कश्चिद्वाऽस्य न शत्रुरप्रियजनः (साधुर्हि सर्वप्रियः) ।।३७६।।

गौरः प्रेम तथा प्रदर्शयति स स्वस्यापकर्तुस्त्वपि,
प्रेम्णाऽयं वशतां गतः सहृदयो युष्माकमेवाधुना।
गच्छन् शान्तिपुरञ्च सोऽस्ति फुलियाग्रामाऽध्वना तत्र चाऽ-
द्वैताचार्यगृहे स्थितस्तु भविता (स्थाने निमायी ध्रुते) ।।३७७।।

यूयमितो निखिलास्तत्तत्पुरमेव च गत्वा।
श्रीप्रभुदर्शनलब्धौ सत्सफला भवितास्थ'।।३७८।।

नित्यानन्दमुखान्निशम्य वचनञ्चेदं - प्रभुर्विद्यते
कालेऽस्मिन् फुलियास्थले, तु भविता दासाश्रमे, तत्पुनः।
गन्ता शान्तिपुरं, तथेदमखिलं ज्ञात्वैव सर्वे जना
धावन्तस्तु बभूवुरत्र फुलियाग्रामं प्रति द्वीपतः।।३७९।।

नावा कोऽपि बभूव तत्सुरनदीपारन्तु, कश्चित्पुनः
सञ्चाल्य स्वयमेव तु स्वमुडुपं गच्छंस्तदानीमभूत्।

गङ्गापारमथाकरोत्तु कलशैरेवात्र कश्चित्परं
नौकादेरपि नातुरैस्तु बहुभिर्भक्तैरपेक्षा कृता।।३८०।।

तेऽकूर्दन्त तथैव तादृशमगुः किञ्चित्सहायं विना
गङ्गायां, परपारमापुरधुना तीर्त्वैव हस्तैः स्वकैः।
उत्तीर्य क्षणतोऽमलां सुरनदीं प्रापुः सहस्रं जना
ग्रामं तं फुलियाभिधं (प्रियकृते प्रेमी भवत्यातुरः) ।।३८१।।

मत्ताः प्रेम्ण्यभुरुच्चकैस्तु पुरुषाश्चाकाशभेदिध्वनिं
कुर्वन्तो 'हरिबोल-बोलहरिकं' श्रुत्वा प्रभुर्निःसृतः।
तं कोलाहलमुन्नतं बहिरयं तस्याश्रमस्यान्तराद्
(भक्ते तादृशमाकुलेऽत्र भगवान् भावी समक्षं क्षितौ ?)।।३८२।।

साऽपारा जनता रतौ च विकला संन्यासिवेषप्रभो
रुच्चैरत्र हरिध्वनिं सहृदयाऽभूत्कुर्वती दर्शनैः।
आसीत्सर्वजनस्य चास्रमधुना धारा सरन्ती दृशो-
(वैकल्यं सुहृदां तथाप्रियसतो वैकल्यतो जायते)।।३८३।।

दृष्ट्वा मुण्डितमस्तकं प्रभुसतः काषायवस्त्रं तथा
क्रन्दन् कोऽपि तु कोऽपि चास्ति रवतश्चोक्त्वा 'प्रभो!हा!हरे!'।
सर्वान् पश्यति तु प्रभुर्निजकृपादृष्ट्या तथोक्त्वाऽखिलान्
द्वीपं स्वञ्च निवर्तितुं स्वयमसौ शान्तिं चचाल प्रति।।३८४।।

तेनैव सार्धं बहवस्तु भक्ता
श्चेलुः परं शान्तिपुरं प्रियेण।
निवृत्य केचिन्नदियां तथाप्ता
(निमायिनी ह्यस्ति निमायिभूमिः)।।३८५।।

लोकानत्र निमायिकाऽऽगमसमाचारं तथा श्रावयन्
प्राप्तो नित्ययतिश्च दुःखितशचीमातुः समीपेऽधुना।
माता पुत्रवियोगरोगविकलाऽऽसीन्मूर्च्छयाप्ता तदा,
नित्यो मातृपदेऽस्पृशद् (विनयतः स्पृश्यः प्रियः पीडितः)।।३८६।।

माताऽऽबुध्य ददर्श- गौरहृदयो नित्यः पुरोऽस्ति स्थितो,
ब्रूतेऽधीरतयैव सार्धमधिकं 'हे नित्य ! पुत्रापर ! ।

त्यक्त्वा कुत्र निमायिनं त्वमपरं स्वभ्रातरं त्वागतो ?
जिह्वायामुषितं तथाहि सततं 'श्रीपाद' ते सङ्गतेः ।।३८७।।

यातस्त्वं पुरतस्तु मे परसुतः कृत्वा प्रतिज्ञामितः
"सङ्गे द्वीपनिमायिनं स्वदयितं नीत्वाऽऽगमिष्याम्यहम्"।
दूरे सोऽस्ति कियद् ? विहाय तमहो ! पृष्ठे त्वमाप्तः कथं ?
त्वं सङ्गाऽऽनयनं प्रदिश्य वचनं यातस्तु नायाति किम् ?।।३८८।।

शीघ्रं मां वद पुत्र ! कुत्र विषये ह्यास्ते निमायी मम
प्राणान् यावदहं तवैव वचनादद्यादधां नित्य ! हे !
ब्रूहि त्वं द्रुतमेव मां त्वमपि नो दत्से निमायी यथा
मह्यं कैतवमद्य किं ?, न जननी स्थात्री धरेव स्थिरा।।३८९।।

त्वं सत्यसत्यं वद मे निमायी
कुत्रास्ति, तत्रैव तथाहमेता।
तत्रैव देशे नय मां क्षणात्त्वं
पुत्रो निमायी मम यत्र चास्तु'।।३९०।।

ब्रूते तद्व्रतदुर्बलार्तजननीधैर्यं तथा बन्धयन्
नित्यानन्दयतिस्तु 'नेयदधिकं मातस्त्वधीरा भव।
सङ्गे त्वेव निमायिनं तव सुतं नीत्वाऽहमत्राऽऽगतः
सोऽद्वैतस्य गृहे च शान्तिपुरके स्थानेऽधुना विद्यते।।३९१।।

तत्रैव तथाह्वत्त्वां शान्तिपुरे सः।
नेष्ये क्षणतस्त्वां तस्मिन्नहमेव'।।३९२।।

श्रुत्वैवेयदहो'स्ति शान्तिपुरके स्थाने निमायी' गताः
प्राणा मातुरथात्मनि व्रतकृशे मन्ये निवृत्ताः पुनः।
'शीघ्रं शान्तिपुरन्तु पुत्र ! नय मां' साऽऽह त्वधीरा सती
'न द्रक्ष्यामि निमायिनं सुतमहं, तावन्न शान्तिस्तु मे'।।३९३।।

नित्यानन्दयतिर्ददर्श दिवसैर्मातोपवासैरति-
क्षीणैषाऽस्ति तथा निमायिगमनादन्नस्य चाद्यावधिम्।
चक्रे दर्शनमेव नो च दिवसात्स्पष्टं तथा ज्ञायते
(देहोऽन्नग्रहणं मनो मुखदशा लोके करोति स्फुटम्) ।।३९४।।

नेतैतां प्रभुसन्निधावहमपि ह्यस्यां दशायां यदि
स्थाने दुःखमयी भवेदतिशयं तत्र स्थितानां स्थितिः।
तस्मादाग्रहपूर्वकन्त्वपि भवेदेषा यथा वै तथा
स्वल्पं वाधिकमेव दुःखितमना द्राग् भोजनीया मया।।३६५।।

तेनोक्तं तदिदं विचिन्त्य सुहृदा 'मातर्म्रियेऽहं क्षुधो,
यावत्त्वत्करपक्वभोजनमहं लप्स्ये न, तावन्न मे।
तृप्तिः स्यादत एव भोजय यतिं पक्त्वौदनं मां द्रुतं,
यावस्तत्प्रभुसन्निधौ (प्रियजनोऽक्लेशेन दृश्यः सता)।।३६६।।

नाऽयनं स्यादपि। मे क्षुधः सम्भवम्'।।३६७।।

एवं नित्ययतेर्निशम्य वचनं माता मनाक् शङ्किता
ब्रूते 'वञ्चयसे तु मां त्वमधुना किं नो नितायिंस्तथा ?।
किं मां भोजयितुन्तु शान्तिपुरके स्थाने निमाय्यागते -
र्नो कुर्वन्नपदेश,मद्य वद मां सत्यं निमायिस्थलम्'।।३६८।।

नित्यो मातृपदे स्पृशन् कथयते 'मातर्निमायिप्रसु !
स्पृष्ट्वा त्वच्चरणौ वदामि भवतीं नाहं पुनर्वञ्चये।
यातः शान्तिपुरं प्रभुस्तु फुलियाद्वारा पुरो मे तथा
द्वीपं प्रेषितवांश्च मां सहृदयस्त्वां नेतुमेवाऽऽत्मदाम्'।।३६९।।

सन्तोषो जननीहृदोऽभवदहो ! नित्यस्य वाचाऽनया
सा कष्टं पुनरुत्थिता, कृतवती स्नानं तथोत्थाय च।
चक्रे भोजननिर्मितिं सविधिकं, निर्माय सा भोजनं,
भोगं श्रीहरये ततोऽर्पितवती (ह्यन्नं समस्तं हरेः) ।।४००।।

नित्यानन्दकृते सा कृत्वा तत्परिवेषम्।
भोक्तुं तं यतिमूचे (सद्भोक्ता सुकृताऽऽप्यः)।।४०१।।

साग्रहमेष बभाषे स्वां दृढतां रचयंस्ताम्।
'अत्स्यति सम्प्रति माता पूर्वमतोऽस्मि तदत्ता'।।४०२।।

'सङ्गे निनाय मम भोजनकं निमायी
त्वत्स्यामि सम्प्रति च भोजयिता स एव।
हे नित्य-पुत्र ! भविता प्रियमेव नो मेऽ-
दृष्ट्वा तमात्मजमिहात्मनि भोजनं स्वम्'।।४०३।।

'एकः शान्तिपुरे तु तेऽस्ति नदियाबाह्ये निमायी सुतः,
प्रत्यक्षं तव विद्यतेऽत्र ममते ! स्थाता च पुत्रोऽपरः।
त्वं सम्प्रत्यपि भोजनं न परिता, कर्ताऽपि नाहं तदा,
नात्तैवाहमहो ! निमायिजननीं वाऽभोजयित्वाऽधुना'।।४०४।।

माता जगादाऽऽग्रहकस्वरेण
'त्वं त्वद्धि पूर्वं तत एव कर्ता।
अभोजयित्वा यतिपुत्रकं त्वां
भोक्तुं क्षमा स्यां कथमत्र माता'।।४०५।।

नित्यः प्रेमपुरस्सरं कथयते बालोपमः 'साम्प्रतं
नेदं भावि, दधामि भोजनमहं त्वां भेजयित्वैव तु।
आस्तां, त्वं कथयात्र मे तु शपथं जग्ध्वा स्फुटं वत्सले !
कर्ता हि त्वमपीह भोजनमिदं मद्भोजनानन्तरम्'?।।४०६।।

अत्यन्तं विहिते च नित्ययतिना माता तथाह्याग्रहे
कर्तुं भोजनमात्मनो ममतया सा स्वीचकाराधुना।
तन्नित्योऽपरमातृहस्तरचितं प्रेम्णा प्रसादं दधौ
(संबन्धो भुवि रक्तवीर्यघटितो, बन्धो हृदोऽलौकिकः)।।४०७।।

तन्माताऽऽग्रहपूर्वकं सुतयतेर्भुक्तिक्रियानन्तरं
पूर्वं गौरहरिप्रियामपि वधूं साऽकारयद् भोजनम्।
दध्रे द्वौ चतुरस्ततः स्वयमपि ग्रासान्, परं तन्मुखे
यन्नेवास्ति न चान्नमल्पमनया कृत्वा यथाऽऽप्तं तथा।।४०८।।

मातुर्गौरनिमायिनः सुतदिशो ग्रासग्रहानन्तरं
भक्तान्नित्ययतिर्जगाद सुमतिः श्रीवासचन्द्रादिकान्।
'यूयं ते नरवाहनस्य सुहृदः कृत्वा प्रबन्धं तथाऽ-
द्वैताचार्यगृहन्तु शान्तिपुरकञ्चायान्तु मात्रा समम्।।४०९।।

प्राप्तस्तत्र न वा प्रभुस्तु पुरके तावच्चलित्वा पुरः
पश्यामि' प्रियनित्यवाक्यमखिलैर्भक्तैस्तथा स्वीकृतम्।
सर्वः शान्तिपुरस्य सोऽत्र निरतो यानप्रबन्धे त्वितो
धावञ्छान्तिपुरं ययौ द्रुतमसौ नित्यावधूताऽऽतुरः।।४१०।।

आप्त्वाऽद्वैतगृहं ददर्श यतिको नित्यस्त्विदानीमपि
प्राप्तो न प्रभुरत्र, पृच्छति तदाऽऽचार्यं स चाद्वैतकम्।
किं नाप्तोऽत्र महाप्रभुः ?' गुरुरभूत्प्रीतौ परं गद्गदः
श्रुत्वा चागमनस्य तस्य वचनं गौराङ्गदेवप्रभोः।।४११।।

'अस्मिन् करिष्यति' जगाद स रुद्धकण्ठः
'किं श्रीप्रभुर्निजकृपां मयि दीनहीने ?।
कर्ता स्वपादरजसा स महाप्रभुः किं
निष्किञ्चनस्य गृहमस्य तु पावनञ्च' ?।।४१२।।

'द्वीपं प्रेष्य तु मां स्वयञ्च फुलियाद्वारा तथाऽऽगन्तुक-
श्चासीदत्र भवद्गृहेऽपि जननीमत्रैव चाह्वत्प्रियान्।
आयान्नेव तथा भविष्यति' वचः श्रुत्वैव नित्यादियद्
वृद्धाचार्यगुरुर्ननर्त विपुलाऽऽनन्दे स मत्तः प्लवन्।।४१३।।

आसीत्तस्य दशा तु तत्र समयेऽयूनो विचित्रा गुरो-
र्मध्ये शोकमुदोस्तथाहि पतितोऽद्वैतोऽधुना वर्तते।
संन्यासस्मरणं विधाय सुहृदस्त्वासीद्रुदन् दुःखितोऽ-
न्तस्तस्यागमदर्शनोद्गमसुखस्वादे प्रसन्नोऽधिकम्।।४१४।।

नानाव्यञ्जनयुक्तभोजनमसौ पक्तुं कृते श्रीप्रभो-
स्तस्मिन्नेव तथा क्षणेऽवददहो ! सीतां स्वपत्नीं गृही।
पक्तुं व्यञ्जनकं ललाग विविधञ्चाचार्यपत्नी क्षणाद्
(गेही स्वागतकक्षणं हि लभते भाग्याद् विशिष्टातिथेः)।।४१५।।

आचार्यदेवः प्रभुदर्शनार्थं
नित्यादिभक्तैश्च समं सपुत्रः।
श्रीमातृगङ्गातटमाप शीघ्रं
(सन्तः सरन्तीह तथाहि मार्गे)।।४१६।।

दूरादेव ददर्श गाङ्गपुलिने गत्वा तथाऽऽचार्यजी
श्रीभक्तैर्बहुभिः प्रभुः परिवृतः काषायवस्त्राऽऽवृतः।
शीघ्रं शान्तिपुरोन्मुखः सहृदयश्चायाति, हस्तद्वये
गृह्णन् दण्डकमण्डलू (नवनवो लोकोत्तरो भासते)।।४१७।।

आचार्यस्त्ववनौ विलुट्य मतिमान् दृष्ट्वैव दूरादसौ
साष्टाङ्गं प्रणनाम, तत्प्रभुरपि ह्यागत्य शीघ्रं पुरः।
भूमौ दण्डकमण्डलूकसहितश्चाचार्यपादेऽपतत्-
तत्पादे हरिदासजी च पतितः (पातः सति ह्युन्नतिः)।।४१८।।

धृत्वाऽन्योन्यमथैवमेव चरणौ भक्ता रुदन्तोऽभव-
न्नुच्चैः, स्त्रीपुरुषा बभूवुरखिला घाटस्थिता विस्मिताः।
आश्चर्येण विलोक्य सौहृदवतां तत्प्रेमदृश्यं तथाऽ-
पूर्वप्रेम शशंसुरत्र सकलं (प्रेमैव चेतोहरम्)।।४१९।।

चैतन्यः स्वयमुत्थितः प्रभुरयञ्चातिक्षणानन्तरं,
वृद्धाद्वैतगुरुं स्वपाणियुगलादुत्थापयामास च।
अद्वैतात्मजमच्युतञ्च पतितञ्चात्माङ्घ्रिपार्श्वे तथा
स्वोत्सङ्गेऽकृत स प्रभुः (शिशुरतिस्थायी रसो वत्सलः)।।४२०।।

तद्देहस्य रजः स्वरञ्जितमहद्वस्त्रेण संमार्जयन्
श्रीचैतन्यमहाप्रभुः कथयति प्रेमावतारी तथा।
'आचार्यस्तु पिताऽस्ति नो, ननु पिता तेऽप्यस्ति किं चैव स ?
(श्रीब्रह्मा निखिलप्रजापतिपिता नारायणस्तत्पिता)।।४२१।।

भ्रातृत्वमेव भुवि तर्हि तु नो द्वयोस्ते,
सत्यं तथाऽस्ति नहिं किं ? कथय त्वमेव ।
भ्राताऽहमस्मि तव नो ? परिवेत्सि मां त्वं ?'
(विद्योग एव हि चिदावरणस्य भङ्गः)।।४२२।।

दत्तं तदुत्तरमहो ! शिशुनाऽच्युतेन
'त्वं भोः पिताऽसि तु चराचरजीवजन्तोः।
कः शक्नुयात्तव पिता भवितुं प्रभो ! हे !
हास्यं करोषि तु मया सह काममेव' ।।४२३।।

श्रुत्वा तादृशमद्भुतोत्तरमहो ! तद्बालकस्याखिला
भूत्वा प्रीतहृदः प्रसन्नमनसोऽद्वैतादिभक्तास्तथा।
शंसामच्युतबालकस्य सुहृदो बुद्धेश्च ते चक्रिरे,
भूयः सोऽच्युतवर्त्मनः प्रभुरपि स्निग्धं चुचुम्बाऽऽननम्।।४२४।।

प्राप्तो भक्तजनैः समञ्च निखिलैराचार्यगेहं स्वयं
सोऽद्वैतः स्वगृहागतप्रभुपदे प्रक्षालयामास तत्।
नैवेद्याक्षतधूपदीपसुमनःस्रक्चन्दनाद्यैस्तथा
चक्रे पूजनसाधनैश्च विधिवत्पूजाममुष्य प्रभोः।।४२५।।

पादाम्बुपानमकरोत्स्वयमस्य भूयो
भक्तेषु तद्वितरणं निखिलेषु कृत्वा।
तत्स्वे गृहे च निखिले किरति स्म गेही
(श्रीकृष्णचेतनसुहृत्सु वरोऽद्वितीयः)।।४२६।।

अभ्यागतेरद्य महाप्रभोश्च
ह्यानन्दपारो न गुरोर्गुरुणाम्।
वारञ्च वारं स शशंस भाग्यं
(कस्यापि सौभाग्यवरक्षणः कौ) ।।४२७।।



# मातुः संन्यासिपुत्रदर्शनम्

२०. वैष्णवजननी वनिताऽमर्त्या।
स्थावरजङ्गमजगदिदमखिलं श्रीनारायणरूपम्।
संसृतिचक्रे नानाजन्तौ नरतनुता त्वतिशयिता
विद्याधारणबुद्धिसमन्वितकरवाक्साधनसहिता।
सत्कृतिपाणिमधुरसद्व्यक्तिप्रियचिन्तनसद्भावैः
अर्चनवन्दनचिन्तनकर्मणि सैवौचित्यं धरते।
तादृशसद्गुणभरसमलङ्कृतसन्नरजननी जननी
असदाराधकसुतजनयित्री मर्त्याऽगणिता वनिता।।

तद्देवीविधृतक्षमाव्रतशचीसौभाग्यशंसाक्रिया-
सामर्थ्यं पुरुषेऽत्र कुत्र भवितुं शक्यन्तु मर्त्यस्थले।
यद्गर्भाब्धि विरागिणौ सुमनसौ संसारकत्यागिनौ
जातौ सन्नरगौरवौ नरवरौ द्वावेव संन्यासिनौ।।४२८।।

वक्तुञ्चास्ति तु मातृकुक्षिरुचिता संसारमातुः शची-
देव्याः सा भुवि कुक्षिरेव, न भवेऽभावोऽत्र कश्चित्तथा।
मातॄणां शतसंख्यपुत्रजननीतच्छूकरीणां, परं
ग्रामाद् ग्रामभरेऽपि कोऽपि मनुजस्तन्नाम जानाति नो।।४२९।।

परं जगन्नाथसुविप्रपत्नी
देवी शची सा नदियासुकन्या।
प्रसूय गौराङ्गनिमायिपुत्रं
जाता जगत्या जननी सुजाता।।४३०।।

श्रीलसंकीर्तने। गौरभक्तास्तथा-।।४३१।।

२१. जय शचिनन्दन ! गौरगुणाकर ! ।
जगन्नाथसद्वरविप्रात्मज ! विश्वादर्शमनुजवर !
नवद्वीपलक्ष्मीप्रियवल्लभ! विष्णुप्रियात्मनिवास !।
हे विश्वम्भर ! गौरनिमायिन् ! हेऽतुलकृष्णचैतन्य!
प्रेमभावरसचेतनसागर ! कृष्णरतिस्फुटमूर्ते !।।

इत्यादिकीर्तनसुभद्रपदानि गात्वा-
गात्वाऽधुनापि सुहृदः प्रणुवन्ति भाग्यम्।
संसारमातृपदवीगतदेविशच्या,-
स्तां मातरं भगवतस्तु रुदन्ति चोक्त्वा ।।४३२।।

मातृस्नेहवशात्तथाहि गतयोः संन्यासितां पुत्रयो-
र्जातं दुःखमपारमत्र तु शचीदेव्या जगन्मातुराः! ।
यावत्तादृशदुःखमेव भुवने तामापयामास तत्-
सामान्यप्रकृतेः समस्तजगतीमातुः पदं दुर्लभम्।।४३३।।

तद्दुःखं विपुलं समञ्च महता धैर्येण सोढं तया,
नारी धैर्यनिकेतनं भुवि शचीमाता तथोदाहृतिः।
दत्तेऽस्यां भुवि (सत्यमस्ति) भगवान् यावत्तु यस्याधिकं
दुःखं, सोढुममुष्य शक्तिमपि तद्वै तावदेवाधिकाम्।।४३४।।

एवैकस्त्वविवाहितो भुवि युवावस्थागतोऽस्यां सुतो
निर्यातोऽस्तु विहाय साम्प्रतगृहद्वारन्तु यस्यास्तथा।
स्वामी स्याच्च दिवङ्गतः पुनरपि स्याद्यत्सुतस्योपरि
स्थाने मानवजीवनस्य निखिला चाशा तथा निर्भरा।।४३५।।

वार्धक्यैकतथाश्रयोऽप्यतिशयः प्राणात्स एव प्रियः
पुत्रः, स्वां वनितां विहाय युवतीं सन्तानहीनां गृहे।
गार्हस्थ्येऽपुनरागमाय भुवने संन्यासितां स्याद्गत-
स्तन्मातुर्हृदयं विनाऽत्र दरणं स्थातुं कथं स्यात्क्षमम्।।४३६।।

मासान्नो नव तु त्रयोदश परं प्रेमावतारोऽपरो
गौराङ्गोऽस्तु निवासकृन्मृदुविभुर्गर्भेऽत्र यस्या भुवि।
तद्वीरप्रसवानिमायिजननीनारीकृते कस्त्वियद्-
धीरत्वानुमितौ प्रभुर्भुवि भवेन् (मापोऽखिलो लौकिकः)।।४३७।।

भूयोऽप्यत्र भवे तथाहि जननीस्नेहो महांस्त्वद्भुतो,
माता पुत्रवियोगदुःखसहना पृथ्व्यां हसन्ती पुनः।
नो जातैव, मदालसादिजननी त्वत्रापवादात्मिका
(वृत्तिर्ज्ञानमदालसा जगति या, तस्यास्तु वार्तास्तु का ?)।।४३८।।

कौशल्या भुवि देवहूतिरखिला श्रीकीर्तिदा देवकी
पुत्रस्य त्ववतारसूतिजननी चार्ता वियोगादभूत्।
स्वार्तक्रन्दनतस्तु मातृसहजस्वाभाविकस्नेहगं
सर्वा सा ददती तथापरिचयं स्थाने मुमोचाश्रुकम्।।४३९।।

लोके सर्वसमर्थपुत्रविषये भूयोऽस्तु शेषा शची-
देवी किंविधिनाऽत्र, सापि जननी रत्नादिभक्तात्मसु।
कुर्वाणा च बभूव शान्तिपुरकं यातुं द्रुतन्त्वाग्रहं
(यं द्रष्टुं निखिलस्तथाऽस्तु विकलः, स्यात्तस्य माता कथम्?)।।४४०।।

आचार्यो नरवाहनस्य कुरुतेऽत्रैव प्रबन्धं क्षणे,
तत्रारोप्य चचाल शान्तिपुरकं प्रत्युन्मुखो मातरम्।
माताऽऽरुह्य नृवाहनन्तु चलिता संन्यासिनं स्वं सुतं
द्रष्टुं किं तु परं क्रियान्ननु पतिप्राणा वराकी प्रिया ?।।४४१।।

आज्ञाऽऽसीन्नहि दूरदर्शनकृतेरप्यद्य संन्यासिनः
पत्युः स्वस्य निमायिनामसुहृदस्त्वस्याः प्रियायाः कृते।
काषायाम्बरधारिणं नवयतिं स्वं प्राणनाथं तु सा
नासीद्द्रष्टुमपि क्षमा स्वनयने चापूर्य गौरप्रिया।।४४२।।

तस्या गौरनिमायिजीवनधनं लोकेऽधुना तत्कृते
त्वन्येषामपि कौ नृणामतिशयो जातः परोऽपेक्षया।
आसीत्किन्तु न वस्तुतः स्थितिरियं, यातोऽस्तु संन्यासितां
तस्या गौरपतिस्तु लौकिकदृशा (भेदो हि दृग्भेदतः)।।४४३।।

शिष्टाचारसुरक्षणार्थमधुना स्वप्राणनाथस्य सा
कामं स्थूलशरीरदर्शनमहो! कर्तुं भवेन्न क्षमा।
कुर्वन्नस्ति निवासमेष सततं त्वाराध्यदेवः प्रभु-
गौंरोऽस्याः स्मृतिमन्दिरे (सहृदयैः प्रेष्ठात्स्मृतिः काम्यते) ।।४४४।।

तत्पूजां कुरुते स्म सा स्वहृदये तत्रैव, चास्थाञ्जलिं
स्वां तस्मै च समर्प्य तत्प्रणमनं भक्त्याऽभवत्कुर्वती।
स्वश्वश्रूं दिशते निमायिरमणी सा वीरपत्नीसमा
'माताजी ! भवती तु यातु, निजकं चायातु दृष्ट्वा सुतम्।।४४५।।

मद्भाग्ये लिखितं न चास्ति विधिना तद्दर्शनं, नो तदा,
सौभाग्यं किमतोऽधिकं मम पुनर्भूयात्तु, यः सर्वदा।
आसीन्मेऽस्ति च सर्वदाऽत्र भविता त्वग्रेऽपि मे चैव यो,
गच्छन्त्यद्य हि शत्रु-मित्र-निखिलास्तद्दर्शनार्थं त्वितः।।४४६।।

तस्यैवाऽस्मि तु तस्य चैव सुहृदः स्थास्याम्यहं साधिका,
गार्हस्थ्यस्य भवेत्स काममथवा वेषेऽत्र संन्यासिनः।
एतैर्बाह्यकलक्षणैर्न हृदये मे भेदभावो भवे-
देकश्चैव स मे तु, काममवनौ यस्यां दशायां वसेत्'।।४४७।।

श्रुत्वैवमत्र वचनं निजपुत्रवध्वा-
स्तच्छंसनं स्वमनसैव च कुर्वती सा।
माताऽधिरुह्य नरवाहनकन्तु भक्तैः
संवेष्टिता प्रति च शान्तिपुरं चचाल।।४४८।।

अत्राऽऽप्ते च महाप्रभौ सति गृहं नानाविधं व्यञ्जनं
पक्त्वैव क्षणतो हि सज्जमकरोदद्वैतपत्नी सती।
यावद् व्यञ्जनकं तयाऽद्य रचितं तावद्भवेयुः क्षमा
नानेका मिलिताः स्त्रियस्तु रचितुं नानाऽप्यहोभिः पुनः।।४४९।।

पक्वा लावणचर्पराम्लमधुरा नाना पदार्थास्तथा
वैविध्येन समन्विता द्विदशधा शाकास्तथाऽऽसन् प्रियाः।
पक्वोऽभूद्विविधं तथैककदलीजश्चैव शाकोऽधिकं
(शाकः सात्त्विकराजसोभयसमं लोके प्रियं भोजनम्)।।४५०।।

रम्भातण्डुलतीकुरादिघटितं नानाविधं पायसं
चासीन्मुद्गकमाषकादिघटिताश्चान्ये तथान्ये वटाः।
कूष्माण्डस्य च धान्यकस्य विविधे पात्रे तथासज्जितं
वास्तूकस्य पुदीनकस्य रचितं राज्यक्तमासीत्पुनः।।४५१।।

मिष्टान्नं विविधञ्च सन्धितमहो ! संमिष्टपाकः पुनः
पक्वं तण्डुलकं तथारुचिकरञ्चासीद् विशेषाभिधम्।
सूपश्चाढकिमुद्गमाषचणकाद्यैर्भिन्नभिन्नात्मकः
पक्वोऽद्वैतगृहे निमायिकयतेः सीतागृहिण्या कृते।।४५२।।

संभोज्यं चिपटान्नदुग्धदधिकश्रीनारिकेलात्मकं
भिन्नं भिन्नमपीह चास्ति विविधं द्रव्यं तथा निर्मितम्।
आचार्यो निखिलं पदार्थमकरोत्स्थानत्रये सज्जितं,
दत्वा भोगमतो गृही भगवते, भोक्तुं प्रभुं प्रार्थयत्।।४५३।।

सत्तुं चासनकद्वयं प्रभुकृतेऽद्वैतेन दत्तं तथा
धृत्वा हस्तमनेन भोक्तुमतिथिः सोऽभ्यागतश्चासितः।
सामग्रीस्त्वियतीर्विलोक्य विविधं ब्रूते निमायिप्रभु–
(र्भोक्ता भोजयितुः प्रसादविधये स्थानेऽन्नशंसां क्रियात्)।।४५४।।

'धन्यं, सुन्दरसुन्दरं प्रतिदिनं वस्तु त्वियद्यद्गृहे
भोगार्थं ननु दीयते भगवते, तत्पादयोर्धूलितः।
भूयात्संसृतिपावकोऽत्र पुरुषः पापात्तु पापोऽपि कौ
(मर्त्येऽन्नं त्वमृतं, परं भगवतो भोगे प्रसादोऽर्पितम्)।।४५५।।

सीताऽस्ति स्फुटमत्र शान्तिपुरके माताऽन्नपूर्णेश्वरी,
यद्द्वारे तु सदाशिवो भुवि सदाऽऽतत्य स्वकं खर्परम्।
भिक्षार्थं भवति स्थितः, कथमियत्संव्यञ्जनानामतः
स्यात्तस्या रचनं कृते तु कठिनं ?' (माता विरामः क्षुधः)।।४५६।।

'श्रीविष्णोः शरणे विना तु गमनं तामन्नपूर्णां पुनः
शापान्मोक्तुमगस्त्यदीर्घतपसो नाभूच्छिवोऽपि क्षमः।
भूयः काममथाधिकं कियदपि श्रीमूर्तिरेषा न किं ?
वेत्तु व्यञ्जनसर्जनं' (हरिहरौ सृष्टौ समं क्रीडतः)।।४५७।।

अस्यामद्वैतोक्तौ। अस्त्येको वृत्तान्तः–।।४५८।।

(एकस्मिन् दिवसे चकार गिरिजा माताऽन्नपूर्णा सती
स्वस्यैकस्य तथाव्रतस्य नियमात्पूर्णं तु पारायणम्।
एकं भोजयितुं तपस्विनमहो ! योग्यं तथाब्राह्मणं
सा मूलप्रकृतिर्भवप्रतिकृतिस्तस्योपलक्ष्येऽलषत्।।४५९।।

चक्रे भोजयितुं त्वगस्त्यमुनिकं देवी विचारञ्च सा,
तामिच्छां प्रकटां निजां पतिमहादेवस्य चाग्रेऽकृत।
स श्रुत्वैव धरन् करौ श्रवणयोर्देवो महादेवजी
कृन्तन् स्वां रसनां रदैः कथयते 'रे बाप! रे बाप!रे!।।४६०।।

कुक्षेः को भुवने घटोद्भवमुनेः स्यात्पूरणे तु क्षमो,
देवि ! त्वं त्यज वै विचारमिममाः ! कञ्चित्ततोऽन्यं परम्।
विप्रं भोजय' पर्वतात्मजजगन्मातुः स्वशक्तेस्तथाऽऽ-
सीद्गर्वस्तदियं जगाद तरसा त्वल्पाभिमानस्वरात्।।४६१।।

'किं नैकस्य घटोद्भवस्य भविताऽहं कुक्षिपूर्तौ क्षमा ?
भुञ्जीताऽपि कियत्स ?, चाखिलमहं कर्ता प्रबन्धं तथा'।
ऊचे तत्तु सदाशिव'स्त्वमपरं देवि ! त्यज स्वं हठं,
साक्षादस्त्यवतारको घटभवो वै वाडवाग्नेर्मुनिः।।४६२।।

किञ्चिन्नास्ति तु हास्यखेलनमहो ! तत्तृप्तिसम्पादनं,
सन्त्यन्येऽपि ऋषिर्महर्षिरवनौ ज्ञानी तपस्वी पुनः'।
एतावेव हठौ तु सर्वविदितौ, तौ बालकस्त्रीहठौ,
सैषाऽभूच्च निमन्त्रणे घटभवस्यैव स्थिरा पार्वती।।४६३।।

'अस्त्विच्छा ननु ते यथा, (शिववचः) किन्तु त्वमेवाखिलं
कर्ता,ऽस्मिंस्तव चक्करेऽतिजटिले नाहं पतिष्यामि, तत्।
दातुं तस्य निमन्त्रणं, तव गिरा यामी'यदुक्त्वा शिवः
कृत्वाऽगस्त्यमुनिं निमन्त्रितमजस्त्वाप्तस्तथाद्यो गृही।।४६४।।

संप्राप्तो भगवानगस्त्यमुनिजी काले तथा तूचिते,
पक्तुं सम्प्रति भोज्यवस्तु विविधं श्रीपार्वतीजी स्वके।
पाके किन्नरयक्षदेववनिताश्चाह्व,त्सहस्रन्तु ताः
संपेचुर्बहु भोज्यवस्तु, घटजो भोक्तुं ससादाथ सः।।४६५।।

कस्याप्यत्र तथाऽम्लमिष्टलवणादेर्नो पदार्थस्य स
स्वादं पश्यति, यत्पुरोऽनुपतति 'स्वाहा' करोति द्रुतम्।
एवं सर्वपदार्थमत्र जठरे चक्रे विलीनं मुनि-
र्यच्चायत्त्वभव,त्तदेव घटजश्चोत्पातयन्नस्ति सः।।४६६।।

संजाता त्वधुना च शैलतनया श्रीपार्वती चिन्तिता,
न ब्रूते शिवगेहिनी शिवमपि ह्रीतो निजं स्वामिनम्।
कोऽप्यासीन्न तथास्थितौ स्ववशगस्तूपाय एवाऽपर -
श्चान्तेऽगाच्छरणे हलाहलपिबश्रीशङ्करस्यैव सा।।४६७।।

'ऊचे देवि ! तु पूर्वमेव भवतीं' ब्रूते हसित्वा शिव-
'स्त्वं स्या भोजयती कियत्त्वपि पुनर्भावी महात्मा नहि।
तृप्तोऽयं, न तथासनाच्च भविता तृप्तिं विना तूत्थितः,
कोऽप्यस्य च्छलतस्तथैव भविता चोत्थापने तु क्षमः।।४६८।।

श्रीविष्णुञ्च विना तथा त्रिभुवने विद्यां छलस्यापरः
कश्चिद् वेत्ति न, तत्प्रयामि तरसा तस्यैव पार्श्वे त्वहम्'।
उक्त्वेदं शिवजी गतो भगवतो विष्णोः सकाशे गृही
(गार्हस्थ्ये समुपैति कावसरः किं किं क्षमस्यापि नो ?) ।।४६९।।

वृत्तान्तं निखिलं निशम्य भगवान् ब्रूते हसन् 'कर्हिचित्-
त्वस्माकं न निमन्त्रणं कृतवती श्रीपार्वतीजी सती।
मामाहूतवती शिवा सुगृहिणी त्वापत्तिकालेऽधुना
गेहे मामपि भोजयेद्यदि निजे देवी, चलेयं तदा'।।४७०।।

तच्छ्रुत्वा स्वजटासु जल्पति शिवो हस्तं गृही चालयन्-
'त्वेकब्राह्मणतोऽस्तु मुक्तिरधुनाऽस्माकं महाराज ! हे !।
तत्पश्चाद् भवतः क्रमस्तु भवितेदानीं चल त्वं द्रुतं,
पार्वत्याश्च यथाऽस्तु संकटमिदं तस्यास्तथा मोचय'।।४७१।।

श्रीविष्णुर्भगवान् स मायिपरमो जाते शिवस्यार्थने,
तत्रागत्य समं त्वगस्त्यमुनिना भोक्तुं, तथाऽऽरब्धवान्।
कुर्वाणो भगवांस्तु भोजनमहो! कुर्वाण एवाधुना
मध्ये स द्रुतमुत्थितो-(ऽतिसमयं भुङ्क्ते कथं भोजकः?)।।४७२।।

शिष्टख्यातमिदन्तु नीतिवचनं—पङ्क्तौ नृणां भुञ्जता-
मेकस्मिंस्तु समुत्थितेऽपरनृणा न स्थीयतां भुञ्जता।
सोऽगस्त्योऽपि तदुत्थितश्च विवशो, विष्णौ च रुष्टोऽधिकं,
क्रुद्धो जल्पति (विप्रकोपसहने सिद्धोऽच्छसत्वो हरिः)।।४७३।।

'कार्यं नो भवता तथोचितमिदं चोत्थाय मध्ये कृतं,
पूर्णा कुक्षिरपीह मे न, तु जलं पातुं क्षणो दीयताम्'।
ऊचे बद्धकरो हरिः 'कुरु दयामात्मन्। महाराज! हेऽ-
हं त्वां भोजनकं त्वकारयमपि ह्यल्पं बहु ब्राह्मण!।।४७४।।

सामर्थ्यं जलपायनस्य तव नो मय्यस्ति विप्रोत्तम!,
त्वम्भस्ते समवेतमेव समये संपाययिष्याम्यहम्।'
तद्वादं भगवान् समुद्रसकलाऽम्भःपायनाच्चापिपः
(संवादो हि सतां, तथाप्रवदतां वादः स एव स्वयम्)।।४७५।।

सीताऽत्र देवी किल पार्वतीजी
चाचार्यदेवो हि शिवस्वरूपः।
अगस्त्यमुक्त्वा त्ववधूतनित्यं
विनोदमाचार्यगुरुः करोति।।४७६।।

महाप्रभुं निमायिनं निगद्य विष्णुमत्र च।
स्वरक्षणं तथेहतेऽवधूतनित्यकोपतः)।।४७७।।

आचार्यस्य तथाहि गूढ़वचनं श्रुत्वा निमायिप्रभुः
स्मित्वा मानस एव पश्यति तथा श्रीपादनित्यं प्रति।
नित्यानन्दसुहृच्च बालसदृशो ब्रूते 'दशाऽष्टौ दिनं
प्राप्तं भोजनमेव नो समुचितं, जातं यथैव व्रतम्।।४७८।।

तथाऽद्य पारणाऽधिकं व्रतस्य भाविनी, परम्।
कथं द्रुतं न चाऽऽनयत्ययं गृही पदार्थकम्'।।४७९।।

आचार्योऽल्पमसौ हसंस्तु पुरतो नाना पदार्थं द्वयो-
र्भ्रात्रोस्तन्निदधौ, महाप्रभु'रहो!' दृष्ट्वा जगाद द्रुतम्।
एतेष्वाम्लकमिष्टचर्परमयान्याज्याक्तवस्तूनि चाऽ-
नेकानि स्वकृते (निमायिमनसः संसारिरूपाद् भयम्)।।४८०।।

'आचार्य! क्षणकं विचारयतु हे! स्थाने भवानेव तु—
स्याद् धर्मस्य निजस्य केन विधिना लोके क्षमो रक्षणे।
संन्यासी त्वियतः पदार्थनिवहान् वै सुन्दरान् सुन्दरान्
भुक्त्वा (सर्वजयो नृणां रसजये, संन्यासिनः का कथा?)।।४८१।।

संन्यासिकोऽखिलनिजेन्द्रियसंयमे कौ
भुक्त्वा क्षमोऽत्र भविता किमिमान् पदार्थान्?।
कस्माद् भवान् रचितवांस्त्वियतः पदार्थान्?'
(संन्यासवृत्तिरिह संयमताप्रधाना)।।४८२।।

'सन्यासी तु भवान् यथाऽस्ति भुवने, तदवेद्म्यहं पूर्णत-
स्तस्मान्मे पुरतोऽधिकं भवतु नो'ऽद्वैतो बभाषे हसन्।
'अन्नं मुष्टिमितं गृहेऽस्ति ननु मे रूक्षञ्च शुष्कं यथा
गृह्णात्वत्र तदेव' (मायिवसतौ पुण्यादमायिस्थितिः)।।४८३।।

उक्तं श्रीप्रभुणा 'भवानपि पुनः सार्धं निषद्याऽत्तु तत्,
खाद्योऽयं भवता कथं दश-दश प्रेमिन्! पदार्थो नृणाम्।
अस्माकं परिवेषितोऽत्र पुरतः, केऽत्स्यन्ति सर्वानिमान्!'
(श्रीकृष्णो ग्रसतेऽस्फुटं व्रजजगद्गोवर्धनस्यार्चने)।।४८४।।

'भक्तैरर्पितकं पदार्थनिवहं नानाविधं श्रीपुरी-
क्षेत्रे स्पष्टमनेकवारममितं चोत्पातयस्यात्मनि।
भोक्तुं नो भविता क्षमस्त्वियदपि त्वन्नं किमत्राधुना?
न ग्रासद्वयमप्यदोऽस्ति तु पुरीक्षेत्रस्य चापेक्षया'।।४८५।।

आचार्यस्य महाप्रभुश्च हसतोऽत्युक्त्याऽनया लज्जितोऽ-
ल्पं भूत्वा वदति स्म 'नो, बहु तथा सत्यं पदार्थोऽधिकः।
(तत्स्वत्वं तु यतः क्षुधोऽत्र शमनं) निःसारयत्वल्पकं,
नोच्छिष्टत्यजनस्य चास्ति नियमो लोकेऽत्र संन्यासिनाम्।।४८६।।

आवश्यकता च स्यान्मे तु तथा चेत्।
भूयोऽहमलास्यं' (किं वस्तुनि कोचः)।।४८७।।

अत्यन्ताग्रहके कृते प्रभुसताऽऽचार्यस्तदाहारतः
कुर्वन्नल्पमभून्मना,क्कथयते नित्यस्तदेवान्तरे।
'कुर्वन्तौ कलहं निमायिसुजनौ स्यातां भवन्तावुभौ
(ज्ञानप्रेमसुशान्ततृप्तमनसः किं स्याद् बुभुक्षास्थितिः?)।।४८८।।

एतत्सुन्दरसुन्दरं स्वपुरतो दृष्ट्वा त्वियद् व्यञ्जनं
लालो मे स्रवतीह चाद्म्यहमयं पश्यत्वदो भोजकः।
एतन्मोदकमास्यमध्यपतितं, याता पुनः कूर्चिके'-
त्येवं पायसकूर्चिके स कथयन्नित्यो हसन् जग्रसे।।४८९।।

आरब्धः प्रभुणापि भोजनविधर्यद्वस्तु यात्यल्पतां
पात्रेभ्यस्तु महाप्रभोस्तदपरं तत्रैव गेही क्षणे।

आचार्यः परिवेषयत्यतिपटुस्तन्मात्रमेवाऽद्वयो,
नास्य त्वेकमपि शृणोति, कुरुतेऽत्यन्तं निषेधं प्रभुः।।४६०।।

सर्वे पुरोऽमुष्य तथा पदार्थाः
स्थितां बभूवुश्च यथावदेव।
करोति तस्याऽऽग्रहमेष भूयो
भोक्तुं (तथाभोजयिता हि कश्चित्)।।४६१।।

आचार्यः कुरुते विनोदमपि तन्मध्येऽत्र मध्ये पुन-
र्नित्यानन्दहृदा'ऽवधूत'! कथयन्नास्ते 'महाराज हे!।
त्वत्कुक्षेर्ननु पूरणन्तु कठिनञ्चात्यन्तमेवास्ति यन्-
नोनोऽल्पं त्वमगस्त्यत,स्त्विहि परं नोच्छिष्टकं स्यादपि'।।४६२।।

'उच्छिष्टं भविता स्थितं कथमहो!' नित्यावधूतस्य वाक्,
'कुर्वन् स्याः परिवेषणं, बहुदिनादद्यैव योगोऽस्ति तु।
लब्धः सुष्ठु सुभोजनस्य, सरलं नोत्थाय गन्ताऽद्य तत्
त्वत्स्याम्यद्य च पूर्णकुक्षिमधिकं' (भुक्तिस्तथान्नादरः)।।४६३।।

दैन्यं कृत्रिमकं प्रदर्श्य गुरुको ब्रूते स बद्धाञ्जलि-
'हे बाबा! दयतां, न कर्म सरलं कुक्षेस्तु ते पूरणम्।
विप्रोऽहं ननु निर्धन,स्तव कृते लाता कुतोऽन्नं त्वियत्-
(सत्यागप्रकृतिर्धनी,भुवि सदाऽधन्यस्तथासंग्रही)।।४६४।।

यन्मुष्टिद्विकमुष्टिं रूक्षं शुष्कमथान्नम्।
सन्तुष्टोऽस्तु तदेव स्थाने सम्प्रति भुक्त्वा'।।४६५।।

आसीदत्र भवद्विनोदवचनं श्रीनित्यकाचार्ययो-
रन्योन्यं विधिनाऽमुना,ऽधिकमसावासीद्रसंस्तु द्वयोः।
तत्प्रेम्णः कलहं विलक्ष्य सुमनाश्चास्वाद्य गौरप्रभु-
(र्लोकानां भवसङ्गिनान्तु कलहः क्रीडाऽत्र सत्प्रेमिणोः)।।४६६।।

आचार्यस्य तथेच्छया जठरकञ्चापूर्य चक्रेऽधिकं
स्थाने भोजनकं प्रभु,स्त्वपि यतिश्चान्याहकापेक्षया।
नित्यो द्वित्रिगुणं तथा, पुनरसावन्ते निधायात्मनः
स्थालीतः स्वकरे क्षिपन् कथयतेऽद्वैते तु मुष्ट्योदनम्।।४६७।।

‘गृहाण गच्छामि तथोत्थितोऽहं
दयां विधायोपरि तेऽधुना तु।
न पूरितं मे जठरं स्वकामं’
(न प्रेमपात्रद्वयपूर्तियोगः)।।४९८।।

क्रोधं कृत्रिमकं मनाक्प्रकटयन् ब्रूते तथाऽद्वैतजी
‘श्रीविष्णो! किमिदं कृतन्तु भवता, विष्णो! तथा नाशितम्।
तत्सर्वं मम धर्म-कर्म, न भवेज्जातेः कुलस्यावनौ
सङ्केतः किमपीह यस्य (भुवने सङ्केतवस्तुस्थितिः)।।४९९।।

याचित्वा गृहतो भुवीह गृहतो वै भुञ्जतस्तादृशः
स्पर्शोऽभूदवधूतकस्य वपुषोच्छिष्टान्नकस्यात्मनः
प्रायश्चित्तमथाधुना सुगृहिणा कार्यं मयाऽमुष्य किं!’
(चेतःशोधनमात्रमेव भुवने सत्कर्मजालं नृणाम्)।।५००।।

श्रीनित्योऽथ जगाद ‘पापमभवन्नोच्छिष्टकस्पर्शतः
पापोऽभूद् भगवत्प्रसादविषये तूच्छिष्टभावाऽऽधृतेः।
प्रायश्चित्तमतोऽस्य चैव यदिदं संन्यासिनां भोजनं
पञ्चाशच्च महात्मनां (ध्रुवमहं स्यां तेषु) संकारय’।।५०१।।

आश्चर्यं ननु कृत्रिमं प्रकटयन्नाचार्यदेवोऽवदन्-
‘नो बाबा! भुवि दूरमेव भगवान् संन्यासितः संधरेत्।
कर्तुं चात्मसमानमेव भुवने सर्वस्य वाञ्छन्त्यमी
धर्मं कर्म विनाश्य (नारदमतं दक्षात्मजा मेनिरे)।।५०२।।

(गार्हस्थ्यं निखिलाश्रयो भुवि) निजात्स्याद्योऽतिरिक्तो गृहात्
संसारे स तु कारयेदिह तथासंन्यासिनां भोजनम्।
एकाक्येव निजे गृहेऽहमवनावद्वैतनामाऽस्मि तु’
(क्रीडार्थं भवविस्तृतिर्भगवतस्तत्त्वं परं ह्यद्वयम्)।।५०३)।।

तद्धासे परिहास एव च तथा भुक्तेः समाप्ता क्रिया,ऽऽ-
चार्यः क्षालयते करौ तदुभयोर्भ्रात्रोश्च संन्यासिनोः।
तद्दत्तं मुखशुद्धिहेतुममुना चैलालवङ्गादिकं
(शुद्धिः सात्त्विकताप्तयेऽत्र विहिता भोगप्रधाने भवे)।।५०४।।

श्रीचैतन्यमहाप्रभुर्ननु दिनैरासीच्चतुर्भिस्त्रिभिः
श्रान्तो,ऽतोऽदनतो बहिःस्थभवने विश्रामहेतोर्ययौ।
पीठस्योपरि सुन्दरस्य गुरुकश्चैकस्य तस्तार सोऽ-
द्वैतः शीतलपट्टिका-(मतिशया साधुस्थितिः शीतला)।।५०५।।

स्वं काषायपटं महाप्रभुरसौ तस्यास्तथैवोपरि
स्तृत्वाऽऽरामपरो बभूव, पदयोः संवाहनार्थं प्रभोः।
आचार्यः प्रससार, किन्तु बलतः पादौ स्वकौ मोचयन्
हस्ताभ्याञ्च गुरोः प्रभुः कथयते (सेव्यो हि वृद्धो नरः)।।५०६।।

'एवं मां गुरुकः करिष्यति भवान् क्षीणं, तदा भावि मे
दुःखञ्चातिशयं, सुधीवर! भवत्पुत्राऽच्युताभस्त्वहम्।
पादावत्र तव स्वयं सुमनसः संवाहनीयौ मया
(वृद्धाऽऽसेवनकक्षणं भुवि नरः प्राप्नोति सौभाग्यतः)।।५०७।।

अतो भवान् दासहरिं मुकुन्दं
भक्तांस्तथान्यान्ननु भोजयित्वा।
अपि स्वयं भोजनकं करोतु'
(क्षुधाऽखिलानां विहिता हि तुल्या)।।५०८।।

लब्ध्वाऽऽज्ञामयमेवमस्य सुहृदोऽद्वैतो गृहाभ्यन्तरं
यातः, सर्वनिमायिभक्तसुहृदां संभोजनानन्तरम्।
सीतादेविपतिर्गृही स्वयमपि प्राप प्रसादं गुरु-
श्चाभ्यागत्य पुनः ससाद निकटे गौरप्रभोरव सः।।५०९।।

श्रान्तेश्चातिशयात्प्रभोस्तु नयने यामे तृतीये मनाक्
चैतन्यात्मनि मीलतोऽल्पमधुना निद्रा त्वमुष्याऽऽगता।
तत्कर्णे सहसा हरेर्ननु नभोभेदी ध्वनिः शुश्रुवे,
तस्मिंस्तु श्रुत एव तत्र चकितश्चोत्थाय चैवाऽऽस्त सः।।५१०।।

पृच्छत्यसौ च परितो निजमत्र पश्य-
'न्नाचार्यदेव! कुत एष हरिध्वनिस्तु?
अत्यन्तमत्र भवति श्रुतिगोचरो नः'
(प्रेम स्फुटं जगति शान्तिपुरं पिपर्ति)।।५११।।

आचार्योत्तरकं–'प्रतीतिरिह मे, त्वायान्ति भक्ता बहु
द्वीपात्त्वत्प्रभुदर्शनार्थमधुना'ऽऽचार्यस्तथेदं वदन्।
पश्यन्नस्ति बहिः प्रयाय पुरतस्तस्य क्षणानन्तरं
जातं भक्तसमूहदर्शन-(मलं पुण्यं प्रियाऽऽलोकनम्)।।५१२।।

श्रीवासप्रमुखा मुरारिविजयौ विद्यानिधिः श्रीधरः
श्रीशुक्लाम्बरवासुदेवमिलिता दामोदरो नन्दनः।
गङ्गादासरमायिसञ्जयमुखाः खाँबुद्धिमन्तोऽपरे
भक्तास्ते बहुसंख्यका ददृशिरे(प्रीतिर्निमायिस्थितिः)।।५१३।।

आयान्तः करतालखोलमुरजैर्वाद्यैः समं प्रेमिणः
कुर्वन्तश्च हरिध्वनिं सुमनसो,ऽद्वैतो विलोक्याऽखिलान्।
उल्लासेन सहोच्चकैः कथितवांश्चीत्कृत्य 'गौरप्रभो!
ह्यागच्छन्ति निमायिभावसुहृदः सर्वे तु सर्वे प्रियाः।।५१४।।

शेषो नास्ति तु कोऽपि चात्मवसतौ, शेषः कुतः संभवेद्,
राजा यत्र भवेत्प्रजाऽपि मिलिता तत्रैव भूमौ वसेत्।
भक्ताः प्रेममयाः पृथग् भगवतः किं स्थातुमेव क्षमाः?'
(प्रेष्ठप्राप्तिकृते समस्तजनतासांसारिकव्याहृतिः)।।५१५।।

आचार्यस्य तथा निशम्य वचनञ्चासीन्निषण्णो यथा
निःसृत्य द्रुतकं प्रभुर्ननु बहिर्भागे तथैवाऽऽगतः।
आयातः पुरतो विलक्ष्य सुहृदस्तेषां दधावोन्मुखो
(ह्लादाऽऽलम्बनकं ह्यवाप्य रसधिः किं प्रेममूर्तिः स्थिरः?)।।५१६।।

आसीत्तत्र तथाक्षणे प्रभुरहो! प्रेमाऽऽप्लुतोऽयं भवन्
यत्तस्योन्नतचत्वरस्य पुरतो न ध्यानमेवाऽभवत्।
एषोऽकूर्दत तूच्चकैश्च सहसा,ऽऽयान्तं प्रभुं स्वोन्मुखं
दृष्ट्वा ते तत एव नेमुरखिलाः साष्टाङ्गमस्मै प्रियाः।।५१७।।

भक्तानां भुवि पङ्क्तिरेव पतिता पङ्क्तिस्तु दीर्घाऽधिकं
दूरं संददृशे, तथैत्य तरसा सर्वानुदस्थापयत्।
कण्ठे कञ्चिदसौ चकार कमपि प्रेमी निमाय्यस्पृशत्
जग्राहाऽथ करञ्च कस्यचिदहो! कञ्चिन्ननाम स्वयम्।।५१८।।

सोऽयं केवलदृष्टिमेव कमपि प्रत्युन्मुखो दत्तवान्
सन्तुष्टं निखिलं तथाऽकृत सुहृन्नानाप्रकारेण च।
दुःखानन्दयुताः स्थितं स्वपुरतः संन्यासिवेषे प्रभुं
दृष्ट्वा ते रुरुदु-(र्दृशोऽश्रुपतनं कारुण्यसौहार्दजम्)।।५१९।।

ते मूर्च्छामधिगम्य केशरहितं गौरप्रभोर्मस्तकं
दृष्ट्वा पेतुरथावनौ, स्म चलति श्रीवासहस्तं प्रभुः।
अग्रेऽग्रे च विधृत्य, तस्य गुरुकोऽप्यासीच्च पृष्ठेऽद्वय-
स्तत्पृष्ठे स्म चलन्ति गाङ्गनदियाद्वीपस्य सर्वे जनाः।।५२०।।

आचार्यरत्नः प्रभुमत्र यान्तं चाग्रे विलोक्याऽऽह पुरश्च सृत्वा।
'आप्ताऽस्ति माताऽपि शची प्रभो! हे!' (रसाप्तिमूलं प्रथमं हि माता)।।५२१।।

तच्छ्रुत एव तु तस्थौ संभ्रमतश्चकितोऽयम्।
पृच्छति 'कुत्र तथाऽऽस्ते?' (देहगृहे जननीकू)।।५२२।।

आचार्यः शनकैर्जगाद 'निकटेऽदोनिम्बपार्श्वे धृतं
तस्या मानववाहनन्तु' तरसा पृष्ठे निवृत्तः प्रभुः।
एतस्मिञ्छ्रुत एव तत्र वचनेऽद्वैतस्तथाऽन्येऽपि ते
भक्ताः पृष्ठमिताः प्रभो-(र्हितगुरोः शिष्याः सदा पृष्ठगाः)।।५२३।।

दूरादेव नृवाहने स्वजननीं दृष्ट्वा निषण्णां प्रभुः
साष्टाङ्गं प्रणनाम तामपरतो भूमौ लुटित्वा यतिः।
वृद्धा पुत्रवियोगदुःखितमना माताऽऽलिलिङ्गात्मजं
स्वं संन्यासिपटं नृवाहविसृता-(ऽऽनन्दोऽपरस्पर्शतः)।।५२४।।

शीर्षे चास्य जगाद केशरहिते संचारन्ती करं
'सन्यासी त्वमहो! मम प्रणमनं कृत्वा निमायिन्! कथम्?।
पापं चार्पयसीह मय्यतिशयं (सर्वप्रणम्यो यति-,
र्धर्मादित्रयसाधनं भुवि गृहं, मुक्तिस्तु संन्यासता)।।५२५।।

यच्चक्रे त्वमहो! निमायिसुमनस्तद्भद्रमेवाऽकृत,
स्थातुं मे गृहके तथा त्वमधुना योग्योऽवशिष्टस्तु नो।
एतां पुत्र! च दुःखिनीं स्वजननीं वृद्धाममायां न मां
पूर्णं विस्मर, निष्ठुरस्त्वमपि न स्या विश्वरूपोपमः।।५२६।।

त्यक्तं तेन गृहं यतस्तु दिवसान्नाद्यावधिं दर्शितं
मे द्वीपे मुखमेव, सोदरसमं कुर्यास्तु न त्वं तथा'।
वृद्धा सा ब्रुवतीयदत्र पतिता माता त्वधीरा सती
(स्वाधारस्य पुरस्तथाहि पतनं लोकेऽत्र मर्यादितम्)।।५२७।।

भूत्वाऽपप्तदचेतनः प्रभुरपि क्रोडे च मातुस्तथाऽ-
रोदीद् बालसमः स्फुटं, कथयति प्रेमी रुदन् स्वां रुदन्।
'मातः! काममहं तु कीदृशमपि स्थाने भवेयं न किं
संन्यासी?, जननी मम त्वमसि, ते स्याञ्चैव पुत्रः सदा।।५२८।।

मुक्तोऽहं न कदापि तेऽत्र ऋणतो भावी तु, हे मातृके!
संन्यासग्रहणं विनैव विहितं द्राक् चिन्तनाद् बोधनात्।
भावी त्वन्न पृथक् तथा पुनरपि, द्वीपेऽथवा यत्र ते
स्यादाज्ञा भुवि, तत्र चैव भविता' (कौ दुर्लभो ज्ञापकः)।।५२९।।

श्रुत्वा प्रेमवचस्तथा प्रभुसतस्तत्सान्त्वनापूर्णकं,
सन्तोषोऽल्पमभूच्च मातुरधुना, साऽमार्जयत्स्वाञ्चलैः।
तस्याश्रूणि महाप्रभोः शिशुसमं संलाडयामास तं
(बन्धो हार्दमयो न मातृसुतयोः संबन्धतोऽन्यस्तथा)।।५३०।।

अद्वैतोऽर्थितवान् प्रभुञ्च चलितुं गेहं गृहस्थो निजं,
चैतन्योऽयमथोत्थितश्च शिबिकाञ्चोत्थाप्य तद्वाहकाः।
आचार्यस्य गृहोन्मुखाश्च चलिताः पृष्ठेऽचलच्च प्रभु-
(र्मुख्ये सत्यपि वै रसे कविकृतौ, स्थाने तथाऽन्याङ्गिता)।।५३१।।

तत्पृष्ठे बहवस्तथाहि सुहृदश्चेलुश्च संकीर्तनं
कुर्वन्तः प्रियमुच्चकैर्भगवतो, द्वारे तथा चागते।
आगत्याग्रमथाऽवतार्य शिबिकातस्तां शचीं मातरं
सीताऽद्वैतकगेहिनी स्वसहितां निन्ये स्वगेहान्तरम्।।५३२।।

भक्तकवृन्दं तत्र बहिःस्थम्। स्वं कुरुते संकीर्तनमिष्टम्।।५३३।।



# शचीमातुः संन्यासिपुत्रं प्रति मातृस्नेहः

२१. द्वीपं त्यक्त्वा कुत्र प्रयासि?
शीलं चन्दनशीतलमिह तेऽखिलजनहृदयाह्लादम्
श्रुतमपि विश्रुतमवनितलेऽस्मिन् पण्डितविद्वद्वर्गे।
अच्छलमच्छं प्रेममयं ते हृदयं भुवि पीयूषम्
प्रियाशयाश्रय! शचीवत्स! हे! निष्ठुरतां किं यातः?
वसुधैवास्ति कुटुम्बं यद्यपि समतोदारगुणानाम्
किन्त्वस्माकं नदियानागर! गौराङ्ग! त्वन्नान्यः।।

अस्त्यात्मा सुत एव मातुरथ वै मुख्योऽस्ति चैकः सुतो
भागो मातृतनोः, सुतस्य भुवने तुष्टौ हि सा तुष्यति।
तन्मोदे मुदिता तु मातृहृदये, तोषेऽस्य माता स्वकं
सन्तोषानुभवं करोति निखिलं (मातुर्हि सृष्टिः सुतः)।।५३४।।

इच्छैकैव तथाहि सर्वमहती मातुर्भवत्यात्मनो
भुञ्जानं स्वपुरः प्रियं निजसुतं द्रष्टुं तथा सेच्छति।
यावत्सुन्दरसुन्दरं स्वबलतो नाना पदार्थं निजं
पुत्रं भोजयितुं क्षमा भुवि भवेत्तावत्पदार्थं तु तम्।।५३५।।

एतावन्मुदितां तथैति हृदये सा भोजयित्वा स्वके
भुक्त्या स्वस्य न यावती,मपि सुतो वृद्धोऽस्तु कामं न किम्?!
तत्पाण्डित्यमतिप्रभुत्वज़गतां संसार एवाऽखिलो
माहात्म्यं मनुतां न किं? (नहि भवे सीमा नृणामुन्नतेः)।।५३६।।

मातुः किन्तु कृते सुतः स तु सदाऽल्पो बाल एव स्थितः,
पश्यन्ती भवतीह तस्य जठरं गेहाऽऽगतस्यैव सा।
आर्तः किं क्षुधया तु नाऽस्ति?, गमने कालेऽस्य गेहाद् बहिः
सा वस्त्रादिकरक्षणाय दिशते (वस्त्रं तनो रक्षकम्)।।५३७।।

एवं सा दिशतेऽल्पमल्पमपरं वस्त्वात्मजं चात्मनः,
सम्बन्धे ध्रुवमस्य कोऽपि न पथः स्याद् बोध एवाऽवनौ।
तत्पाथेयपदार्थबन्धनमसौ नो विस्मरत्यात्मनि
स्थाने नीतिविदोक्तमत्र ममतामातासमो नाऽपरः'।।५३८।।

२२. मात्रा सदृशं पोषणपमरं भुवनेऽस्मिन्नहि वपुषः।
प्रकृतिः कुरुते साधारणतः पोषणमिह निखिलानाम्
सत्त्वगुणाधिष्ठाता विष्णुर्यतो निखिलपोषणता।
तत्सत्त्वप्रकृतिप्रतिमूर्तिर्माता व्यक्ताकारा
मृदुताक्षमतानुपमप्रतिमा वत्सभावनप्राणा।।

अद्राक्षीत्तु निमायिनं स्वमपरं संन्यासिवेषे शची
माता, यद्यपि नाद्य पूर्वसदृशं स श्वेतवस्त्रं प्रभुः।
शक्तो धर्तु,मथाऽधुनाऽस्य शिरसो बालास्तथासुन्दराः
सिच्यन्ते न सुगन्धितैलमलनै-(स्तैलं हि रक्तप्रियम्)।।५३९।।

शक्तो भोजनमत्र कर्तुमधुना नो धातुपात्रेषु स
त्वेकस्यैव निषिद्धमस्य सुहृदः सम्प्रत्यथान्नादनम्।
एतैरत्र तथापि बाह्यवचनैः किं जायते, वस्तुत-
स्त्वास्ते मातृकृते स एव, न नवस्तस्या निमायी सुतः।।५४०।।

तन्मुण्डनाच्च शिरसः पटरञ्जनाद्वै
तस्या निमायिनि निमायिसुतेऽद्वितीये।
किञ्चिद् बभूव हृदये परिवर्तनं नो,
स्नेहं तथैव कुरुते प्रभुके स्म माता।।५४१।।

नानाव्यजनकं स्वयं प्रभुकृते माता पपाचात्मनो
हस्ताभ्यां, प्रकृतौ प्रभोः परिचिता साऽऽसीत्तथा पूर्णतः।
तस्या ज्ञातमिदं बभूव—ननु मे किं किं निमायी सुतः
प्रेम्णा चातिशयेन खादति (सुतस्रोतःस्नुतिर्मातृतः)।।५४२।।

तानेवाधिकसावधानमनसा सर्वान् पदार्थाञ्छची
पक्त्वा सा परिवेष्य चात्मकरतो माताऽबभक्षत्प्रभुम्।
संतोषाय च सोऽपि सम्प्रति तथामातुः पदार्थान् प्रभु-
र्भुङ्क्ते तान् रुचिपूर्वकन्तु निखिलान् (प्रीतिर्हि चेया सताम्)।।५४३।।

कुर्वन् भोजनमेष साम्प्रतपदार्थानां प्रशंसामपि
श्रीगौरः कुरुते स्म, तत्प्रभुसतः संभोजनानन्तरम्।
अन्यान् भक्तजनांस्तथाहि गृहिणी सीता च माता शची
प्रेम्णा भोजयतः स्म तेऽत्र मिलिते (नारी हि तृप्त्याकृतिः)।।५४४।।

माता सर्वजनस्य भोजनविधेः पश्चात्तु भुङ्क्ते स्वयं,
जातं तूत्सवमण्डपात्मकगृहं चैवं तदानीं गुरोः।
कुर्वन्ति स्म तथोत्थिताश्च निखिलाः प्रातस्तु संकीर्तनं
गङ्गातीरमगुः प्रियप्रभुयुता नित्यक्रियार्थं ततः।।५४५।।

गङ्गासुन्दरबालुकात्मपुलिने सर्वे मिलित्वा प्रियाः
कुर्वन्तः स्म भवन्ति तत्र विविधक्रीडां तथानन्तरम्।
आयान्ति स्म गुरोर्गृहे पुनरमी सर्वे ससंकीर्तनाः
(श्रीचैतन्यमहाप्रभुप्रियजनाः संकीर्तनैकप्रियाः)।।५४६।।

पक्त्वा भोजनकञ्च तावदकरोत्सज्जन्तु माता शची
पश्चात्तत्प्रभुभोजनस्य लभते भक्तः प्रसादं जनः।
श्रीमत्कृष्णकथा पुनः प्रतिदिनं यामे तृतीयेऽचलत्
(कृष्णप्रेम तथाप्रसारणकृते चैतन्यकस्योदयः)।।५४७।।

ते सर्वे गुणवर्णनं भगवतः कुर्वन्ति सत्प्रेमिणः
श्रीमत्कृष्णकथां निशम्य सुहृदो धन्यौ स्वकर्णौ तथा।
सायं यान्ति पुनश्च गाङ्गपुलिनं कुर्वन्ति नानाविधं
वार्तां भक्तिविसारिगूढ़विषये सङ्गेन गौरप्रभोः।।५४८।।

भक्तान् बोधयति स्म तत्र निखिलांस्तान् स्वान्तरङ्गान् प्रभुः
श्रीमद्भक्तिपरं रहस्यमपरञ्चोपासनापद्धतिम्।
श्रीनाम्नो दिशते बलं जपविधौ संकीर्तनाच्चाधिकं
(नाम्नो माध्यमतो रहो हृदि जपः प्रेष्ठाऽपरोक्षस्मृतिः)।।५४९।।

श्रीमन्नामजपं क्रियात्तु विधिना केनापि, चास्त्येव स
श्रेयोदो, दश-पञ्च तत्र सुहृदां संकीर्तनस्योपमा।
वाद्यानामपि हस्ततालमुरजादीनामपेक्षाऽस्ति नो,
सर्वस्थानदशाक्षणेषु जपितुं तन्नाम शक्यं नृणाम्।।५५०।।

वाक्यमिदं श्रीमच्छिवगीतम्। एष निमायी गायति भूयः-।।५५१।।

२३. सिद्धिर्जपनान्नूनमुमे! हे!
सिद्धिः प्रियतमशरणस्मृतिरिह, किन्तु न तस्य स्फुटता।
सत्सङ्गे तच्छ्रवणद्वारा हृदये रागोद्भूतिः
बहु तच्छ्रवणार्थं निजरसनाकीर्तितदयितस्मरमण्।

श्रवणं कीर्तनमात्मनि चिन्तनमथ निजदयिताकारम्
नामजपे सुहृदां साधयति स्वप्रियतमपरोक्षम्।।

'हेऽहं गौरि! वरानने! तु कथये सत्यं प्रतिज्ञान्वितं-
प्राप्ता सिद्धिरवश्यमत्र भवितुं शक्या जपात्प्रेयसः'।
शङ्का चेद्भवतीह कापि सुहृदो भक्तस्य कस्यापि तत्-
चैतन्यः कुरुते स्म साम्प्रतसमाधानन्तु तस्याः स्वयम्।।५५२।।

गङ्गातश्च निवर्तने सति पुनस्त्वारभ्यते कीर्तनं
ह्यानन्दो दिवसेषु तेष्वतिशयः संकीर्तने त्वाययौ।
आनन्दे ह्यविचेतनाश्च ननृतुः सर्वेऽत्र भक्तास्तथाऽ-
द्वैताचार्यमुदो न चास्ति परिधिः (कोऽप्यत्र गेही कृती)।।५५३।।

सौभाग्यस्य निजस्य शंसनमहो! कुर्वन् विसस्मार स
स्वात्मानं, स्वगृहे तथोत्सवसमारोहञ्च नित्यप्रति।
अद्वैतस्य तु वस्तुतोऽस्य मुदितो दृष्ट्वाऽन्तरात्माऽभवद्
(गेही वास्तविकप्रसादमयते तत्केवलात्मातिथिः)।।५५४।।

उच्चैर्भावगतो ननर्त गुरुकोऽसौ कीर्तनस्य क्षणे
वृद्धो विस्मरति स्वकं ननु वयो नृत्यञ्च कुर्वन् क्षणात्।
प्लुत्वोत्प्लुत्य विकूर्द्य नृत्यमकरोद् यूनामिवाचार्यको
नृत्यन् भूमिमथैति मूर्च्छितदशो (भूमिर्हि सर्वाश्रयः)।।५५५।।

होरा यावदथैव सोऽधुना स्थानेऽभूत्पतितस्तु मूर्च्छितः।
भक्तैः साम्प्रतमेष चेतितः, काठिन्येन परन्तु चेतति।।५५६।।

नृत्यं कीर्तनके स्म सम्प्रति बहु न्यूनं करोति प्रभु-
र्भावावेशगतस्तु यत्र दिवसे कुर्वन्नभून्नृत्यकम्।
एतस्याधिकमेव तत्र दिवसे जाता विचित्रा दशा
(वैचित्र्यं महतां विलक्षणमहो! लोके विचित्रात्मके)।।५५७।।

तत्सम्पूर्णशरीररोमनिकरः संजायते स्मोद्गतोऽ
वक्रं, सात्त्विकतामयस्य तरसा नेत्राश्रुधाराऽसरत्।
फेनो निःसरति स्म चास्य मुखतश्चोक्त्वा 'हरे! हे हरे!'
नृत्यंस्तावदथ द्रुतं स्म भवति (प्रेमा हि भावोऽद्भुतः)।।५५८।।

द्रष्टॄणामियमेव तत्स्थिरदृशां जाता प्रतीतिस्तदाऽऽ-
काशे नृत्यति च स्थितोऽयममनाः प्रेमा निमायिप्रभुः।
आनन्दे ननु विह्वलाः सुमनसश्चोत्थाप्य भक्ताः प्रभोः
पादाधस्तलधूलिमस्य निजके लिम्पन्ति कायेऽखिले॥५५९॥

साफल्यमेवं गतमात्मनस्ते
बोधन्ति सर्वे भुवि जीवनञ्च।
आचार्यगेहे विधिनाऽमुनाऽयं
चकार वासं दश वै दिनानि॥५६०॥

इच्छेयं भवति स्म शान्तिकनवद्वीपस्थयोर्वासिनां
सर्वेषां सुहृदां प्रभोर्वयमपि त्वेकं तथैकं दिनम्।
भिक्षां सम्प्रति कारयेम, तु शची माता निमायिप्रसू-
र्ब्रूते दीनतयाऽत्र तांश्च निखिलान् (स्निग्धं हि दैन्यं सताम्)॥५६१॥

'सर्वेऽभाग्यवतीमनाथममतां यूयं दयध्वञ्च मां,
यत्र क्वापि तथा वसिष्यति पुनः स्थाने निमायी यतिः।
भिक्षायां प्रभवोऽस्य यूयमखिलास्तत्रैव गत्वा, कृते
दुःखिन्या मम लब्धमत्र भविता सौभाग्यमेतत्कदा?॥५६२॥

जाने नो, त्वयमेव मेऽत्र समयो, युष्मांश्च सर्वानहं
भिक्षे, शान्तिपुरे ममात्मदयितो यावन्निमायी वसेत्।
पक्वं भोजनकं ममैव करतो गृह्णातु तावत्त्वसौ
(पक्त्वा भोजयतीह सर्वमवनौ नारी, तु भाग्यात्सुतम्)॥५६३॥

अस्त्यस्योपरि कौ ममैव भवतां तुल्योऽधिकारोऽधुना,
मद्वाञ्छा तु तथैव' साम्प्रतवचः श्रुत्वा च मातुस्तथा।
जायन्ते निखिलाश्च मौनमपरे भूयः प्रभोराग्रहं
नो कुर्वन्ति निमन्त्रणाय (सुहृदो भावग्रहाः केवलम्)॥५६४॥

भिक्षां स्निग्धविलक्षणस्वजननीहस्तेन पक्वां प्रभु-
र्गृह्णन्नेवमसौ समस्तसुहृदामानन्दकं सारयन्।
अद्वैताग्रहतोऽत्र शान्तिपुरके कुर्वन्निवासं बभौ
(सन्तो यत्र हि तत्र शान्तिरथवा सन्तोऽत्र शान्तिस्थले)॥५६५॥

अद्यत्वेऽस्ति तथाहि शान्तिपुरके गौरप्रभुः संस्थितो,
दूराद्दूरतरान्निशम्य तु समाचारं तथेमं जनाः।
आयान्ति प्रभुदर्शनाय, लगितस्त्वेको जनौघो यथा
स्थाने शान्तिपुरे प्रभुस्थितिवशात् (सल्लोकयोगः क्वचित्)।।५६६।।

प्रेमावतारो ननु मातृहेतुत-
श्चैतन्यदेवो दिवसान् दश स्थितः।
अद्वैतभावाऽऽग्रहतस्तथाऽभवद्
व्यक्तं प्रभुः शान्तिपुरे सदात्मनाम्।।५६७।।



# पुरीगमनात्पूर्वम्

२४. श्रीधरचरणाम्भोजं सत्यम्।
एवमेव विजानतां विदुषां किं संसाराकारे
सत्यासत्यात्मकचिन्तनमिह सच्छरणार्पितमनसाम्।
श्रीधरभागवतप्रीतात्मा कुन्तीस्तुतिसारयिता
'रतिमुद्वहतादद्धा भगवति मतिरसकृन्मे' गायति।।

अस्ति श्रीभगवत्स्वरूपमथवा युक्तं गुणैर्निर्गुणं
मिथ्या सत्यमथास्ति वा जगदिदं, चित्ते भ्रमाणां तथा।
उत्पत्त्यैव विभाव्यते, यदधुना पूर्णाधिकारी वयं
जाता नो भगवत्कृपाऽऽप्तिकरणे (दूरं भ्रमात्प्रेम तत्)।।५६८।।

पूर्णा तद्भगवत्कृपा भुवि पुनर्यस्योपरि ह्युद्गता,
तन्मस्तिष्कसमुत्थितो जनयति प्रश्नस्तथैतादृशः।
विक्षेपं हृदि तस्य नो, स सगुणः स्यान्निर्गुणो वेश्वरः
साकारोऽस्त्यथवा निराकृतिरहो! (तत्प्रेममात्रं जगत्)।।५६९।।

सत्यं स्यादथवा न वै जगदिदं कालत्रयेऽप्युद्गतं,
किञ्चिन्नास्ति तथोच्चसाधकहृदामेतैरथार्थो भुवि।
ते संसारिसमस्तसंग्रहपरित्यागं तु कृत्वा यथा-
शक्ति प्रेमनिमित्ततः प्रभुपदे मत्ता भवन्तीव तत्।।५७०।।

व्यामोहस्य विभेदनेऽत्र जगतः सत्यत्वमिथ्यात्वयो-
स्ते कुर्वन्ति तथा न साम्प्रतनिजामूल्यक्षणापव्ययम्।
अस्मच्चित्तवचः कथं घट-घटव्यापी प्रभुर्वेत्ति नो ?
किं नास्त्यत्र स सर्वशक्तिभरितः (सम्पूर्णशक्तिः प्रभुः)।।५७१।।

चित्तं तस्य तथाहि साम्प्रतदयाभावेन पूर्णं न किं ?
चेदां, तर्हि स नो हृदस्त्वभिमतं ज्ञात्वा यथार्थं प्रभुः।
अस्माकं पुरतो दयावशगतो भावी स्फुटं स्याद्यथा
साकारोऽथ निराकृति-(र्भगवती काम्या सती तत्कृपा) ।।५७२।।

द्वैताद्वैतविशिष्टशुद्धकलहे कस्मात्पतेम क्षितौ ?
सर्वेषां भुवि शक्यते तु भवितुं नो भावना तादृशी।

स्थातुं स्युर्न विहाय चिन्तनमहो ! मस्तिष्कमुख्यास्तु ये
श्रद्धोत्पादनमत्र कार्यमवनौ तान् बोधयित्वैव तु।।५७३।।

आसत्यं गमनीयमत्र भुवि तच्छ्रद्धाश्रेयेणैव तै-
र्वेदान्तस्य कृतो महर्षिभिरतो ह्येवोपदेशस्ततः।
वेदान्तो ननु कथ्यते श्रुतिपथे भागो हि वेदान्तिमः
संबन्धोऽस्य विचारतोऽस्ति (भुवने लोको विचारी प्रधीः)।।५७४।।

संसारे हृदयप्रधानपुरुषस्तावद्विचाराश्रया-
पेक्षां किन्तु करोति नोऽतिशयितां, 'श्रीकृष्ण-कृष्णेति' सः।
जल्पन्नेव निजप्रियाङ्घ्रिकमलं यावत्प्रगम्यावनौ
भूत्वा तस्य सदैव तिष्ठति (नरः प्रेष्ठात्मकः कोऽपि कौ)।।५७५।।

किं तस्यैव ?, स जायते ननु यथा तद्रूप एवावनौ,
स्यान्नो सर्वजनस्य लब्धमपरं सौभाग्यमेवं परम्।
शक्नोत्यस्य पथः स एव भवितुं पान्थस्तु यस्योपरि
स्याल्लोके तदनुग्रहो-(ऽत्र पथिकः प्रेम्णस्तु कश्चिनरः)।।५७६।।

एतस्योपरि युज्यते तु भवितुं शङ्काऽप्यसौ यत्पुन-
र्भूत्वा स्यान्ननु कृष्ण-कृष्णवदनोऽज्ञानी सदैवाऽवनौ।
नो सांसारिकबन्धनात्तु भविता मुक्तिर्विना ज्ञानतो
(वेदान्तोपनिषद्रहस्यमपरं, वेदो हि शब्दप्रमा)।।५७७।।

यायादाप्रभुपादपद्म कथमा ! मूर्खः स भक्तः पुन-
स्तस्यास्त्युत्तरमेतदेव सरलं-त्यक्त्वा तु सर्वस्वकम्।
स्यादाप्तः शरणं तथा भगवतोऽनन्यात्मना चैव यो,
वेदान्तप्रथितस्तथाहि भगवान् यः सच्चिदानन्दकः।।५७८।।

सत्यं ज्ञानमथ स्वरूपमपरं यस्यैव चानन्तकं,
सन्तं स्वे शरणे स हास्यति कथं तं ज्ञानहीनं प्रभुः?।
प्राप्ते तच्छरणे तथैव हृदयग्रन्थिः स्वतश्चैव तु
स्याच्छिन्नो,ऽखिलसंशयोऽस्य भविता दूरं विनाऽऽयासतः।।५७९।।

कर्माकर्मगतं विनैव जटिलं लोके समस्यासमा-
धानं तस्य समस्तकर्म भविता क्षीणं प्रकाशात्प्रियात्।

सौलभ्यं शरणागतौ भगवतः सारल्यमेवेदकं
सारस्यञ्च समस्तसाम्प्रतरसो यत्सोऽयमानन्दकः।।५८०।।

ऐक्यं नो करणीयमत्र भविताऽप्याकाशपातालयो-
रानन्दोऽपि सदा स्थिरोऽद्भुतरसस्याऽऽपानमेवात्मनः।
चादोऽनन्यकसाधनार्थभगवत्प्रेमप्रपत्त्यै परं
कार्यो लौकिकसर्वसंग्रहपरित्यागस्तु सम्पूर्णतः।।५८१।।

तस्याद्भुतासवरसस्य तदैव शक्या
प्राप्ति,र्न सेत्स्यति परं प्रियकर्म साधोः।
पाखण्डमात्रघटनेन च भेदभाव-
क्षेत्रे तथाहि कुचिते प्रतिबद्धभावात्।।५८२।।

अद्वैतसंन्यासिपथेन तन्महा-
प्रभोस्तु दीक्षाग्रहदण्डधारणात्।
शङ्का तथाऽद्वैतगुरोरजायत
(स्थाने विपश्चिन्मतिरत्र शङ्कते)।।५८३।।

२५. पृच्छति गुरुरद्वैतो गौरम्।
'लीला केयं भवता रचिता? चिन्तनतोऽपि न जाने।
संन्यासो योऽद्वैतवादिनां प्रियतमधर्मो भुवने
मधुरो मधुरसमर्पितचेतास्तमधृत कथं निमायी।
इह लोकोत्तरमखिलं कार्यं भवतो, ज्ञातुमशक्यम्'।
प्रश्नमिमं श्रुत्वा प्रभुरवदद् गुरोः स्मयन्निह मन्दम्-
'आचार्य! स्वयमस्ति विपश्चित्पश्यतु निजचिन्तनया।
मन्ये किं नाहं सिद्धान्तं त्वद्वैतं परमान्तम्?
जीवेश्वरयो रूपलिङ्गजो भेदः केवलमास्ते
वास्तवतोऽन्यः कश्चिद् भेदो दर्शनतो नैवास्ते'।
अद्वैतः श्रुत्वेदमुत्तरं विहसन् गुरुः कथयते-
'वाणीश्वर! ते पुरतः कश्चिज्जेता प्रश्नोत्तरतः'?।।

तत्प्रभुगौराङ्गोऽधिकमेव। सार्धमयं गम्भीरतयाऽऽह।।५८४।।

२६. 'दण्डो मानसपशुचेतयिता।
नृपदण्डो जनताहितकारी ध्वजदण्डस्तद्‌धारी
अन्धवृद्धयोश्चलनसहायो दण्डोऽचेतनबन्धुः।
गोचारकवृषवाहकदण्डो मर्यादेङ्गितकारः
कुम्भकारकृतिमुख्यसहायकचक्रचालको दण्डः।
चञ्चलमतिशयमिदमस्माकं मानसमन्तःकरणम्
संन्यासाश्रमयतिदण्डः किल तद्‌दमनस्मारयिता।
प्राणरमणहृदयप्रियवल्लभकृष्णभजनमात्रार्थे
सर्वत्यागाकृतियतिदण्डद्वारा मनःप्रवृत्तिः।।

एवं गूढरहस्यपूर्णवचनं श्रुत्वाऽत्र गौरप्रभो-
रद्वैतस्य बभूव मानसतले स्थाने प्रमोदोऽधिकः।
संन्यासग्रहणस्य तत्रविषये भक्तैस्तथान्यैः प्रभो-
र्वार्ता तैस्तदनन्तरं बहु कृता-(ऽऽलापः प्रिये प्रेमिणाम्)।।५८५।।

'संन्यासं तु विधृत्य भक्तनिकरेऽन्यायो महांस्ते कृतः,
पूर्वं प्रेमतरोः स्वकीयकरतः कृत्वा भवान् स्थापनाम्।
श्रीसंकीर्तनमिष्टशीतपयसा संवर्धयामास तं
युक्तं पालितवांश्च सुन्दरफलाऽऽभारैर्निमायिप्रियः।।५८६।।

आयातो रससारपाकसमयस्तेषां फलानां यदा
तत्पूर्वं मधुरप्रियोऽपि सुमनाश्चिच्छेद तं मूलतः।
संसारी निजहस्तरोपितमहो! नोच्छेदयत्यत्र कौ
सर्वेषां विषवृक्षमप्यहितकं (को वेत्तु लोकोत्तरम्)।।५८७।।

जीविष्यन्ति कथं निमायिहृदयं भक्ता भवन्तं विना?
तेषां श्रोष्यति कः कथाञ्च करुणां सौहार्दपूर्णात्मना।
प्राप्तायां विपदीह कस्य शरणे यास्यन्ति ते प्रेमिणः?
कर्ता स्वाद्‌भुतनृत्यतः प्रमुदितान् संकीर्तने कोऽद्य तान्?।।५८८।।

गङ्गावारिविहारमद्य सहितो भक्तैर्विधाताऽत्र कः?
कर्ता कः सुखिनश्च कृष्णकथयाऽजस्रं च नो हर्षितान्?।
दुःखं सोढुमयोगजन्तु भवतो गौडप्रभो! सक्षमा
भक्ता नो भुवि भाविनः' (प्रियसुहृत्स्वप्राणतुल्यः सताम्)।।५८९।।

एवं स्वप्रियभक्तवृन्दवचनं श्रुत्वा प्रभुः सान्त्वनां
तेषां सम्प्रति बन्धयन् कथयते 'हे भ्रातरः! पश्यथ।
कार्यं सेत्स्यति संभ्रमान्नहि परं भूतं तु तद् भावि यत्-
(शस्यन्ते भुवि भाविमङ्गलहृदः सन्तो हि सामाजिकैः)।।५६०।।

गार्हस्थ्यग्रहणस्य सम्मतिमहो! त्यक्त्वा तु संन्यासकं
मत्त्यं दास्यथ चाद्य यूयमपि न स्वामी समेषां तथा।
स्थास्यत्येव तु नश्च वोऽत्र गुरुकोऽद्वैतो, विधाता जग-
न्नाथस्यापि निवासमस्मि नियतं पुर्यां (प्रियः स्यात्पुरः)।।५६१।।

कर्तारो गमनं तथाऽऽगमनकं काले च कालेऽखिला
यूयं मन्निकटे, कदाप्यहमपि त्वत्रागमिष्यामि वै।
गङ्गास्नाननिमित्त,मेवमवनावन्योन्यमेकान्ययो-
र्मेलश्चैव भवंस्तथाहि घटिता'-(ऽऽत्मीयातुराः प्राणिनः)।।५६२।।

अस्मिन्नेव तथान्तरे शशिशिरा आचार्यरत्नोऽवदत्-
'सर्वान्नो ननु बोधयेदपि भवान् प्राज्ञो यथा वै तथा।
किं ब्रूषे शचिमातरि त्वमधुना सा नेच्छति त्वां विना
माता जीवितुमेव' (मातृपदवीमूलं स्त्रियो ह्यात्मजः)।।५६३।।

ऊचे कातरभावतः प्रभुरतः 'शक्नोमि किं मातरं
पुत्रो बोधयितुं त्वहं, सहृदयास्तां यूयमेवात्मना।
ताटस्थ्येन तु बोधयिष्यथ यदा सा तर्हि संबोधिता,
माताऽऽज्ञाञ्च पुनः करिष्यति यथा कर्ता तथैव त्वहम्।।५६४।।

सा वदिता यदि वस्तुं मां तु गृहे मम माता।
तादृशमप्यहमस्यै कर्तुमयं ननु शक्तः'।।५६५।।

तन्मध्येऽश्रु विमुञ्चती सहृदया माताऽपि साऽत्रागता
ब्रूते गद्गदकण्ठतः 'कथमपि स्थानान्निमायिंस्त्वितः।
क्वाप्यन्यत्र विहाय मान्तु कुरुषे यातुं विचारं परं'
(स्थानं विस्तृतमत्र किन्तु ममता संकीर्णकालम्बना)।।५६६।।

ऊचेऽसौ करुणस्वरेण जननीं गौरप्रभुर्बोधयन्
'मातः! कर्तुमहं प्रभुर्नहि तवाऽऽदेशस्य चोल्लङ्घनम्।

कर्ताऽहं तु तथा वदिष्यति यथा, गेहे स्वसंबन्धिनां
पार्श्वे चात्मगृहस्य नैव विहितो वासो यतीनां कृते।।५९७।।

एतावन्ति दिनानि, चाधिकदिनं यावन्निषिद्धं तथा
चैकान्नादनमप्यजस्रमवनौ संन्यासिनां वै कृते।
एतादृद्दिवसं परं तव तथाऽऽचार्यस्य हेतोर्मुदः
स्थित्वा चात्र तवैव हस्तघटितां जग्राह भिक्षामहम्।।५९८।।

क्वाप्यन्यत्र तथैत्य सम्प्रति मया स्थातव्यमस्मात्परं
स्वेच्छाऽऽसीद् गमनस्य मे प्रियतमश्रीकृष्णवृन्दावनम्।
आकृष्याऽऽनयति स्म मान्तु बलतः स्नेहोऽत्र सर्वस्य ते,
स्थानं यन्मम देक्ष्यसि त्वमधुना तत्रैव वत्स्याम्यहम्।।५९९।।

आज्ञाविरुद्धाचरणस्य ते नो
मय्यस्ति पुत्रे क्षमताऽत्र मातः!।
सदाऽभवं ते, भविता तथाऽहं'
(निमायिमातुर्न निमायिपुत्रः?)।।६००।।

तत्संन्यासिसुतस्य तादृशवचः प्रेमान्वितत्त्वात्मनः
श्रुत्वा मातृमनोऽपि तत्परिणतं, तत्प्रेमवाक्यैः कृतम्।
मन्ये तादृगधीरमातृहृदये धैर्यस्य संचारणं,
तन्माता दृढतास्वरेण दिशते (प्रेमाऽखिलालम्बनम्)।।६०१।।

'मद्भाग्ये लिखितं यथा सुत! भवेद् भोक्ष्याम्यहं तत्परं,
नासीद् ध्यानमियन्निजस्य विषये यावत्प्रियायाः कृते।
साऽबोधाऽस्ति तु बालिका,ऽपरिचिता लोकस्थितौ पूर्णतः,
किन्त्वास्ते भवितव्यता बलवती, का युक्तिरेवाधुना?।।६०२।।

संन्यासं व्रतकं विहाय परमं भूयो गृहस्थाश्रमे
निःसार्य स्वमुखात्प्रवेशविषयां पापात्मवार्तामहम्।
पापस्यास्मि तु भागिनी न भविता? संन्यासिकावस्थितौ
निन्दिष्यन्ति च नूनमेव निखिला गेहस्थितेस्त्वां नराः।।६०३।।

शक्ता सोढुमपीह येन विधिना केनापि तेऽयोगतो
जातं दुःख,मथात्र सोढुमबला निन्दां निमायिंस्तु ते।

लोकानां मुखतः क्षमा न भविता, कुर्वे ततोऽहं न ते
स्वे गेहे वसनाऽऽग्रहन्त्वपि (भवेदौचित्यमप्याग्रहे)।।६०४।।

श्रीवृन्दाविपिनन्तु दूरमधिकं क्लेशो भविष्यत्यतो
भक्तानामपि ते तु तत्र वसनाद्, भूयो द्रुतं च द्रुतम्।
अप्राप्तो भविताऽपि मे तव समाचारो, यदीच्छा भवे-
त्ते च स्यादनुकूलमत्र जगतः, पुर्यां निवासं कुरु।।६०५।।

गच्छन्ति प्रतिवर्षमेव जनता द्वीपात्सहस्रं पुरी-
मायास्यन्ति रथोत्सवस्य समये त्वाऽऽमिल्य भक्तास्तथा।
मह्यञ्चापि तव प्रियस्थितिसमाचारोऽत्र भावी मिलन्
(प्रत्यक्षं नहि योऽत्र, तुष्यति परं प्रेमी निशम्यैव तम्)।।६०६।।

अस्मान्नो मिलितुं, प्रियत्रिपथगास्नानस्य हेतोरपि
क्वापि क्व त्वमपीह जन्मविषये प्राप्तः पुनर्याहि वै।
तन्नीलाचलवासतोऽधिकमियन्न स्यात्प्रतीतन्तु नो
दुःखं त्वद्विरहस्य, यत्र च यथाऽग्रे तेऽनुकूलं भवेत्'।।६०६।।

'त्वं धन्या जननि!' प्रभुः प्रकटयन् ब्रूते मुदं 'विश्वदा-
मातुश्चेदृशमेव भाति वचनं, मातुश्च संन्यासिनः।
उक्तं ते त्वनुरूपमेव, तु शिरोधार्या त्वदाज्ञाऽस्ति मे
(शास्त्राज्ञा प्रथमा नृणां भुवि कृतेऽद्धा 'मातृदेवो भव')।।६०८।।

वत्स्यामि गत्वा त्वित एव पुर्यां
कदा-कदाचित्तत एव चाहम्।
गङ्गानदीस्नाननिमित्तमत्र
द्वीपेऽपि कुर्वन् भविता स्वयात्राम्'।।६०६।।

एवं तत्प्रभवे निजस्वनुमतिं वस्तुं तु नीलाचले
सा माताऽपि ददौ, विषण्णवदनैर्वार्ता रुदद्भिस्त्वियम्।
गङ्गाद्वीपनिवासिशुद्धहृदयैर्भक्तैरपि स्वीकृता,
तन्नीलाचलयानमस्य सुहृदो जातं प्रभोर्निश्चितम्।।६१०।।

सङ्गेऽमुष्य महाप्रभोश्च चलितुं भक्ता बहु प्रस्तुताः
सर्वान् किन्तु रुरोध, तान्निजगृहं यातुं पुनश्चाऽऽग्रहीत्।

हातुं स्मेच्छति तं न भक्तनिवहस्तत्प्रेमपाशे तथाऽऽ-
सीद्बद्धो, गृहयाननामविषयादेवाभवद्व्याकुलः ।।६११।।

श्रीगौरप्रभुणा तथाहि बहुधा प्रेम्णा कृतेऽप्याग्रहे
गन्तुं भक्तगणो गृहं निज-निजं नोऽभूद्यदाहीच्छुकः ।
प्रस्थातुं कृतवान् विचारमधुना तत्पूर्वमेव प्रभुः
श्रीनीलाचलमेष (नीडमयते पक्षी जनोऽस्ते रवौ)।।६१२।।

एतावन्ति दिनानि चाग्रहवशादासीत्स्थिरोऽद्वैतकाऽऽ-
चार्यस्या,द्य रुदन् स्वसम्मतिमदादद्वैतकोऽप्यस्य सः ।
नित्यानन्दमुकुन्दपण्डितजगद्दामोदरास्तेष्वमी
चत्वारोऽत्र तथोद्यताः सुमनसः सङ्गे प्रयातुं प्रभोः ।।६१३।।

आचार्यदेवाऽऽग्रहतश्च तेषां
प्रभुस्त्वपि स्वानुमतिप्रदानम् ।
चक्रे स्वसङ्गे चलितुं निमायी
(स भाति मध्ये हृदि वै चतुर्भिः)।।६१४।।



२७. प्रेयन्! यातुं कृतमनसि त्वयि, किं वाच्यं? मे, शिक्षय।
'मा याही'त्यपमङ्गलमेतद् 'व्रज' रसहीनं वचनम्
'तिष्ठे'ति प्रभुता, 'स्वेच्छां कुरु' तत्स्यादौदासीन्यम्।
'जीवामि त्वदभावे नाहं' स्थात्संभाव्यं वा नो?
तदुचितमधुना वक्तुं किं स्याद्? दिश मां स्वप्रस्थाने।।

२८. तुलसी दुर्जनसज्जनभावं योगवियोगाद् दिशते।
यस्याऽऽगमनान्निर्गमनात्किल हर्षविषादौ मनसः
तत्सद्वस्तु स्वीकृतमखिलैः, सामान्येयं युक्तिः।
मिलनाद् दारुणपीडां यच्छति कश्चिदसौ पर एव
विरहात्सद्यः प्राणान् हरते सोऽपर-दशरथरामः।।

सत्यं मृत्युसमानमेव सुहृदो दुःखं वियोगक्षणे
लोके स्वप्रियसज्जनस्य भवति (प्रेम्ण्यत्र सल्लीनता)।
एतावन्ति दिनानि येन सहितं हासं प्रहासं तथा
चक्रुर्भोजनपानकादिकमहो-(ऽनित्योऽत्र सङ्गो नृणाम्)।।

यः स्वान्तःसहवाससौख्यमुदितां संप्रापयंश्चानिशं
द्वीपेऽभूत्तु, स एव सुप्रियतमः प्रेमी झटित्यद्य नः।
जाने नो दयितः पृथग् भवदसौ स्थाता कियत्कालकं,
क्षोभस्तत्स्मृतिमात्रतः सहृदयान्तर्जायते वै महान्।।६१६।।

आनन्दो मधुरोऽस्ति चाति मधुरो दुःखेऽपि तस्मिन् परं,
तस्यास्वादनमेव भावुकनरः प्रेमी विधातुं क्षमः।
स्वार्थान्धस्य नरस्य तत्सुखमहो! सामान्यसंसारिणो
भाग्ये नार्पितमस्ति (सर्वसुहृदां संसार एवाऽपरः)।।६१७।।

भक्तानां मनसः प्रमोदनमहो! कुर्वन् दशाऽहानि तत्-
कृत्वाऽसौ भविताऽद्य शान्तिपुरकत्यागं निमायिप्रभुः।
श्रीमन्नाथपुरीपथस्य पथिक,स्तद्वृत्तमात्रस्मृतेः
सर्वेषां पुरवासिनाञ्च हृदये सत्प्रेमशुद्धात्मनाम्।।६१८।।

पीडेव प्रभुविप्रलम्भविषयध्यानात्सतामुद्गता,
सर्वाऽऽस्येषु विषण्णताऽस्ति वितता, स्वप्रच्छदं रञ्जितम्।
वस्त्रं सोऽन्यमनस्कभावहृदयादुत्थापयामास तत्-
कौपीनञ्च कटौ बबन्ध शिरसि स्थाने तथा गालनीम्।।६१६।।

दण्डञ्च प्रथमे कमण्डलुमसौ धृत्वा परस्मिन् करे
तत्स्थानात्तरसा प्रभुर्बहिरभू,त्तं यात्रिवेषेऽधुना।
तत्रोपस्थितसर्वभक्तसुहृदो दृष्ट्वाऽरुदन् विस्फुटं,
वृद्धामातृशचीहृदेव सरति (क्षान्तेर्न सीमाऽस्ति किम्?)।।६२०।।

नीत्वाऽमुष्य कराद् दधार जगदानन्दश्च दण्डं प्रभो,-
र्हस्ते स्वे च कमण्डलुं सुमनसो दामोदरः पण्डितः।
सम्प्रत्यस्य महाप्रभोरभवतां रिक्तौ करौ तावुभौ
वृद्धामातृपदे स्पृशन् कथयते ताभ्यां स रुद्धस्वरः।।६२१।।

'मातर्देहि तथाऽऽशिषं मम यथा स्वस्य क्षमः स्यामहं
कर्तुं पालनकं तथाहि विधिवत्संन्यासधर्मस्य कौ'।
पुत्रस्नेहतथार्तमातृहृदये ज्ञातं तदा नो कुतो
द्वीपादागतमत्र साहसमियत् (स्नेहो हि तेजःप्रियः)।।६२२।।

माता स्वप्रियपुत्रमूर्ध्नि दिशते संवाहयन्ती करं
'पन्थाः पुत्र! तवाऽस्तु मङ्गलमयो, वातोऽनुकूलो भवेत्।
त्वं धर्मं विधिवच्च पालय निजं' मातुर्ब्रुवत्यास्तथा
रुद्धोऽस्याश्च गलोऽधिकं न किमपि त्वग्रे क्षमा भाषितुम्।।६२३।।

क्रन्दन्त्या निजमातुरत्र सुमनास्तस्यां स्थितावेव तत्-
चक्रे पुत्रयतिः प्रदक्षिणमसौ संयोज्य हस्तावुभौ।
गङ्गातीरपथेन निःस्पृहहृदाऽक्रामत्पुरीसन्मुखो
(गङ्गाद्वीपभुवो हि सागरपुरीनाथेऽपरः सङ्गमः।।६२४।।

चेलुस्तत्प्रभुपृष्ठतोऽश्रुनयनास्ते चार्तनादं तथा
कुर्वन्तोऽत्र सहस्रशः सहृदया भक्ता निमायिप्रियाः।
किञ्चिन्नापि विचार्य सम्प्रति शची माताऽपि लोकत्रपां
पद्भ्यामेव निमायिनं त्वनुययौ प्राणप्रियस्वात्मजम्।।६२५।।

अन्यस्यां दिशि निःस्पृहः स्वजननीं त्यक्त्वा तु वत्सो यथा
गच्छन्नस्तु तथाहि तस्य जननी वृद्धाऽस्य गौः पृष्ठतः।
धावन्ती रुवती तथैव ननु सा विस्मृत्य देहस्थितिं
सर्वाग्रे रुदती चचाल तु शची माताऽत्र पृष्ठे प्रभोः।।६२६।।

तस्याः क्रन्दनतः पुनर्दलदिवाऽऽसीद्भावकानामुरो
वाष्पैः क्लिन्नमथास्ति सम्प्रति सिताः केशा विकीर्णास्तथा।
भूयः सा चलति स्म पुत्रममता पृष्ठे पतन्ती प्रभोः,
संकोचान्न तया स्म मेलयति तां दृष्टिं स पश्यन्नपि।।६२७।।

वृद्धोऽद्वैतगुरुस्त्वपीह शिशुवच्चोच्चै रुदन्नस्ति, स
श्रुत्वा तादृशरोदनं सहृदयोऽधीरो बभूव प्रभुः।
तत्तस्थौ स चलन् सवाष्पनयनोऽद्वैतं बभाषे गुरुं
(वृद्धं हि व्यवहारिणं श्रयति नाऽधीरः प्रवासोन्मुखः)।।६२८।।

'एवं बालसमो यदा ननु भवानेव त्वियान् सन् गुरु-
र्वृद्धो रोदिषि, तर्हि भक्तसुहृदामाचार्यदेवाऽधुना।
कोऽन्यो धैर्यनिबन्धनं पुनरिदं कर्ता वियुक्तात्मनां?
(द्वैते योगवियोगकस्थितिरहोऽद्वैते तथैकस्थितिः)।।६२९।।

स्नेहः पुत्रसमः सदैव भवतोऽभूदस्ति मय्यात्मनि
त्वेतद्वेद्मि, वियोगतो मम महद्दुःखं तथास्त्युद्गतम्।
तु त्वं सर्वसमर्थकोऽसि नियतं, ते साहसस्यामुखे
दुःखं मद्विरहोद्गतं किमपि नो (कम्पः प्रवाताद् गिरेः?)।।६३०।।

एतस्मात्तु निवर्ततां मम गिरा शान्तिस्थलं साम्प्रतं
मत्सङ्गे चलिता भवान् यदि पुनर्मातुश्च भक्तात्मनाम्।
कर्ता कः परिवीक्षणं? पुरि भवान् संतिष्ठ मद्धेतवे,
स्थानेऽहं भवतोऽर्पयामि करयोर्मात्रा स्वभक्तान् समम्।।६३१।।

एषां संततरक्षकोऽभवदहो! पूर्वं भवानेव कौ,
भारश्चास्ति तथाहि साम्प्रतमपि स्थाता तवैवोपरि।
द्रष्टुं योग्यमथाधिकञ्च मम नो कारुण्यदृश्यं त्विदं,
सर्वैरेव निवर्ततां ननु भवान् भक्तैरमीभिः समम्'।।६३२।।

आज्ञां पालितवान् प्रभोर्गुरुरयं तत्रैव तस्थौ तथाऽऽ-
चार्यो गौरमहाप्रभुं सुमनसं भूमौ विलुट्याऽनमत्।
मूर्ध्नि स्वे प्रभुरस्य पादरजसी वृद्धस्य चारोपयत्
कुर्वन् मातृपदाब्जवन्दनमसौ पुत्रो निमायी पुनः।।६३३।।

भूमावेव विहाय तांश्च पतितान् सर्वांस्तथाग्रे द्रुतं
प्रस्थातुञ्च दधाव गाङ्गनदियाप्रेमावतारोऽमनाः।
नित्यानन्दमुकुन्ददत्तजगदानन्दाश्च दामोदरो
धावन्तेऽपि विसर्जिताः प्रभुमनु प्रेष्ठं समस्तैर्जनैः।।६३४।।

सर्वेऽन्ये पतितास्तथैव पतितास्तत्रैव चासन् जना-
स्त्यक्त्वाऽस्मान् गत एव हि प्रभुरहो!, भक्तैर्यदा लोकितम्।
भूयस्तैरधिका प्रभोरनुगतिः संन्यासिनो नो कृता।
पश्यन्तो भुवि च स्थिताः सुमनसो गङ्गोन्मुखास्तेऽभवन्।।६३५।।

आसीद्दृष्टिपथे रजः प्रभुसतो यावच्च पादोद्गतं
तद्दण्डः सुहृदां करे च जगदानन्दस्य तेषां तथा।
पश्यन्तो ह्यनिमेषभावनयनास्तावद् बभूवुस्तु ते
(गृह्णाति प्रियमेव दूरगमपि ह्यक्षि स्वपार्श्वं न वा)।।६३६।।

एषोऽन्ते च यदा स्वसङ्गिसहितोऽदृश्योऽभवत्पूर्णतः,
कृत्वाग्रे प्रभुमातरं सममसौ भक्तैश्च खिन्नात्मना।
अद्वैतः प्रति चाययौ निजगृहं, श्रीवासभक्तादय-
श्चेलुर्द्वीपनवं विधाय जननीं सङ्गे तथा तत्क्षणम्।।६३७।।

बन्धादत्र महाप्रभुर्द्रुतगतिर्मुक्तो गजेन्द्रो यथा
मत्तो गाङ्गतटेन सम्प्रति चलन्नासीच्च तत्पृष्ठतः।
कुर्वन्नस्ति तथाऽस्य चानुसरणं तेऽप्यत्र नित्यादयः
(स्थानेऽन्तःकरणानि देहिनि तथा चेतन्ति देहे स्थिते)।।६३८।।

सर्वः सर्वत एव सम्प्रति गृहत्यागी विरागी युवाऽऽ-
सीद्भूयोऽल्पवयाश्च सर्वहृदयेऽस्ति त्यागवैराग्ययोः।
अग्निः प्रज्वलितः, स पृच्छति ततस्तेषां समेषां प्रियो
गौरस्त्यागविरागयोस्तु निखिलान् कर्तुं परीक्षां प्रभुः।।६३९।।

'सत्यं सत्यमथाधुना वदत हे! यूयन्तु मां भ्रातरो!
युष्माभिर्मम सङ्गिभिः किमथ किं वस्तु स्वसङ्गे धृतम्।
युष्मभ्यं ननु केन केन च कियद् द्रव्यं प्रदत्तं कियत् ?'
(तन्मार्गव्ययहेतुमेव निखिलो मार्गव्ययस्याऽऽग्रहः)।।६४०।।

उक्तं दीनतयाऽखिलैर्बहु, तथा प्रश्नं निशम्य प्रभोः
'किञ्चिद्वस्तु कथं प्रभो! तव विनाऽऽदेशं स्वसङ्गे क्षमाः।
कामं धर्तुमभूम?, कस्यचिदहोऽपृष्ट्वा भवन्तं पणं
स्वीकर्तुं प्रभवेम सम्प्रति कथं? (नेताऽनुगाऽऽदर्शकः)।।६४१।।

करोतु सम्पूर्णशरीरकस्य नो
निरीक्षणं, नास्ति यथाऽन्यवस्तुकम्।
कस्यापि पार्श्वे, न तथैव विद्यतेऽ,-
स्माकं पणो भोगिमनस्कसंग्रहः'।।६४२।।

तेषां निःस्पृहतायुतञ्च सरलं श्रुत्वोत्तरं तादृशं
निर्व्याजञ्च महाप्रभुस्त्वतिशयं प्रीतोऽभवन्नायकः।
ऊचेऽसौ मुदितां निजां प्रकटयन् 'युष्मत्प्रसन्नोऽस्म्यहं
(विश्वासो भुवि भेदवानिह तथा संन्यासिनां गेहिनाम्)।।६४३।।

युष्माभिर्निजनिःस्पृहापरिचयो दत्तो न बद्ध्वा पणं
सङ्गे, निःस्पृहतैव साम्प्रतमियं तु त्यागिनां भूषणम्।
यः कस्मादपि संग्रहञ्च कुरुते कृत्वा धनेच्छां नरः,
स त्यागी भवितुन्तु कर्हिचिदहो! नैव क्षमो देहिनाम्।।६४४।।

कर्तव्यैव न भोजनस्य भुवने चिन्ताऽत्र तु त्यागिना,
प्रारब्धोपरि तत्तु तेन निखिलं त्याज्यं, नृणां भावि यत्।
प्रारब्धे तदवश्यमेव मिलते, कामं स नाऽऽस्तां पुन-
र्घोरायां मरुबालुकामयभुवि त्वेवात्र गत्वा कथम्।।६४५।।

भाग्ये नास्ति च, तर्हि भोगजगतां मध्येऽपि तेभ्यः स्थितः
स्थाताऽयं ननु वञ्चितो, भुवि नरो यावान् धनी वाऽस्तु नो।
तत्पार्श्वेऽस्तु न किं कियानपि तथाभोज्यः पदार्थः पुन-
स्तदभाग्ये भविता न यत्र दिवसे, तस्मिन्नरोऽयं धनी।।६४६।।

पार्श्वेऽपि स्थितमत्र तं न भविता भोक्तुं पदार्थं क्षमो,
रुग्णोऽसौ भविताऽथवा,ऽशनमयं क्रुद्धोऽथवा त्यक्षति।
कस्मैचिन्ननु, वाऽथ भोक्ष्यति परो लोकस्तथाऽऽगत्य तं
(संबन्धो नियतोऽस्ति दैवविधितो भोक्तुश्च भोज्यस्य कौ)।।६४७।।

सारांशोऽयमथास्ति, नोऽत्र भविता भोगस्य लब्धिः पुन-
र्भाग्यस्यैव दिशा, ततो भुवि कथं कार्यस्तथासंग्रहः ?।
याचित्वा कमपीह, तन्मधुकरी गेहाच्च गेहात्क्षुधि
प्राप्तायां विहिता, तथैव परमो धर्मोऽस्त्ययं त्यागिनः'।।६४८।।

एवं त्यागविरागभक्तिजगतां तत्त्वं त्वसौ बोधयन्
गौराङ्गो निजसङ्गिनां समहृदां प्रेमैकलिप्सात्मनाम्।
ग्रामं सायमथ क्रमेण लभते तत्राऽऽठिसाराऽभिधं
तस्थावेकसुभाग्यविप्रकुलजाऽनन्तामिधस्यौकसि।।६४९।।

जातः कृतार्थः प्रभुदर्शनात्स
स्वकीयगेहे सह सङ्गिभिश्च।
भिक्षादिकं तस्य च कारयित्वा
सेवाऽर्चनं वै विधिवच्चकार।।६५०।।

खाडी-ग्रामसमीपमेष चलितस्तच्छत्रभोगाख्यके
प्रातस्तीर्थविशेषके सहृदयः प्रापत्समं सङ्गिभिः।
एकोऽत्रास्ति शिवस्तथाम्बुनि ततो मग्नोऽम्बुलिङ्गाभिधो
गङ्गाजीपुलिने-(ऽत्र भारतधरा श्रीशैवलिङ्गार्चना)।।६५१।।

गङ्गातोऽस्ति तु दूरमद्य शिवजी च च्छत्रभोगस्तथाऽ-
त्रैवासीत्सुरवाहिनी-त्रिपथगायाः शेषसीमा तदा।
अत्रैव त्रिकपावनी भगवती भागीरथी स्वापगा
धृत्वा धारसहस्ररुपमपरं त्वब्धौ मिलन्ती बभौ।।६५२।।

पारेऽस्मिंश्च बभूव देवसरितः स च्छत्रभोगः पुनः
पीठस्थानक-सुन्दराख्यनगरे, सीमासमाप्तिस्त्वभूत्।
अत्रैवामलगौडदेशविषया, सीमा परस्मिंस्तटे
गङ्गायाः सरितस्तथोत्कलभुवस्तत्रैव चास्तां तदा।।६५३।।

सीमान्ते जय-माजिलाख्यनगरे देशोत्कलस्वामिन-
स्तत्क्रोशत्रयमन्तरं परमभूतत्स्थानयोश्चोभयोः।
श्रीगौडोत्कलदेशयोर्भगवती श्रीरेव भागीरथी
सीमानं समये तदाऽकृत पृथक् (साऽन्या हि गङ्गाधरा)।।६५४।।

अस्त्युक्तं ननु पूर्वमेव, समयो युद्धस्य सोऽभूत्ततो
यस्मिन् प्रश्यतु वर्तते तु नृपयोस्तत्रैव युद्धं ततम्।
मध्ये गौडनृपस्य चोत्कलभुवस्तात्कालिकस्वामिन-
श्चासीत्तत्र भवन् सदापि कलहो रुद्रप्रतापस्य च।।६५५।।

कष्टं तद् बहु गाङ्गपारभवने श्रीमज्जगन्नाथजी-
क्षेत्रे गन्तुकयात्रिणां स्म भवति, श्रीगौडदेशाधिपात्।
आज्ञाऽऽसीदिह कोऽपि गौडविषये नायातु पारात्ततः,
सन्देहं कुरुते स्म वङ्गजनृणां तत्रोत्कलस्याधिपः।।६५६।।

पारं योऽपि च तत्र गौडविषयादायाति तस्यैव ते
कुर्वन्ति स्म निरीक्षणं, यदि भवेत्किञ्चित्तथावस्तुकम्।
तल्लुण्ठन्त्यपि ते स्म, यात्रिजनताऽसौविध्यमासीत्तथा
नाना (केवलभेदबुद्धिदिशयाऽसौविध्यमत्रास्ति कौ)।।६५७।।

एकस्याः परराज्यसीम्नि गमने सर्वत्र युद्धक्षणे
सह्यं कष्टमहो! महद् भुवि महत्सर्वात्मनां जायते।
तद्देशोभयशासकौ ननु सदा तौ शङ्कितौ तिष्ठतः
स्वाभाव्यान्निजशत्रुपक्षजनतो (भावप्रसूतिः स्वहृत्)।।६५८।।

एतस्मादतिरिक्तमत्र जनतां स्मोत्तारयन्त्येव नोऽ-
धृत्वोत्तारणशुल्कमात्मनियमात्ते पारमुत्तारकाः।
तत्रासन् बहवस्तु पारमपरं यातुं पुरीयात्रिणो
रुद्धाः पूर्वत एव (भक्तिरपरा प्रेयोदिदृक्षात्मिका)।।६५९।।

सार्धं तत्र निमायिकप्रभुरपि प्राप्तः स्वकैः सङ्गिभिः,
कुर्वन्नस्ति च कृष्णकीर्तनमतिप्रेम्णा मुकुन्दोऽधुना।
श्रुत्वा तन्मुखतः प्रभुश्च भगवन्नामानि मिष्टानि चाऽऽ-
नन्दे नृत्यति विह्वलो (हि मधुरं स्वप्रेष्ठनामश्रवः)।।६६०।।

तन्नेत्रद्वयतो निमायिसुहृदो निःसृत्य धाराद्वयं
भूयो वर्धयति स्म सागरमिलद्गङ्गाप्रवाहं तथा।
दृष्ट्वैतादृशकस्थितिं प्रभुसतो लोकोत्तरामद्भुतां
तत्रागत्य च पुञ्जिताश्च बहवो घाटस्थितानां नृणाम्।।६६१।।

तद्दर्शनतः श्रीगौरस्य तु सर्वः।
धन्यं मनुते स्माऽऽत्मानञ्च कृतार्थम्।।६६२।।

प्राप्तश्चैवमसौ स्वसङ्गिसहितो घाटेऽम्बुलिङ्गे प्रभुः
सस्नौ, भक्तजने कथां कथितवान् स्थानेऽम्बुलिङ्गात्मनः।
संबन्धे च शिवस्य, तत्प्रभुवचो- 'गङ्गां यदा स्वर्गतः
सर्वादर्श-भगीरथो भुवि महाराजोऽत्र नीत्वाऽऽगतः।।६६३।।

शोकेऽस्या विकलः शिवोऽत्र पतितो नीरे तदा, तत्परं
गङ्गाजी च विवेद शुद्धशिवजीप्रेम, त्वथात्रैव सा।
आगत्यार्चदमुं तथाम्बुनि शिवं च स्थातुमेवाऽऽर्थयत्
(तोषोऽव्यक्ततया स्थितस्य सुतरां व्यक्त्या प्रमातुर्हृदि)।।६६४।।

गङ्गाप्रेमवशाच्छिवोऽत्र कुरुते वासं जले चैव, तल्-
लिङ्गोऽयं ननु कथ्यतेऽत्र जनतामध्येऽम्बुलिङ्गाभिधः।
एतद्दर्शनकोटिजन्मविसरत्पापक्षयो जायते'
(पापं सञ्चितमेति नाशमिह यत्प्रारब्धमीशार्चनम्)।।६६५।।

माहात्म्यञ्च तथा शिवस्य सुहृदां स श्रावयित्वा प्रभु-
र्भूयः प्रेम्णि च विह्वलः सहृदयो नृत्यन्निमायी बभौ।
तत्रैवात्र तथाऽऽययौ च समये तत्प्रान्तशास्ताऽपि सद्-
व्यक्तिः खाँ-पद-रामचन्द्रनृपतिः (सद्व्यक्तिकः सत्पतिः)।।६६६।।

एतत्सूचितमेव तु प्रथमतो—गौडाधिपद्वारतो
ग्रामाणां बहु दीयते स्म नियमो नृभ्यो महद्भ्यस्तथा।
ते खाँ-राज-मजूमदार-पदतो भूयोऽपि सम्मानिता
भूयन्ते स्म च बादशाहदिशया (मानः प्रभावी नृपात्)।।६६७।।

सीमप्रान्तनृपस्तथैव विहितो गौडाधिपाधीनक-
श्रीमद्गौडभुवः क्षणे ननु तदाऽऽसीद्रामचन्द्रश्च खाँ।

खाँ रामः किल शाक्तधर्ममनिता कायस्थजातिस्तथा
(मुक्तिर्मातृकृपाप्तिरेव, तदियं वङ्गादिसत्संस्कृतिः)।।६६८।।

आसीज्जीवनमस्य यद्विषयिणां साधारणानां नृणां
ह्याढ्यानाञ्च तथैव, किन्तु परमासीद्भाग्यशाली जनः।
लब्धं येन महाप्रभोर्बहु मनाक् सेवाक्रियायास्तथा-
सौभाग्यं परमं हि सिध्यति नृणां लोके महत्सङ्गतः।।६६९।।

घाटे चागमनं निशम्य सुहृदो वृत्तं प्रभो, रामखाँ
गौराङ्गप्रभुदर्शनाय शिविकां त्यक्त्वा जगाम द्रुतम्।
कुर्वन् गद्गदकण्ठतः प्रभुरसौ श्रीकृष्णसंकीर्तनं
चानन्दे विकलः स्म रोदिति तदा (प्रेमी सतः कोऽपि ना)।।६७०।।

खाँ रामस्त्वनुभावितः सुमनसस्तेजःप्रभावात्प्रभो-
र्दूरादेव तथा प्रणाममकरोत्सोऽदःपदाम्भोजयोः।
आसीत्किन्तु महाप्रभुर्हि रहितो बाह्यप्रतीतेः, परं
स प्रेमामृतपानमत्र विदधच्चावृत्य नेत्रे स्वके।।६७१।।

कस्याप्यत्र नमस्कृतेर्ननु नतेर्बोधोऽधुना किं प्रभोः ?,
कुर्वन्तस्तु सचेतनं प्रभुममी तत्सङ्गिनोऽस्मै ददुः।
खाँरामस्य नृपस्य तत्परिचयं, लब्ध्वा जगाद प्रभु-
र्गौरोऽमुष्य, निजां मुदं प्रकटयन् (सर्वं मधु प्रेमिणः)।।६७२।।

'आ! नाम किं वा भवतस्त्वथैव
स्थानेऽत्र वै खाँ-नृप-रामचन्द्रः ?।
संदर्शनं तद्भवतस्त्वकस्मा-
ज्जातं प्रियं' (स्वध्वनि हि प्रियाप्तिः)।।६७३।।

ऊचे बद्धकरद्वयाञ्जलिरयं खाँरामचन्द्रः 'प्रभो!
व्यासक्तं नरमाह्वयन्ति विषयेऽमुं कामिनं त्वेव माम्।
लोकाः खाँयुत-रामचन्द्र-पदतो, न त्वद्य कर्तुं क्षमः
सौभाग्यस्य निजस्य शंसन-(महो! काले स्वतोऽर्कोदयः)।।६७४।।

मादृक्पामरगर्तलिप्तविषयिक्षुद्रस्य संसारिणो
दैवाद्यद्भवदीयदर्शनमभू,न्नष्टं भवद्दर्शनात्।

पापं मेऽखिलमद्य, सम्प्रति भवानाज्ञा भवेद्याऽपि मे
योग्या, तां दिशतु द्रुतं' (प्रभुवचोभक्तिर्हि दासात्मता)।।६७५।।

तेनोक्तं-'प्रिय! रामचन्द्र! मिलितुं प्राणप्रियेणात्मनः
सम्प्रत्यस्मि तथातुरः, प्रियपुरीं गत्वा निजं जीवनम्।
कृत्वा हृद्रमणस्य दर्शनमहं कुर्यां यथा सार्थकं,
चोद्योगं कुरु वै तथैव (सुकृतं प्रेष्ठात्मनोर्मेलनम्)।।६७६।।

घाटाच्च नः सम्प्रति तत्र पारे
कुरु प्रबन्धन्तु तथाऽऽपनस्य।
यथा भवेम प्रभवोऽत्र गङ्गा-
पारन्तु गन्तुं हि तदेव कुर्याः'।।६७७।।

ऊचे बद्धकरस्तथाहि सुहृदं खाँ रामचन्द्रः 'प्रभो!
पारोत्तारणमत्र युद्धसमये गौडोद्भवानां नृणाम्।
कर्मेदं महदेव चास्ति कठिनं, चाज्ञा नृपान्मत्कृते
पारे योऽपि (तथैव) कोऽपि पुरुषो नोत्तारणीयोऽधुना।।६७८।।

भूयोऽपि त्वतुलं भवन्तमधुना ह्युत्तारयिष्याम्यहं
पारं प्राणपणैरपीह निजकैः (सत्प्राणयोगः क्वचित्)।
अत्रैवाद्य भवांस्तथा निवसतु स्थाने च कृत्वा कृपां,
श्वः प्रातो भवतस्तु पारगमने कर्ता प्रबन्धं ध्रुवम्'।।६७९।।

स्वीचक्रे प्रभुरेष साम्प्रतवचः खाँ-रामचन्द्रस्य तद्
गत्वा सम्प्रति छत्रभोगनगरं तत्रैकविप्रस्य च।
गेहे भाग्यवतो निवासमकरोत्सार्धं स्वकैः सङ्गिभि-
श्चारात्रिं प्रियकृष्णकीर्तनमयं कुर्वन्निमायी त्वभूत्।।६८०।।

श्रीसंकीर्तनसुन्दरामृतरवात्सम्पूर्णकं तत्स्थलं
जातं सम्प्रति पावनञ्च परमं, श्रुत्योरभूद्गोचरः।
स्थाने सर्वत एव तत्र भगवन्नाम्नस्तथैव ध्वनिः
(श्रीवृन्दाविपिनायतेऽखिलमहो! चैतन्यमुख्ये जने)।।६८१।।

तत्राप्ता बहु छत्रभोगजनता श्रोतुं प्रभोः कीर्तनं,
कुर्वन्तः करतालिकां सुमनसा तेऽप्यत्र संकीर्तनम्।

प्रेम्णाऽभुश्च, तथाहि धन्यमकरोत् खाँ-रामचन्द्रोऽपि स
श्रीसंकीर्तनकं रसामृतमिदं पीत्वा निजं जीवनम्।।६८२।।

एवञ्चानिशमत्र कीर्तनाऽऽनन्दे रात्रिमिमां तथैव सः।
गौरो यापितवान् (प्रियप्रियः श्रीचैतन्यनिमायिभारती)।।६८३।।



# महाप्रभोः प्रेमोन्मादस्तथा नित्यानन्दजीद्वारा दण्डभङ्गः

२६ रसने! रसय रसायनकृष्णम् ।
भवाटवीनानादुर्गमपथमध्ये पतितो जीवः
मेरुशिखरजलनिधिगभीरतलसुरपुरपातालादिः ।
आशापाशशतैर्बद्धोऽयं विचरंस्तस्मिंस्तस्मिन्
नाप्नोति क्वचिदपि निजनिखिलाऽऽपल्लोपनमत्यन्तम् ।
भगवन्नामरसायनमखिलं तुष्टिपुष्टितृडपायम्
आतपवारकनेत्राह्लादकचेतोमोदकघन इव ।।

ग्रामे रात्रिमतीत्य तां प्रियहरिः स च्छत्रभोगे प्रभुः ।
प्रातोऽभून्निजनित्यकृत्यविधितो गौरो निवृत्तस्तथा ।
खाँ-रामेण तदैव साम्प्रतसमाचारः प्रभोः प्रेषितः-
पारं कर्तुमथ प्रभोः सुमनसो घाटेऽस्ति नौः प्रस्तुता ।।६८४ ।।

लब्धेऽत्रैव महाप्रभुः सह समाचारे स्वकैः सङ्गिभि-
र्गत्वाऽयं निषसाद नावि च, ततो नौः सारिता नाविकैः ।
आनन्दाद्धरिकीर्तनं प्रभुरयं कुर्वन् बभौ, स्वध्वनिं
भक्तास्तेऽपि च तद्ध्वनौ सुमनसः सम्मेलयन्ति स्म तम् ।।६८५ ।।

तत्खाऽऽप्तध्वनिकप्रतिध्वनिरथ स्पष्टं जले शुश्रुवे
सर्वाभ्यश्च स एव सम्प्रति हरेर्दिग्भ्यो ध्वनिः श्रूयते ।
गातुं सोऽथ मुकुन्ददत्तमवदत्संकीर्तनश्रीपदं,
मिष्टेन स्वरवेण गायति सखा दत्तो मुकुन्दः प्रभोः- ।।६८६ ।।

३०. हरये नम इति यदुकुलभूषण! ते नम इति गायामः ।
कृष्ण! दयित! गोपाल! गोविन्द! राम! श्रीमधुसूदन!
एतन्मधुरमधुरतरनामभिराह्वयामि हे प्रियतम! ।
निद्राशान्तिसुखं तल्लोचनमनसोः कथमिह भुवने ?
याभ्यां दूरे मधुर! मुरारे! योगस्तव पथिकानाम् ।।

सम्मेल्याऽत्र मुकुन्दतालमुकुरे तालं तथाऽन्येऽपि ते
कुर्वन्तश्च बभूवुरुत्तमपदस्यैवास्य संकीर्तनम् ।

उत्थाय प्रभुरेष नृत्यममनाश्चावेशमागत्य तनू-
नाव्येवाद्य चकार (जीवधरणी पाथोनिधौ नौमयी)।।६८७।।

याताऽसन्तुलिता तथाहि सहने नृत्यस्य वेगस्य नौः,
सम्भ्रान्ता निखिलाश्च नाविकजना-मङ्क्तैव नौर्नः परम्।
एवं कीर्तनमत्तनृत्यविधिना 'संन्यासि-बाबा!' वच-
स्तेषां 'तूपरि नो दयस्व (करुणावृत्तिर्हि संन्यासिता)।।६८८।।

नृत्यं करोतु परपारमितो यथेच्छं
गत्वा हि संसृतिनदीविकरालमध्यात्।
नो नौर्गमिष्यति किमद्य तथाहि पारं,
मध्येऽथवैव ननु मङ्क्ष्यति नृत्यतस्त्वत्?'।।६८९।।

ईषत्क्षोभयुताश्च दैन्यवचनैरासंस्तथाप्रार्थनां
कुर्वन्तो ननु नाविकाः, परमयं श्रोताऽस्ति कस्य प्रभुः।
तेषामश्रुतवद् विधाय वचनं, श्रीकृष्णसंकीर्तनं
कुर्वन्नेव निरन्तरं समभवत् (कृष्णो निमायिप्रभुः)।।६९०।।

आश्चर्यं महदेव तर्हि विपुलं तन्नाविकानामभून्-
नो वार्तामपि न शृणोति यदयं गौराङ्गसंन्यासिकः।
भूत्वा प्रेम्णि च विह्वलस्त्वविरतं नृत्यत्यसौ पूर्ववत्-
(श्रीचैतन्यनिमायिकावतरणं सत्प्रेमसत्त्वाऽसनम्)।।६९१।।

ईषद्भीतिनिदर्शनेन जगदुः कातर्यवैवश्ययो-
स्ते भूयः प्रभुकं स्वरे 'तु मनुतां वाचं महाराज! नः।
प्लुत्वोत्प्लुत्य तु नावि नृत्यकरणं चैवं पुनर्नोचितं
(मञ्चे नृत्यति नर्तको ननु तरीमञ्चे तु कोऽप्यद्भुतः)।।६९२।।

किं नो पश्यति ? तत्र घोरविपिनं पारे विशालं, पुनः
क्रूरास्तत्र वृका वसन्ति बहवो वन्यास्तथा सूकराः।
धावन्तोऽत्र निशम्य सम्प्रति तथाऽऽयास्यन्ति ते च स्वरं,
नक्राः सन्ति जलान्तरे च मकराः (सर्वत्र सद्भीतिदाः)।।६९३।।

नौष्वारुह्य परिभ्रमन्ति परितो नद्यां तथा दस्यवो
पारं यान्तमितो जनं यमपि ते पश्यन्ति लुण्ठन्ति तम्।

स्वस्थाने कृपया निषीदतु भवा,न्नोऽपि स्वसङ्गेन न
स्थाने निक्षिपतां विपत्तिकगले' (स्यान्निर्भयं स्वस्थलम्)।।६६४।।

तेषां तत्तु निशम्य कातरवचो भक्ता मुकुन्दादयो
रुद्धाः कीर्तनगाननृत्यकरणात्कामं, कदा तु प्रभुः।
स्याद्रुद्धस्तु, तथैव कीर्तनमहो! कुर्वन् स एवाऽभव,-
त्कर्तुं चेतरसङ्गिनोऽपि कुरुते ह्युत्साहितान् कीर्तनम्।।६६५।।

श्रुत्वा ते निखिला महाप्रभुवचश्चोत्साहपूर्णं पुनः
कुर्वन्तस्त्वभवन् सुकीर्तनमहो! धन्यं तथैतादृशम्।
कृष्णप्रेम, भवेन्न यन्मुदि पुनश्चिन्ता त्वसूनामपि
(स्थाने ह्यमृतसागरे भयमहो! स्यात्कीदृशं मज्जनात्)।।६६६।।

आधिव्याधिसमस्तभीतिजगतः श्रीकृष्णनामाऽवनौ
जीवान्मोचयते तु, तस्य पुरतो भीतिः पुनः कीदृशी?।
भक्तानां वृकदस्युनक्रमकरा,च्छ्रीरामनाम्नो बलात्
संसारे त्वमृतायते विषमपि (श्रीनाम सर्वाऽभयम्)।।६६७।।

त्यक्त्वा तादृशहिंसकोऽपि भुवने जन्तुः स्वभावं निजं
कुर्वन् प्रेम च दृश्यते भगवतो नाम्नः प्रभावात्तथा।
एवं कीर्तनलीनमेतमधुना दृष्ट्वाऽविदुर्नाविकाः-
'प्रेमी कश्चिदसौ महांस्तु पुरुषः प्रायो ह्यसाधारणः।।६६८।।

व्यर्थं कीर्तनरोधनं सुमनसो,ऽसौ राजमानः स्थले
यस्मिन्, किञ्चिदमङ्गलं तु विधिकं स्यान्नैव तत्रावनौ'।
मौनं ते त्विदमेव सम्प्रति गताः संचिन्त्य सर्वे तथा
भूयः श्रीप्रभुमत्र कीर्तनकृतेर्नो वारयाञ्चक्रिरे।।६६९।।

कुर्वन् कीर्तनमस्ति पूर्ववदहो! गङ्गाप्रवाहेऽश्रुणो
धारां स्वस्य च मेलयन् प्रभुरयं प्रेमैकमात्राश्रयः।
एतस्यैव सुकीर्तनस्य च समारोहे प्रयागाख्यके
घाटे नौरलगत् (सुकीर्तनहृदः प्रायः प्रयागः पुरः)।।७००।।

चक्रे स्नानमसौ स्वसङ्गिसहितो नावोऽवरुह्य प्रभु-
र्घाटेऽस्मिन्, पुरतः ससार च पुनस्त्यक्त्वा च गौडावनीम्।

सम्प्रत्युत्कलदेशसीम्नि कृतवान् गौरः प्रवेशं तथा
ब्रूते सङ्गिजनान् (प्रियस्य विषयः प्रीणाति हि प्रेमिणम्)।।७०१

'सर्वोऽत्रैव भवांश्च तिष्ठतु तथा, यास्यामि भिक्षाकृते
ह्येकाकी त्वहमद्य' तत्प्रभुवचः कोऽमन्तुमेव क्षमः।
सर्वैः स्वीकृतमेतदत्र वचनं, स्वस्याम्बराद्रञ्जिताद्
भिक्षां याचितुमेष तर्हि चलितो निर्माय झोलीं प्रभुः।।७०२।।

अस्त्युक्तं ननु पूर्वमेव सुतरां—वङ्गे तथाह्युत्कले
भिक्षायां जनतासु नास्ति विषये पक्वान्नदानप्रथा।
शिक्षन्तेऽप्यधुना तु केऽपि गृहिणः, सिद्धान्नभिक्षां द्विजा
भट्टाचार्यमुखास्तथाहि ददते (संन्यासिनां का रुचिः?)।।७०३।।

भिक्षायान्तु पुरा जनाः स्म ददतेऽन्नं शुष्कमेव, प्रभोः
झोल्यां सम्प्रति चार्पयन्ति विविधं ग्रामस्य तु स्त्रीनराः।
सस्नेहं चिपटान्नतण्डुलदलादीनि स्वगेहाद् द्रुतं
(दातारो भुवने भवन्ति सततं प्राप्ते निमाय्यर्थिनि)।।७०४।।

द्वारेऽयं गृहिणोऽपि यस्य सुमना गत्वा करोति प्रभुः
शब्दं गौरहरिर्निगद्य मधुरं 'नारायण! श्रीहरे!'।
नीत्वाऽन्नं बहु वै स एव तु गृही चायाति धावन् द्रुतं
तस्मै दातु-(महो! निमायियतिको ह्याकारतो बुध्यते) ।।७०५।।

लावण्यञ्च महाप्रभोः सुमनसो रूपं विलोक्याद्भुतं
सर्वे स्त्रीपुरुषा भवन्ति चकिताः, पश्यन्त एव प्रभुम्।
तिष्ठन्त्यत्र तथा निमेषरहितास्तावच्च तस्याकृता-
वस्त्याकर्षणमेकवारमपि यश्चक्रे तु तद्दर्शनम्।।७०६।।

स्वं सर्वस्वमहो! स एव सुहृदो गौरस्य तस्योपरि
स्थाने चार्पयितुं त्वियेष सहसा, यच्चापि वस्तूत्तमम्।
आसीद्यस्य गृहे तदेव तरसा नीत्वाऽस्य झोल्यां प्रभो-
र्दत्ते,ऽल्पक्षण एव सम्प्रति तथा पूर्तिं गता झोलिका।।७०७।।

वैवश्याच्च निवर्तिता बहुनृणां भिक्षा, ततोऽपि प्रभो-
र्जातं दुःखमिवाल्पकं, बहिरसौ झोलीं निजां पूरिताम्।

नीत्वाऽऽप्तो निजभक्तवृन्दनिकरे, पूर्णां तथा झोलिकां
दृष्ट्वा नित्ययतिर्जहास (सुमनःसर्वक्रियाऽऽनन्ददा)।।७०८।।

प्रभोः सुमनसो झोलीं गृहीत्वा
पपाच जगदानन्दस्तथान्ते।
अवाप च महान्तं तं प्रसादं
स्थितः सह मुदा सङ्गे तु सर्वः।।७०९।।

भुक्त्वाऽग्रेऽचलदेष, तत्करगृहं पश्यत्यथाग्रेसृतः
श्रीमन्नाथपुरीन्तु यायिनि पथि (स्थानेऽवरोधः सताम्)।
यत्रासीत्प्रतियात्रिणां नियमितं शुल्कञ्च राजाज्ञया
किञ्चिद्बद्धमहो! ततोऽग्रगमने यात्री तथासीत्क्षमः।।७१०।।

तच्छुल्कग्रहणाधिकारिपुरुषाः शुल्कग्रहे यात्रितः
कुर्वन्ति स्म कठोरतामतिशयां काले तदानीं तथा।
यत्किञ्चिद्ग्रहणं विना नियमितद्रव्यस्य ते यात्रिणं
यानेऽग्रे नहि तत्यजु-(र्हि करतोऽयं कर्मलोको नृणाम्)।।७११।।

साधुभ्योऽपि तथा करग्रहणकं (पर्यन्तमत्रेदकं)
कुर्वन्ति स्म च ते निमायिपरिषत्संन्यासिपर्यन्ततः।
तेऽरुन्धन् गमनात्पुरः प्रभुमपि 'त्वं यातुमग्रे क्षमो
नो (जल्पन्ति निमायिनं) नियमितद्रव्यस्य दानं विना'।।७१२।।

वाक्येऽस्मिञ्छ्रुत एव स प्रभुरहो! कुर्वन्नभूद्रोदनं
भूमिं क्लेदयति स्म चाश्रु सततं निःसृत्य दृग्भ्यां प्रभोः।
'द्रष्टा त्वां किमहं न? हे! मम जगन्नाथ! द्रुतं हा! प्रभो!
किं त्वद्दर्शनमस्य नाथ! भविता?' (सद्रूपमात्मप्रियम्)।।७१३।।

उक्त्वैवं प्रभुरेष चार्तवचनं रोदि,त्यमुष्येदकं
चेतोदारकतन्निमायिकरुणं श्रुत्वा तथाक्रन्दनम्।
अश्माभं त्वधिकारिणोऽपि हृदयं दुद्राव तन्निष्ठुरं
(भक्तेषु प्रथमस्तथाहि गणितो ह्यार्तः स्वयं श्रीमता)।।७१४।।

'किं साधारणमानवस्य भवितुं शक्नोति दृग्भ्यामियद्-
वाष्पाणां सरणं तु सम्भव,मसौ नूनं महामानवः।

वार्यो नास्ति निमायिसन्निधिजगन्नाथाध्वयानादयं'
तत्संचिन्त्य स शुल्कसञ्चयकरः पार्श्वेऽधिकारी प्रभोः।।७१५।।

'सन्यासि–बाबा! किमियानधीरः
(पप्रच्छ गत्वा) भवसीह भोस्त्वम्?।
कियज्जनाः सन्ति तवात्र सङ्गे
यूयं कियन्तो ननु सङ्गिनः स्थ?'।।७१६।।

ब्रूते त्वेष रुदंश्च दैन्यसहितश्चात्यन्तमेव प्रभुः
'संसारे तु निमायिनो मम भवेत्सङ्गी तथैवात्र कः?।
संन्यासी च तथास्मि सम्प्रति गृहत्यागी विरागी त्वहं,
सङ्गी कोऽपि न विद्यते मम परो, वर्तेऽपरस्त्वेव तत्'।।७१७।।

तादृशं प्रभोर्निशम्य चाधिकारिवाक्यमत्र।
'अस्तु यातु भो! भवांस्तु' (संग्रही करं ददाति)।।७१८।।

श्रुत्वा तस्य वचः प्रभुश्च चलितोऽग्रेऽसौ चलित्वा मनाग्
दूरं, रोदिति तन्निधाय निजके शीर्षञ्च जानुद्वये।
जिज्ञासामधिकारिणो विदधते श्रुत्वा प्रभो रोदनं
तद्धेतोर्यतिनित्यभक्तनिकरे (साधुप्रमा सङ्गिनः)।।७१९।।

वृत्तं निगद्य निखिलं तदथाह नित्य-
'श्चैते वयं प्रभुकसङ्गिचतुष्टयं स्मः।
अस्मान् विना स नहि यास्यति केवल'स्तत्
सर्वानिमानपि मुमोच तथाधिकारी।।७२०।।

एवं तेष्वधिकारिणाञ्च हृदये शुल्कग्रहासङ्गिनां
श्रीचैतन्यमहाप्रभुः प्रकटयन् स्वप्रेमभावं तथा।
आप्तस्तैर्निजसङ्गिभिश्च सहितोऽयं स्वर्णरेखानदी-
तीरे (स्वर्णसमप्रियाप्तिमनसः स्वर्णाभसर्वक्षणः)।।७२१।।

किञ्चिद् दूरमसौ तथाहि सुमना नित्यप्रतीक्षामना
गत्वा तु प्रभुजी स्थितोऽत्र, जगदानन्दादयः पृष्ठतः।
आयान्ति स्म पुनः, करेऽस्ति जगदानन्दस्य दण्डः प्रभो,-
र्ब्रूते नित्ययतिप्रभुं जगदथ 'श्रीपाद'! संबोधयन्।।७२२।।

'दण्डं भवानत्र महाप्रभोश्चेत्
साधुप्रकारेण भवेत्तु धृत्वा।
ग्रामात्तदाऽहञ्च विधाय भिक्षा-
मायामि' (भिक्षा भुवि साधुवृत्तिः)।।७२३।।

ऊचे नित्ययतिश्च 'शोभनमिदं, दण्डं त्वहं रक्षिता
नूनं चाधिकसावधानमनसा,ऽऽनन्देन गत्वा समम्।
कृत्वाऽऽयातु च भिक्षणं' यतिवरो नित्यस्तथोक्त्वा ददौ
हस्ताभ्यां जगतश्च दण्डमधुना, यातो जगद् भिक्षितुम्।।७२४।।

नित्येनात्र तु चिन्तितं-'प्रभुकृते जञ्जालमेवास्त्ययं
दण्डः, प्रेम्णि न यस्य तिष्ठति पुनर्यावत्तनोस्त्वात्मनः।
ध्यानं, काममुष्य किञ्च भविता दण्डस्तथाऽपेक्षितः?
स्यादेकोऽस्य च रक्षणे परजनो (दण्डः किमस्यात्मनः)।।७२५।।

सामान्यस्थितिशालिनान्तु भुवने दण्डस्य संन्यासिनां
शास्त्रेष्वत्र विधानमस्ति, सुमनाः प्रेम्णोऽवतारस्त्वयम्।
द्वाभ्यामेव परो निमायिहृदयस्त्वास्ते निषेधाद्विधे-
र्दण्डस्यास्य तु रक्षणं ननु कृते व्यर्थं निमाय्यात्मनः'।।६२६।।

एवं विचिन्त्य प्रभुनित्यनन्द-
स्तद्दण्डमध्यादकृत त्रिखण्डम्।
तदास तत्रैव च खण्डयित्वा
(सर्वं त्वसारं ह्यवधूतवृत्तौ)।।७२७।।

भिक्षामत्र विधाय तत्र जगदानन्दो निवृत्तस्त्वसौ
पार्श्वे नित्ययतेश्च दण्डमधुनाऽदृष्ट्वा च पप्रच्छ तम्।
आश्चर्येण समन्तु 'कुत्र भवता श्रीपाद! दण्डो धृतो?'
गाम्भीर्येण समं मनाग् यतिरयं पश्यन्नितो वै ततः।।७२८।।

तथाऽवधूतनित्यजी शनैर्ददौ तदुत्तरम्।
'भवेदथात्र कुत्रचित्स्थितं स्वयन्तु दृश्यताम्'।।७२९।।

दृष्टं तेन तु—खण्डितोऽस्ति पतितो दण्डस्तथाऽन्यत्र स
स्थाने, खण्डितदण्डमेष जगदानन्दो विलोक्याधिकम्।

बिभ्यत्साम्प्रतमाह 'किन्नु भवता श्रीपाद! चैतत्कृतं?
श्रीचैतन्यकभारतीप्रभुयतेर्दण्डः पुनः खण्डितः ?।।७३०।।

आसीत्तेन तु मेऽवधानसहितं दत्तस्तथा रक्षितुं,
दण्डं (नो भवतोचितं कृतमिदं) तं खण्डयित्वा प्रभोः।
गत्वा सम्प्रति सन्निमायिमनसं तं कि वदिष्याम्यहं?'
(श्रद्धास्नेहममत्वभावजगतां विश्वास एवाश्रयः)।।७३१।।

उक्त्वेदं बहु चैव दुःखित इवाऽऽनन्दोऽत्र भूत्वा, पुन-
र्नीत्वा तं ननु भग्नदण्डमधुना प्राप प्रभोः सन्निधिम्।
चोचे हार्दिकदुःखकं प्रकटयन् क्षीणस्वरेऽत्यन्तकं
(कातर्यं गिरि सत्त्वभावजनितं कारुण्यलब्ध्यै सतः)।।७३२।।

'श्रीनित्यस्य करे प्रदाय सुमनोदण्डं विधातुं प्रभो!
भिक्षामासमहं गतश्च निकटग्रामे, परं तावता।
दण्डं खण्डितवानसौ, किमपि मे नात्रापराधो, यदि
ज्ञातं स्यादिदकं, प्रदाय यतये याताऽस्मि नो कर्हिचित्'।।७३३।।

एतस्मिन् क्षण एव तत्र च समं प्राप्तो मुकुन्दादिभिः
श्रीनित्योऽपि, तदा प्रभुः प्रकटयंस्तं प्रेमरोषं जगौ।
'श्रीपादाऽखिलकर्म चात्रभवतश्चापल्यपूर्णं सदै-
वात्यन्तं भवति (प्रमाणमपरं मर्त्येऽवधूतोऽमरः)।।७३४।।

कामं लब्धमहो! विधाय भवतः किं दण्डभङ्गं, परं
भ्रष्टं मां निजधर्मतो ननु भवान् कर्तुं ध्रुवं चेष्टते।
एकोऽत्रास्ति तु दण्ड एव परमं संन्यासिपार्श्वे धनं,
भग्नोऽसौ भवतोद्धतप्रकृतितः स्वस्य (स्वभावो भवः)।।७३५।।

सम्प्रति जल्पतु सार्धं किं भवताऽहमुषित्वा।
पालयिता निजधर्मं?' (धर्मिणि नश्यति धर्मः?)।।७३६।।

वार्तान्चागणयन् यतिः कथयते हासस्य भावे मनाग्
'वंशस्यैव पुनस्तु सोऽभवदहो! दण्डो, विधत्तां भवान्।
तत्स्थाने निजदण्डपात्रमपरं मां, चोचितं बोधतां
दण्डं यं त्वपि तं ददातु ननु मे' (दण्ड्योऽवधूतोऽप्यसन्)।।७३७।।

'आसीत्स (प्रभुणा तथोक्तमपरं) वंशस्य दण्डः कथं?,
तत्रासीन्निखिलस्य साम्प्रतमधिष्ठानं सुरस्यात्मनाम्।
जाने नोऽत्र, भवांस्तु बोधति पुनः किं मां, तथा स्वस्थिते-
र्ज्ञानं भावि ममैव (जीवहृदयं स्रोतोऽनुभूतेः स्वयम्)।।७३८।।

सम्प्राप्तं त्विदमेव सम्प्रति भवत्सङ्गस्थितेर्मे फलं,
दण्डोऽभूदपरस्तु, सोऽपि भवताऽनन्यात्मना नाशितः।
जाने न त्वधुना करिष्यति भवान्नित्यावधूतोऽत्र किं?,
युष्माभिः सह तन्न यामि (हि सता गन्तव्यमेकाकिना)।।७३९।।

अग्रेऽथ भवन्तो गच्छन्त्वथवा तु।
मां यान्तमथाग्रे जह्युः पथिकं वा'।।७४०।।

अस्मिन् दत्तमुकुन्दकः कथयति 'त्वग्रे भवानेव हे!
प्रेमात्मंश्चलतु प्रभो!' कृतमियच्छ्रोतव्यमासीदतः।
धावित्वा प्रभुरग्रतश्च चलितः, प्राप्तश्च धावंस्तथा
स्थानं नाम जलेश्वरं (सुमनसां मार्गे सदैवेश्वरः)।।७४१।।

तत्रैकं शिवमन्दिरं स्म जयति स्थाने विशालं तथा
श्रीमन्नामजलेश्वरं, श्रुतिविदः श्रद्धालवो ब्राह्मणाः।
सामग्रीभिरथार्चनस्य बहवो नैवेद्यधूपादिभिः
कुर्वन्ति स्म शिवार्चनञ्च समये तस्मिंश्च तन्मन्दिरे।।७४२।।

उच्चैः कोऽपि मधुस्वरेण कुरुते सुस्तोत्रपाठं तथा
कश्चित्साम्प्रतमाशुतोषशिवजीरुद्राभिषेकं पुनः।
योगक्षेमनिमित्तमेव परमं स्वं स्तौति कश्चिच्छिवं
वाद्यन्ते बहवश्च वाद्यनिवहा (वाद्यं श्रवोहृत्प्रियम्)।।७४३।।

सन्तुष्टोऽधिकमेव तत्प्रभुरभूद्दृष्ट्वाऽर्चनाकृत्यकं,
श्रीनित्यं प्रति दण्डभङ्गकरणात्क्रोधः कृतोऽल्पश्च यः।
यातो दर्शनमात्रतः शिवमहादेवस्य चैवास्य स,
ह्युच्चैः श्रीशिवकीर्तनं स्म कुरुते चानन्दमग्नः प्रभुः-।।७४४।।

३१. शिव! शिव! शम्भो! हर! हर! शङ्कर!
शशिशेखर! गङ्गाधर! सुरवर! महादेव! करुणाकर!
आशुतोष! भवचक्रविनाशन! पापतापभयनाशन!'।

श्रीचैतन्यमहाप्रभुरधुना भावावेशगतोऽयम्
नर्तित्वा कूर्दित्वा भूयो गायति शिवमयपदकम्।।

दृष्ट्वा नृत्यममुष्य विस्मययुताः सर्वेऽधुना दर्शका-
स्तस्थुस्तं परिवृत्य चात्र परितः, सर्वप्रतीतिस्तदा।
भोलाशङ्कर एव सम्प्रति शिवः संन्यासिवेषे स्वयं
मन्ये ताण्डवनृत्यमत्र कुरुते (चैतन्यमात्रं शिवः)।।७४५।।

आस्तां तूपरि चौत्थितौ सुमनसो हस्तावुभौ श्रीप्रभो-
रुन्मादे विकलश्च मत्तसदृशः प्रेम्णस्तथोच्चैरयम्।
प्लुत्वोत्प्लुत्य ननर्त, तस्य सुहृदः स्वेदप्रवाहोऽसर-
त्सम्पूर्णाद्वपुषो (हि सात्त्विकतनोः स्वेदोद्गमोऽलौकिकः)।।७४६।।

वृष्टिः श्रावणभाद्रयोरिव दृशोरासीद्भवन्त्यश्रुणो,
विस्मृत्य स्वशरीरबोधमधुनाऽभ्राम्यत्स यन्त्रोपमः।
श्रीनित्यप्रभृतिस्तदैव सुहृदो भक्तोऽपि तत्पृष्ठतः
प्राप्तः श्रीशिवमन्दिरे (शिवदिशा साध्नोति शं सौहृदम्)।।७४७।।

नृत्यन्तं प्रभुकं विलोक्य सुहृदं संमिल्य तेऽपि प्रभो-
स्ताले तालमथ स्वरे स्वरमहो! नृत्यन्ति गायन्ति च।
आनन्दस्त्वमुनाऽप्यनेकगुणितो यातोऽधिकश्च प्रभोः
सीमा नास्ति सुखस्य तस्य (सुहृदां सौख्यं सदैवाव्ययम्)।।७४८।।

एवं तेऽखिलदर्शकाः प्रभुहृदो यातास्त्ववाचोऽधुना
दृष्ट्वाऽपूर्वदशा,मनेन विधिना संकीर्तनानन्तरम्।
प्रेम्णाऽऽलिङ्गदसौ महाप्रभुरहो! श्रीपादनित्याग्रजं
तस्मिन् स्नेहमुवाच चाथ वितरन् (प्रेमी विचित्रो जनः)।।७४९।।

'मे श्रीपाद! भवानभिन्नहृदयो, यच्चापि कर्ता भवान्,
कल्याणस्य निमित्तमेव मम तत्कर्ता, तदानीं मया।
भावावेशगतेन यच्च कथितं किञ्चिद्भवेत्तद्भवान्-
न श्रीपाद! तथाह्यसाधु मनुता-(मन्ते निमायी महान्)।।७५०।।

संसारे भवतोऽधिको मम भवेदेव प्रियः कः परो?
भूमावस्ति गुरुर्भवान्मम पिता माता निमायी सखा।

यः श्रीपाद! भवत्प्रियोऽस्ति भुवनेऽसावेव मेऽपि प्रियो,
नोक्तं मे मनुतामसाधु किमपि' (क्षम्यः शरण्यो जनः)।।७५१।।

श्रुत्वा स्वस्य कृते तथास्तुतिगिरो गौरप्रभुश्रीमुखा-
च्छ्रीनित्योऽल्पमभूत्तु लज्जित इव, प्रोचे च सङ्कोचतः।
'आस्ते सर्वसमर्थ इच्छतु भवान् यद्यस्य तद्भाषतां
यावद् वाञ्छतु यं विधातुमुपरि स्थाने विधत्तां तथा।।७५२।।

सम्मानं निजसेवकाय तु भवान् स्वस्माद् ददानोऽधिकं
(लोकैर्दृष्ट-)मभूत्सदैव, भवतो रीतिः पुराणी त्वियम्'।
विश्रामो विहितोऽखिलैश्च वचने प्रेम्णोऽत्र याते तथा
वासस्तन्निशि तत्र चैव (वयसामेकत्र वासस्तरौ)।।७५३।।

अग्रेऽसावचलच्च नित्यविधितः प्रातर्निवृत्तः प्रभु-
स्तत्प्रेमासवमग्न एव सुमना मत्तेभतुल्योऽधुना।
कुर्वन् भक्तजनैः कुतूहलमहो! नृत्यन्निमायी पुरो
यन्नासीत्पथि तन्निमायिसुजनैः संकूर्दमानः समम्।।७५४।।

मध्ये चैव पथो मिमेल सुहृदः साधुस्तथैकः, परं
वामाध्वा, स विलोक्य तादृशदशां प्रेम्णस्तथोच्चां प्रभोः।
'कोऽप्येषोऽपि च साधुरस्ति (बुबुधे-)द्धा वाममार्गी,' तत-
श्चैतन्यं स तु वाममार्गविधितो ब्रूते प्रणम्य प्रभुम्-।।७५५।।

'ब्रूहि कुतश्च कुतश्चाऽऽयासि? दिनाद्बहु जातम्।
अद्य तु दर्शनमत्र' (श्रीर्हि दृशोः प्रियरूपम्)।।७५६।।

श्रीचैतन्यमहाप्रभुः कथयते साकं विनोदेन चा'ऽऽ-
गच्छामि त्वित एव, किन्तु भवतः स्थानात्कुतो ह्यागमः?।
वृत्तं श्रावय किञ्चिदत्र तु, तथाऽऽनन्दः पुनर्भैरवी-
चक्रे तत्र यथेच्छमुत्पतति न?' (स्थाने हि वस्तु प्रियम्)।।७५७।।

शब्दं तादृशवाममार्गिरुचितं साङ्केतिकं भैरवी-
चक्रानन्दमसौ निशम्य मुदितः सम्पूर्णवृत्तान्तकम्।
शाक्तानां कथयन् बभूव निखिलस्थानस्य विस्तारतो
(वक्तृत्वं प्रथतेऽत्र विस्तरतया श्रोतुर्हि जिज्ञासया)।।७५८।।

शृण्वन्नस्ति तदुक्तसर्ववचनं दृष्ट्वा हसन्नस्ति च
श्रीमान् सङ्गिमुखं प्रति प्रभुरहो!, तेनोक्तमन्ते पुनः।
'अस्माकं मठ एव चाद्य वसतु त्वायातु तत्रैव तं
पाताऽऽनन्दमथाऽखिलश्च मिलितो'-(ऽत्यन्तं स्वजातिः प्रिया)।।७५६।।

तन्नित्यं कथयन् बभूव विहसन् 'श्रीपाद!' गौरप्रभु-
'स्त्वानन्दाऽऽरसनं किमिच्छसि, तथाऽऽस्तेऽयं महात्मा परम्।
मार्गे शान्तिपुरस्य नौ च मिलितः संन्यासिको यादृश-
श्चानन्दी, ननु जन्तुरस्ति तदिव (द्रव्येण नाऽऽनन्दता)।।७६०।।

पार्श्वे भवतश्चेदानन्ददशायाः।
न्यूनत्वमथान्तस्तद् ब्रूहि तु शीघ्रम्'।।७६१।।

किञ्चिन्नोत्तरमत्र तत्प्रभुगिरो नित्येन दत्तं, हस-
न्नुच्चैः सोऽथ बभूव, साधुरवदत्तद्वाममार्गी स वै।
'नो, बोधन्तु न चान्यदत्र किमपि स्थाने भवन्तस्तथाऽऽ-
नन्दस्य त्रुटिरस्ति किञ्चिदपि नाऽस्माकं मठे साम्प्रतम्।।७६२।।

इच्छन्तु यावत्त्वपि वै भवन्तः
पातुं, पिबन्तु स्वरसानुसारम्।
मठं ममैवाद्य कृतार्थयन्तु
त्वायान्तु' (सङ्गी स्वमनोऽनुकूलः)।।७६३।।

'अस्त्येवं ननु शोभनं' स च हसन्नाह प्रभु'स्त्वग्रतो
गत्वा सर्वमथ प्रबन्धमधुना स्वस्मिन् विधत्तां मठे।
आयामस्त्विह पृष्ठतो ननु वयं' श्रुत्वा स साधुस्त्विदं
यातोऽग्रे-(ऽतिथिसेवनक्षणमहो! लब्ध्वा कृती मोदते)।।७६४।।

गौराङ्गस्य दशां विलोक्य (बुबुधे स) प्रेरणादायिनी-
'मेषोऽप्यत्र ममेव कोऽपि भविता सांसारिकं मादकम्।
सेवित्वा भुवि वस्तु मत्तभवनः साधुः– परं तस्य न
ज्ञातं, यत्त्वमुना तथाहि चषकं पीतं निमाय्यात्मना।।७६५।।

पीत्वाऽऽवश्यकतैव तिष्ठति न यच्छुद्धात्मनां प्रेमिणां
भूयोऽन्यस्य मदस्य, घूर्णति सदा तस्यैव माद्यन्मदे।

लक्ष्यीकृत्य तथा तदेव चषकं दासः कवीरोऽभणद्
(गूढं प्रेम समीरकोऽत्र दिशते ह्याप्तः कवीनां सताम्)।।७६६।।

३२. अमलं प्रेमाऽऽरसनं सुहृदाम्।
मानवजीवनमत्युत्तममिह करवाणीमतियोगात्
तेषां सर्वेषामुपयोगः सति, सद्भगवत्कृपया।
कालक्षेपकृते नानाऽमलसेवनमर्जति मनुजः
आत्यन्तिकसुखशान्तिस्थितिमयमर्जति तैर्न तु कर्ह्यपि।
प्रेमचषकमन्तःकृतमथ चेत्प्रतिरोम स्वनुभूतम्
अन्याऽमलकापेक्षा किं स्यात्? प्रेमाऽमलरसिकानाम्।।

धन्याः सन्ति तथाऽमलास्त्वमलिन,श्चैतत्तु सांसारिकं
सर्वं तादृशमद्यसक्तसुहृदां तुच्छञ्च हेयं पुरः।
एवं स्वाखिलसङ्गिनश्च सुखिनः कुर्वंस्तथाऽऽनन्दितान्
गौरः पूरयते पुरीपथ-(महो! पूर्णस्य पूर्णं जगत्)।।७६७।।



# श्रीगोपीनाथः क्षीरचौरः

३३. वस्तुनि भेदो भाववृत्तितः।
विच्छित्तिः खे रविशशितारा: कौ गिरितरुसागरसरितः
भावभदेतो मीयन्तेऽमी विविधसंस्कृतौ विविधम्।
स्वार्थकृतेऽनिन्दितवृत्तिस्त्वपि विहिता, नातिप्रसरति
परमिह विहिताऽपरभावनया निन्द्या वृत्तिः स्तुत्या।
गोपीनवनीताम्बरहारी लीलापुरुषोत्तमतः
ख्यातः स कलौ गोपीनाथः क्षीरहरः सम्प्रत्यपि।।

प्रेमानन्दविहारमेष विदधद् भक्तैः सह श्रीप्रभु-
श्चैतन्यस्तु जलेश्वरे प्रियपथे च ब्रह्मकुण्डे तथा।
मन्दारे स्नपनञ्च दर्शनमलं तीर्थेषु कुर्वन् पुनः
प्राप्तस्तीर्थविशेषके प्रियतमे वा रेमुणायाभिधे।।७६८।।

गत्वा तत्र महाप्रभुर्भगवतस्तत्क्षीरचौरश्रियो
गोपीनाथसुदर्शनस्य कुरुते श्रीमन्दिरे दर्शनम्।
आनन्दे स्तवनं करोति विकलो गोपीप्रियश्रीप्रभो-
रत्यन्तं करुणस्वरे प्रभुरहो! (प्रेमा हि गोपीरतिः)।।७६९।।

यातः प्रेम्ण्यविचेतनः प्रभुरयं कुर्वन्निमायिस्तुतिं,
साष्टाङ्गं कृतवान्नतिं भगवतश्चान्ते पदाम्भोजयोः।
तन्मूर्ध्न्येव च विग्रहाद्भगवतो निःसृत्य गौरप्रभो-
रेकश्चातिशयस्तदैव सुमनोगुच्छो विशालोऽपतत्।।७७०।।

दृष्ट्वा तादृशभक्तिभावमपरं सर्वा तदाऽत्र प्रभोः
पूजाकर्तृकदर्शनार्थिजनताऽत्यन्तं प्रसन्नाऽभवत्।
चक्रे चास्य महाप्रभोः प्रियतमप्रेमप्रशंसां तथा
(प्रेमैवास्ति निमायिभावदयितं सत्यं शिवं सुन्दरम्)।।७७१।।

बुद्ध्वाऽसौ भगवत्प्रसादमपरं तं पुष्पगुच्छं प्रभुः
शीर्षेऽधत्त निमायिनामपथिकः स्वे भक्तिभावेन तत्।
तस्थौ भक्तजनैस्तथातिसमयं कुर्वंश्च संकीर्तनं
विश्रामन्त्वपि मन्दिरेऽकृत निशि ह्यन्ते च तत्रैव सः।।७७२।।

नित्यः 'प्रभो!' पृच्छति चाऽ'त्र गोपी-
नाथस्य नामाऽस्य कथं हि जातम्?
तत्क्षीरचौरं भगवत्तमस्य'
(श्रीमत्क्षुधा भक्तिहृदैव धेया)।।७७३।।

उक्तं तत्प्रभुणा विहस्य 'भवतः किं स्यात्तथा गूहितं ?
गोपीनाथहरेस्तथा भगवतोऽस्य क्षीरचौराख्यकृत्।
त्वत्पूज्याङ्घ्रिगुरुर्गुरोर्मम गुरुः श्रीमाधवेन्द्रः पुरी-
जी चैवास्ति (कृते निमायिसुहृदां सर्वं करोति प्रभुः)।।७७४।।

तस्याऽऽस्याद् भविता श्रुता भगवतोऽस्य क्षीरचौरस्य ते
शिष्यस्य ध्रुवमेव, मे तु मुखतः स्थानेऽपि भूयो भवान्।
कल्याणाय तथान्यभक्तसुहृदां श्रोतुं त्विदानीं कथा-
मेतां वाञ्छति (भक्तिभावहृदयाः शृण्वन्ति भूयः श्रुतम्)।।७७५।।

तत्पूज्यस्वगुरोर्मयेश्वरपुरीदेवस्य पद्मानननात्
साक्षादस्ति यथा श्रुता,ऽत्रभवतस्तां श्रावयामि त्वहम्।
एवंभूतकथास्तु सौहृदवतां श्रव्याः पुनर्वै पुन-
(र्वाक्यं 'तत्त्वमसी'ह साधुगुरुतः 'सोऽहं' निशम्यैव ना)।।७७६।।

एतत्पूतकथाश्रुतेर्भगवतः पादाब्जयोर्जायते
प्रीति,र्वत्सलतादिधर्मविषये भक्तेषु तस्य प्रभोः।
शुश्रूषोर्दृढभावना भवति, यत्सर्वं स कर्तुं क्षमो,
वाञ्छां पूरयितुं स्वभक्तमनसो (भक्ताभिलाषः प्रभुः)।।७७७।।

एवंभूतकथासु कर्हिचिदपि श्रद्धालुभिर्न त्विदं
वक्तव्यं, यदियं श्रुताऽस्ति ननु मे, श्रोता त्विमां किं पुनः?।
एकस्मिन् दिवसे यथाऽतिजठरं लोके कृते भोजने,
भोक्तुं तादृशमेव चान्यदिवसे जागर्ति वाञ्छा पुनः।।७७८।।

भक्तानां सुहृदां तथैव भगवत्संबन्धिवार्ताकथा-
सूपेक्षा श्रवणे कदापि भुवने कार्या न सत्प्रेमिणाम्।
भक्तश्रीभगवत्कथासु च सदाऽतृप्तेन चैवाऽऽस्यता-
(मुद्धारो गुणतस्तथाऽवगुणतः पातः श्रुतादात्मनाम्)।।७७९।।

अस्तु, क्षीरहरस्य तर्हि कथये श्रीगोपिकास्वामिनः
पुण्याख्यानमहं पुरस्तु भवतां, ध्यानेन तच्छ्रूयताम्'।
श्रुत्वैवं वचनं प्रभोश्च निखिला भक्तास्तथौत्सुक्यतः
पश्यन्ति प्रति तन्मुखं (ननु दृशा जिज्ञासुता शृण्वताम्)।।७८०।।

अन्येऽपि तत्र समये दश-विंशतिश्च
प्राप्तास्तु भद्रपुरुषाः प्रियभक्तिभावाः।
तत्क्षीरचौरभगवत्सुहृदः कथां तां
श्रोतुं महाप्रभुमुखादपि ते निषण्णाः।।७८१।।

औत्सुक्येन सहाऽनिमेषसहितान् सर्वान् प्रति स्वं प्रभु-
र्दृष्ट्वैव स्वरतोऽधिकं मधुरतो ब्रूते निमायिप्रियः।
'आसीन्मे महतो गुरोरपि गुरोर्वैकुण्ठवासश्रियः
कृष्णे भक्तिरलौकिकी भगवतः श्रीमाधवेन्द्रात्मनः।।७८२।।

आसीत्कीर्तन एव चानिशमसौ संवर्तमानः सदा
श्रीकृष्णस्य च रूपमेव सततं स्वप्नेऽवबोधे स्मरन्।
जिह्वाया लगति स्म चास्य भगवन्नाम्नां तथास्वादुता,
यद्रिक्ता न कदापि साऽभवदहो! (तत्स्थायिभावो रसः)।।७८३।।

नाम्नामेव जगत्पतेर्भगवतस्तस्यानिशं शंसनं
कुर्वाणा समभूच्च मङ्गलमयश्रीमञ्जुलश्रीमताम्।
एतस्या भुवि चैव तस्य सुहृदस्तूत्कृष्टभक्तेर्वशात्
क्षीरस्याऽकृत चोरणं तु भगवान् (कृष्णो हि चौराग्रणीः)।।७८४।।

भ्राम्यन्नेष तथैकदा व्रजभुवि श्रीमाधवेन्द्रः पुरी
संप्राप्तो गिरिराजपर्वतमहद्गोवर्धनस्याऽऽमुखम्।
तत्रायं गिरिकाननस्य ललितां जातो विलोक्य च्छटां
तत्रैवास्ति च मन्त्रमुग्ध इव तद्भ्राम्यन् गिरेः सन्निधौ।।७८५।।

एकस्मिन् दिवसे निवासमकरोदेकस्य वृक्षस्य स
श्रीगोवर्धनपार्श्वकाननभुवो नीचैः पुरी माधवः।
आसीद्वृत्तिरहो! पुरीवरमहाराजस्य चायाचिता,
कञ्चिन्नो स ययाच भोजनमपि (ध्याताऽखिलानां हरिः)।।७८६।।

यत्प्रारब्धवशादपि स्म मिलते किञ्चि,त्तदेवाऽकरोत्
सन्तोषेण च कालयापनमसौ लब्ध्वा पुरी माधवः।
आहारो दिवसेऽत्र किञ्चिदपि नो यावद्दिनं तस्य तु
प्राप्तो (निश्चितमस्ति वस्तु समये प्राप्तव्यमत्रात्मनाम्)।।७८७।।

नामोच्चारणमेष सान्ध्यसमये तस्यैव नीचैस्तरो-
रासीच्छ्रीयतिमाधवो भगवतः कुर्वन्निषण्णः पुरी।
कस्याप्यस्य तदैव तत्र पदयोः स्थाने ध्वनिः शुश्रुवे,
पृष्ठे स्वस्य ददर्श चैष सहसा (तत् त्वस्य पृष्ठे सदा)।।७८८।।

दृष्टं तेन तु किं?—यदेकशिशुकश्चैकादश-द्वादशाऽ-
वस्थाकः प्रियकृष्णवर्णतनुकश्चायाति तस्याऽऽमुखे।
पात्रं स्वे पयसः करे ननु वहन्, वर्णे तु कृष्णे तनोः
सत्यप्यस्य शिशोस्तथैकमपरं तेजोऽस्ति चाऽऽस्ये स्फुरत्।।७८९।।

चित्ताकर्षकसुव्यवस्थितमहोऽस्याङ्गं तथा सुन्दर-
ञ्चासीत्सर्व,मसौ स्वरेण मृदुनाऽत्यन्तं, मनाग् वै हसन्।
ऊचे 'किं क्षुधितः स्थितोऽसि विपिने स्थाने महात्मन्! यते!
चादेहि, त्विदकं पयो पिब' (तृषा सर्वत्र गेहे वने)।।७९०।।

'कोऽसि त्वं?, च विदितेयं वार्ता ते कथ,मरण्ये।
वर्तेऽत्राऽस्मि तु निषण्णः' (सङ्केतेन ननु बोधः)।।७९१।।

श्रुत्वा प्रश्नमसौ च माधवयतेर्बालो हसन् भाषते
'जात्या गोपशिशु,र्गृहं मम तथाऽदःकण्टगुल्माऽन्तिके।
ग्रामे, मे जननी च वारिभरणं कर्तुं तथाऽत्राऽऽगताऽ-
पश्यत्सैव भवन्तमत्र यतिनं (स्थाने हि यत्नः सतः)।।७९२।।

गत्वा सैव गृहञ्च मामकथयत् (त्वायाहि दत्वा पयो)
गां दुग्ध्वाऽहमतो द्रुतन्तु भवतो नीत्वा पयश्चागतः।
एतत्स्थाननिवासिनां हि नियमो, यद्ग्रामपार्श्वेऽत्र नः,
स्वप्तुं न क्षुधितस्तु कोऽपि भविता (सर्वस्य तुल्या क्षुधा)।।७९३।।

याचित्वा ननु यस्तु खादति, वयं दद्मोऽस्य वै रोटिकां,
येषाञ्च व्रतमस्त्ययाचितमहो! तेषां तदिच्छासमम्।

दुग्धं वा फलमन्ननिर्मितमथ स्थाने पदार्थं तथा
दत्वा याम (भुवि व्रजे स्वयमहो! कृष्णो हि गोवर्धनः)।।७९४।।

पिबतु तत्पयो भवानिदं पुनरहञ्च दुग्धपात्रकम्।
इदमथाऽऽगतो नयामि' तत्स कथयञ्छिशुस्ततो गतः।।७९५।।

दुग्धं तच्च पपौ महाशयपुरी, पीतं निजे जीवने
न स्वादिष्टमियत्पयोऽत्र यतिना लोकेऽमुना कर्हिचित्।
चित्तेऽत्यन्तमथैव दुग्धमपिबत् तत्स प्रसन्नो भवन्
(तत्सामान्यविशेषभेदमवनौ जानाति चित्तं सतः)।।७९६।।

रूपं गोपशिशोस्तथाऽस्य हृदये श्यामस्य तस्याधुनाऽऽ-
सीदाविष्टमिवाथ, तस्य बहुशश्चक्रे त्वसौ चिन्तनम्।
पीत्वा दुग्धमयञ्च पात्रमवनौ स्थाने न्यधान्माधव-
स्तस्थौ गोपशिशोश्च तस्य यतिकोऽपेक्षाक्षणे श्रीपुरी।।७९७।।

याताऽस्यार्धनिशा तु माधवयतेः स्थाने स्थितस्यैव, नाऽऽ-
यातः किन्तु पुनः स गोपशिशुकस्तद्दर्शनस्याधुना।
औत्सुक्यन्तु पुरीमहाशययतेरत्यन्तमावर्धत,
प्राप्ताऽमुष्य मनाक् च सम्प्रति यथा तन्द्रा तथैव स्थितौ।।७९८।।

तस्मिन्नेव पुरः स्थितश्च ददृशे बालः स एव क्षणे,
तेनोक्तं हसता च 'माधवयते! कुर्वन् प्रतीक्षां दिनैः।
आसं त्वत्र तवाऽऽगमस्य बहुभिस्त्वञ्चागतो,ऽदस्तथा
जातं शोभनमेव (साधुसुहृदां स्थाने भवत्यागतिः)।।७९९।।

दत्वा ते त्वहमेव दुग्धकमगां गोपालबालाऽऽकृतौ,
त्वं भूयोऽत्र विधेहि साम्प्रतमदःस्थाने प्रतिष्ठां मम।
एतत्पार्श्वककण्टगुल्मकतलेऽत्राहं निलीनः क्षितौ
(किं किं कुत्र भुवस्तलेऽस्ति निहितं कालेन, को वेद तत्)।।८००।।

त्वं निःसार्य तु मामितश्च विधिवत्पूजां विधेह्यद्य मे,
'श्रीगोपाल' इति प्रियं मम तथा नामास्ति, गोवर्धनः।
शैलोऽयं समये मयैव विधृत,स्त्वं मत्प्रतिष्ठां पुन-
र्नाम्नाऽनेन तथैव सम्प्रति कुरु' (श्रेष्ठः प्रतिष्ठातृ-ना)।।८०१।।

इयत्तथोक्त्वा ननु बालकोऽयं
धृत्वा पुरीश्रीकरमेव निन्ये।
तत्कुञ्जपार्श्वे, त्वलुलोकदस्मै
तत्स्थान-(मात्मा पुरतोऽपि गूढः)।।८०२।।

पश्यन् स्वं परितो बभूव स पुरी नेत्रे तथोन्मीलिते,
तत्रासीन्न तु कोऽपि, वृत्तमखिलं प्रातः समाहूय तत्।
ग्रामीणानवद,त्स्म खानयति तत्स्थानं तथा माधवः
श्रीगोपालनिदेशितं (हि कृपया गूढं सतो दीप्यते)।।८०३।।

दूरं तत्खनने गते बहु ततश्चैकाऽधिकं सुन्दरी
मूर्तिर्मानसमोहिनी प्रियतमाऽद्धा श्यामवर्णोद्गता।
लौकैर्ग्रामनिवासिभिर्यतिपुरी तस्मिंस्तथैव क्षणे
संच्छाद्यैकतृणोटजं रचितवांस्तत्रैकमुच्चासनम्।।८०४।।

तत्तस्योपरि सोऽकरोच्च निहितां गोपालमूर्तिन्तु तां,
तत्संस्थाप्य च मूर्तिकां भगवतः पञ्चामृतस्नानकम्।
सार्धं कारितवांस्तथाहि विधिना, भूयश्च शीताम्बुनाऽ-
त्यन्तं श्रीभगवत्सुविग्रहमसौ सम्मार्ज्य चाक्षालयत्।।८०५।।

संघृष्य चन्दनमतश्च सुगन्धितं तद्-
देहेऽखिले प्रियतमस्य लिलेप साधुः।
नैवेद्यवस्तुभरवन्यफलप्रसूनैः
पूजाञ्चकार विधिवद्यतिमाधवेन्द्रः।।८०६।।

चक्रे निश्चयमेष कर्तुमधुना साध्वन्नकूटोत्सवं,
ग्रामे तत्र (पुरी स) यावदभवत्तु ब्राह्मणानां गृहम्।
तत्सर्वं कथयाञ्चकार च 'यथाशक्ति स्वगेहात्तु ते
नीत्वा भोजनवस्तुकं निज-निजस्त्रीभिः सहात्राऽऽगताः।।८०७।।

नानाव्यञ्जननिर्मितिं निजरुचेः कुर्वन्तु' तद्ब्राह्मणः
सर्वः पालितवान् प्रसन्नमनसाऽऽदेशं पुरीश्रीयतेः।
ते दुग्धञ्च घृतं दधि स्वगृहतो दीर्घेषु कुम्भेषु चाऽऽ-
पूर्य श्रीलपुरीकुटीपरिसरे स्थाने नयन्तोऽभवन्।।८०८।।

सर्वञ्च स्वगृहस्य दुग्धमददुर्गोपाश्च, पण्याश्रयाः
सर्पिस्तण्डुलशर्करादि भगवद्भोगाय नानाविधम्।
प्रादुर्भोजनवस्तु तत्र वणिजः, सत्पात्रविप्रस्त्रियः
पेचुः सुन्दरसुन्दरं भगवतो भोगाय वस्त्वागताः।।८०६।।

पक्वाऽपक्वकभेदभावगणना नासीत्पदार्थेषु तत्
पक्तुं या यदपीह वेत्ति, च तथा यस्याः प्रियं यद् बहु।
आसीत्सैव तदेव वस्तु तरसा पक्तुं विशुद्धात्मनाऽऽ-
रेभे (निर्मलभक्तिभावहृदया वृत्तिः सतां स्थायिनी)।।८१०।।

काचित्तु क्वथितां तथैव पचति ह्युत्कृष्टमुद्भिन्नकां
काचित्सम्प्रति माषमुद्गवटकानेवात्र निर्माति च।
दध्नः कापि वटांश्च काञ्जिकवटान्निर्माय शुण्ठीवटान्
निर्मायातिशयं तथास्ति दधती (भोजोऽङ्गनाकौशलम्।।८११।।

काचित्कर्चरिकाञ्च पिष्टकमथान्या पूलिकां मिष्टकं
पूपं वज्रकचक्रिकाञ्च चणकक्षोदस्य वा पिष्टकम्।
काप्यन्या चणचूर्णमुद्गनिकुतीसम्मिष्टचूर्णादिभि-
र्लड्डूकं कणिकेन चैव विविधं भोगाय निमार्ति वै।। ८१२।।

नानाजातिकशाकमत्र विविधं दाधेयमेवेतरा
मिष्टाम्लं पृथगेव वा निदधती निर्माय काप्यस्ति च।
निर्मायाण्वणु कापि कापि वटिका एवात्र ताः सर्पिषः
पात्रे चास्ति निमज्य सन्निदधती (नारी गृहश्रीनिधिः)।।८१३।।

तत्पिष्ट्वा च करेण कापि वनिता निर्माति ताश्चूरमां,
काप्यन्या पचतेऽण्वथाणु पिटिकाः, काचिच्च काचित्तथा।
स्थूलस्थूलकरोटमेव वनिता निर्माय गोपालकं
बालं भोजयितुं तथाहि लषते वात्सल्यभावाश्रया।।८१४।।

कङ्गुन्योदनमत्र कापि पचते गोपालभोगाय तत्
काचिद् वज्रकभक्तमुत्क्वथति तच्चान्या रमासां पुनः।
उत्क्वाथ्यैव घृतादिनाऽवधरते, काचिच्चणांस्तान् घृते
संफुल्यात्र च भृज्जते-(ऽखिलरसस्रोतो हि गोपालकः)।।८१५।।

आम्रक्षोद-पुदीन-शुष्कफलकादीनां तथाम्ल्याः पुनः
पिष्ट्वा प्रस्तरकोटरासु विविधं चान्यत्प्रकारन्त्वपि।
काप्यन्या त्ववलेहकं निदधती विप्राङ्गना दृश्यते
(लेह्यं वस्तु सतोऽपि भोजनविधौ स्वादे तथाऽऽवश्यकम्)।। ८१६।।

काचित्पायसमेव चात्र पचते मक्खानधान्यास्थित-
श्चाप्यन्यद्विविधं तु कापि पयसः कृत्वा किलाटं पुनः।
बर्फी-पिण्डक-जम्बु-लड्डुविविधं मिष्टं फलाहारिकं
निर्मात्यत्र (विशेषसाधुदिनयोः क्षारो हि वार्यो रसः)।। ८१७।।

काचित्सम्प्रति कूर्चिकाञ्च पयसो निर्माति, काचित्पयः-
पात्राद्वै खुरितं निगृह्य धरते भागे परस्मिंस्तथा।
मठ्ठामेव तथाहि तद्भगवतो भोगाय दातुं पुनः
काचिद्वाञ्छति (भोजनान्तसमये तक्रं त्वावश्यं पिबेत्)।। ८१८।।

काचित्सुन्दरसुन्दरान् बहुविधान् वै तण्डुलानेव तत्-
स्थानेऽनेकविधानतस्तु पचते, काचित्तथा रोटिकाः।
दुग्धे फुल्लयतीह खण्डकरणात्काचित्पयोलप्सिका-
संयावप्रियभोगनिर्मितिरता (नारी हि सृष्टिप्रथा)।। ८१९।।

स्वस्वेच्छानुसृतेश्च षड्रसयुतं सर्वास्तथा भोजनं
स्थाने निर्ममिरेऽत्र, निर्मितमहो! स्त्रीभिः किमाभिः पुनः?।।
श्रीगोपालहरिस्तदीयहृदये कृत्वा स्वयं प्रेरणां
ताभिः कारितवान् (स एव भुवने सद्वृत्तिकप्रेरकः)।। ८२०।।

कामं नो तु तथा विदन्तु ननु ता ग्रामीणगोपस्त्रियः
किं तादृक्सुपदार्थनिर्मितिविधिं? (संस्कारमूलाः क्रियाः)।
आस्ते सर्वसमर्थकस्तु भगवान्, हस्तेन यस्यापि यद्
वाञ्छेत्कारयितुं क्षमः स (कृपया तस्यैव लोकोऽद्भुतः)।। ८२१।।

संनद्धे निखिले च वस्तुनि महाराजः पुरीश्रीस्तथा
भोगं त्वर्पितवान् प्रियं भगवतो गोपालनाम्नोऽधुना।
जाने न, क्षुधितो बभूव भगवान् प्रेमा कियत्कालतोऽ-
गारीत्सम्प्रति तत्पदार्थमखिलं संपश्यतामेव सः।। ८२२।।

चित्ते श्रीलपुरीमहाशयसतो जातो महान् विस्मयः,
पात्राणि स्वकरेण तानि भगवांस्तस्माद्धसित्वाऽस्पृशत्।
स्पर्शेनैव हि केवलं भगवतो भूयः पदार्थस्तु ते
सम्पूर्णाश्च यथावदेव जनिता (तद्वाञ्छयेदं जगत्)।। ८२३।।

तेन श्रीलपुरीयतिस्तु मुदितो भोगप्रसादञ्च तं
सर्वेषु व्रजवासिषु प्रियसुहृन्मूर्तिक्षमान्यासिषु।
तन्नारीनरवृद्धबालयुवके संवण्टयामास स
(न्यासं रक्षति यः, कृतज्ञमनसाऽसौ माननीयो नृणा)।। ८२४।।

श्रीगोपालहरिप्रकाशमकरोत्स्थाने पुरीश्रीमहा-
राजोऽयञ्च ससार सम्प्रति समाचारस्तु दूरं बहु।
आयान्ति स्म सहस्रशो भगवतः संदर्शनार्थं जनाः
(साधुस्त्रीपुरुषा भवन्ति सततं माधुर्यचेतोदृशः)।।८२५।।

द्रष्टुं तद्भगवन्तमत्र दिवसे योऽप्यागतस्तत्स्थले
तस्यैवाऽऽजठरं तथा भगवतो भोगप्रसादोऽमिलत्।
यावद्रात्रिमथाऽऽगता ननु गता भक्ताः सहस्रं जना-
स्त्वन्तं यावदहो! यथेष्टमखिलैः प्राप्तः प्रसादस्तथा।।८२६।।

प्रसादहीनो नहि कोऽपि यातः
(सङ्गात्प्रसादो ध्रुवमेव साधोः)।
तथान्नकूटोत्सवको बभूवाऽ-
द्भुतोऽधिकं तस्य दिनस्य नृणाम्।।८२७।।

अन्यग्रामजनस्त्वपीह तदनु स्थाने च पर्यायतः
श्रीगोपालनिमायिनो भगवतश्चक्रेऽन्नकूटोत्सवम्।
एवं प्रत्यहमेव तद्यतिपुरीसाधोः कुटीरे त्वभू-
च्छोभा संततमन्नकूटघटिता (साधुस्थितिः शोभिका)।।८२८।।

दूराद्दूरतरं ससार च समाचारस्त्वसौ, माथुराः
श्रीगोपालनिमायिदर्शनहृदः प्राप्ता वराः श्रेष्ठिनः।
स्वर्णश्वेतवरारकादिमणयो नानाविधं तैः पुन-
र्वस्त्राभूषणकञ्च तद्भगवतो दत्तं तथोपायनम्।।८२९।।

श्रीगोपालनिमायिनो भगवतोऽत्यन्तं विशालं तथाऽऽ-
वासं कोऽपि तु पुण्यवांश्च पुरुषः सम्पादयामास तत्।
सर्वैश्च व्रजवासिभिः सहृदयैरेका तथा द्वेऽथवा
गावौ मन्दिररहेतवे ह्युपहृता (गौः पालिता पालिका)।।८३०।।

एतेन त्वभवंश्च मन्दिरकृते गावः सहस्रं, तथाऽ-
त्यन्तं सोऽथ पुरी करोति भगवत्सेवार्चनं भक्तितः।
जातं क्षीणमिवाल्पमस्य तनुकं, योग्याधिकारिप्रियं
तत्सेवार्चनहेतवे भगवतः कञ्चिद् वटुं सोऽलषत्।।८३१।।

आगत्याथ तदेव तस्य शरणापन्नौ युवानौ प्रियौ
प्राप्तौ गौडभुवः पुरीयतिमहाराजस्य चापेक्षितौ।
योग्यौ तौ प्रतिबुध्य तद्यतिपुरी चक्रे तथादीक्षितौ,
गोपालार्चनकार्यभारमपरं स न्यक्षिपच्च द्वयोः।।८३२।।

एवमसौ वर्षद्वयमत्र श्रीलपुरी कुर्वन्ननु तस्थौ।
गोप्रियगोपालस्य समर्चां (भारतसम्पद् गोकुलमेव)।।८३३।।

स्वप्ने चैकदिने जगाद भगवान् गोपालजी माधवं
'भूम्यन्तो ननु माधवेन्द्र! वसनाद्यावत्तु कालं बहु।
सम्पूर्णे भवतीति सम्प्रति महान् दाहः शरीरे मम
(प्रेमी तृप्यति केवलानुरतितो, गूढे रतिः का प्रिये?)।।८३४।।

पुर्यास्त्वं पुरुषोत्तमोत्तमजगन्नाथस्य चानीय चे-
दत्यन्तं मलयाचलस्य शिशिरं सौगन्ध्यवच्चन्दनम्।
लिम्पेस्तद् वपुषीह मे, ननु तदा शम्यान्ममोष्मा त्वसौ'
(वस्तु स्थानविशेषलब्धमपरस्वादु प्रियेणार्पितम्)।।८३५।।

आज्ञां भागवतः पुरी भगवतः शीर्षे विधायात्मनः
पूजाकार्यमसौ समस्तमुभयोर्विन्यस्य तच्छिष्ययोः।
लब्ध्वाऽऽज्ञाञ्च निमायिनो भगवतो, नीलाचलञ्च प्रति
प्रस्थानं कुरुते परत्र दिवसे (सत्प्रेरणा सत्परा)।।८३६।।

अस्मिन्नेव समाययौ स च नवद्वीपं प्रयाणे पुरी,
तत्रागत्य तथा स्थितश्च गुरुकाऽद्वैतस्य गेहे यतिः।

आचार्योऽस्य च भक्तिभावमपरं दृष्ट्वाऽद्भुतं, तद्वशा-
दासक्तो यतिमाधवस्य भगवत्प्रेम्णि प्रियात्माऽभवत्।।८३७।।

श्रीपुरीयतेश्च मन्त्रदीक्षामेष पण्डिताग्रणीस्तु लब्ध्वा।
स्वं गुरुं ससाध माधवं तं (माधवोऽखिलाश्रमैर्हि साध्यः)।।८३८।।

स्थित्वा शान्तिपुरे दिनं कतिपयं दीक्षाञ्च दत्वा तथाऽ-
द्वैताचार्यगुरोः पुरी यतिवरो नीलाचलं प्रस्थितः।
आयातोऽत्र चलन् स माधवपुरीश्रीरेमुणायेऽकृत
श्रीगोपीप्रियनाथदर्शनमथ (श्रीरेव दृष्टौ सताम्)।।८३९।।

गोपीनाथनिमायिनो भगवतो जाता तथा दर्शना-
दत्यन्तं मुदिता पुरीवरयतेः श्रीमाधवेन्द्रस्य वै।
स्थानेऽत्र क्रियते स्म तद्भगवतः शृङ्गारसज्जा पुनः
पद्धत्याऽतिनिमायिभावदशयाऽद्धा भोगरागस्तथा।।८४०।।

तत्स्थानार्चनपद्धतिं यतिमहाराजः पुरी ध्यानतोऽ-
त्यन्तं त्वस्ति विलोकयंश्च फलतः पप्रच्छ तत्पूजकान्।
'किं वस्त्वत्र निमायिनो भगवतो मुख्ये च भोगेऽर्प्यते?
तैरुक्तं (व्रजतुल्यमेव भुवने क्षीरप्रियो गोप्रियः)।।८४१।।

'श्रीगोपीप्रियनाथजीभगवतो भोगः प्रधानोऽत्र तु
क्षीरस्यैव परोत्तमोऽस्ति, मधुरश्रीगोपिकाप्रेमिणः।
क्षीरञ्चा'मृतकेलि'नाम कथितं, क्षीरं प्रसादस्तथा
गोपीवल्लभकस्य सर्वसुहृदां मध्ये प्रसिद्धो नृणाम्।।८४२।।

द्वादशपात्रकलापे सायममुष्य सुभोगः।
पायसमस्ति विसृष्टं (चिन्ननु गोरसभोक्त्री)।।८४३।।

श्रुत्वा चेतयते पुरीयतिमहाराजोऽर्चकानां मुखात्-
पूजापद्धतिरस्य सम्प्रति मया गोपीप्रियस्यार्जिता।
भोगक्षीरमथाऽस्य कीदृशमहो! सम्यङ् न बुद्धं परं,
(ज्ञातू रूपरसादिबोधनमिह स्वात्मेन्द्रियैरेव तैः)।।८४४।।

स्यात्प्राप्तो यदि साम्प्रतं भगवतः क्षीरप्रसादो मनाग्
ज्ञात्वा स्वादमथाऽस्य तत्त्वहमपि क्षीरं तथैवेदृशम्।

स्वश्रीगोप्रियपालरूपभगवन्मूर्तेश्च कर्ताऽर्पणं'
(प्रेमी कुत्रचिदत्र वस्तु परमं दृष्ट्वा स्मरत्यात्मनः)।।८४५।।

अस्मिंस्त्वागत एव चेतसि सतः साधोर्विचारे 'तथा
जिह्वालोलुपता तु मे न किमियं?' तस्य प्रतीतं भयम्।
'भावः सम्प्रति चेदृशस्तु रसनास्वादाय चित्तेऽत्र मे
नोत्पन्नो?' (यतयो भवेयुरवनौ स्वादग्रहे संयताः)।।८४६।।

भूयस्तेन च चिन्तितं-'भगवतो भोगप्रसादे तु किं
स्थाने लोलुपतेन्द्रियस्य?, रसनास्वादाय वाञ्छां त्वहम्।
कुर्वन्नेव न चास्मि, तद्भगवतः स्वस्यापि चैवेदृशं
क्षीरं भोजयितुं मयाऽभिलषितं' (श्रीमत्स्पृहा न स्पृहा)।।८४७।।

सन्तोषोऽस्य मनाङ् मनाक् सुमनसस्त्वेतैर्विचारैरभूत्,
कश्चित्तु प्रभुरेव याचितुमसौ नासीत्प्रसादं परम्।
तद्धेतुर्यदयाचितव्रतमथासीदस्य, यः कोऽप्यदाद्
यत्किञ्चिच्च विनाऽर्थनां स्म कुरुते तेनैव चात्माऽवनम्।।८४८।।

तस्यास्थान्मनसः प्रसादरसनावाञ्छा मनस्येव तत्-
स्वेच्छाया न चकार स प्रकटनं कस्यापि साधुः पुरः।
सन्ध्यायां शयनाऽऽरती समभवद् भोगेऽर्पिते मन्दिरे
तद्रुद्धं भगवत्कपाटयुगलं (बन्धे विरामो दृशोः)।।८४९।।

सर्वे जना निज-निजञ्च गृहं प्रयाता,
ग्रामाल्पदूरमयमेककुटीरमध्ये।
विश्राम्यति स्म यतिकोऽपि पुरी च गत्वा
(विश्रामहेतुमवनौ भवतीह रात्रिः)।।८५०।।

स्वप्ने पश्यति मध्यरात्रिसमये तन्मन्दिरस्यार्चको-
मन्ये तस्य पुरःस्थितस्तु भगवान् साक्षात्स गोपीप्रियः।
ब्रूते 'पूजक!' पूजक!' त्वमधुनैवोत्थाय चावश्यकं
कर्मैकं कुरु मे (करोति भगवान् द्वारैव कस्यापि नुः)।।८५१।।

भक्तो भागवतो महांश्च परमो मे माधवेन्द्रः पुरी
नामैकः सरलं स्थितोऽस्ति च बहिः संन्यासिको ग्रामतः।

तस्येच्छा मम लब्धुमस्ति परमं क्षीर-प्रसादं हृदि
(प्रायः सेवकगूढहार्दमपरं यो बोधतेऽसौ पतिः)।।८५२।।

वाञ्छां पूरयितुं स्वभक्तमनसो वस्त्रे जुगूहात्मनो
भोगद्वादशपात्रतोऽहमधुनैकं चोरयित्वा ततः।
दत्वाऽऽयाहि विगृह्य तद्द्रुतमितोऽस्मै माधवेन्द्राय तद्'
(वाञ्छापूरयिताऽखिलस्य किमयं नो पूरयेदात्मनः)।।८५३।।

श्रुत्वैवेयदथोत्थितस्तु सहसाऽसौ मन्दिरस्यार्चकः,
सोऽपश्यद् भगवत्कपाटयुगलञ्चोद्घाट्य तद्वस्त्रकम्।
वस्त्रे सत्यमथैकपात्रमधुना क्षीरेण पूर्णं पुन-
र्गूढं सन्निहितं तथास्ति (सुहृदश्चौर्यं हि सिद्धं व्रजे)।।८५४।।

उत्क्रोशन् परितो भ्रमंश्च नगरं तत्पात्रकं पूजको
धृत्वाऽऽसीदथ 'कस्य नाम परमास्ते माधवेन्द्रः पुरी।
साधुर्योऽस्त्विह माधवेन्द्रकपुरीनामा स गृह्णात्विदं
क्षीरं पात्र,मदःकृते भगवता क्षीरस्य चौर्यं कृतम्'।।८५५।।
उत्क्रोशन् स तथाऽऽगतोऽर्चनकरः स्थाने च तत्रैव यत्-
स्थानेऽभूदथ संस्थितो यतिमहाराजः पुरी माधवः।
श्रुत्वायं निजनाम तत्र भगवद्भक्ताऽर्चकस्याननात्
संप्राप्तो बहिरेव तत्कथयते (रूपग्रहो नामतः)।।८५६।।

'नाम महाराजाऽत्र ममैव त्विन्द्रपुरी हे! माधवयुक्तम्।
तत्कृपया ब्रूतान्तु किमाज्ञा-(ऽभ्यागतकं प्रीणाति सुगेही)।।८५७।।

लब्ध्वाऽमुष्य पुरीयतेः परिचयं तत्पादपद्मेऽर्चकः
संयातः प्रणतो विनीतवचनैरत्यन्तमेवाऽभणत्।
'धन्योऽत्रास्ति भवान्निमायिपुरुषश्रेष्ठो महाभाग! हे!
तेऽदोलौकिकभक्तिरस्तु वचनैर्धन्यैर्युता कोटिशः।।८५८।।

साधोर्दर्शनतोऽद्य चात्रभवतो यातः कृतार्थस्त्वहं
चैतावद्दिवसस्य साधुभगवत्पूजाफलं लब्धवान्।
साक्षाद्दर्शनमत्र तद् भगवतोऽस्मत्तुल्यवित्तादिक-
क्रीडापात्रजनस्य केन भवितुं शक्यं प्रकारेण तु?।।८५९।।

बोधामस्तु वयं परं निजमहोभाग्यं तथाऽत्रैव यद्-
यातो दृष्टिपथेऽद्य साधुभगवत्पूजाप्रभावात्पुनः।
साधुश्रीः परमप्रियो भगवतो भक्तो भवत्सन्निभ-
(स्तत्साधोर्भुवि दर्शनं भगवतस्तुल्यं नृणां दुर्लभम्)।।८६०।।

बोधामो भगवन्तमेव तु वयं साक्षाद् भवन्तं यतिं,
वाञ्छां पूरयितुं हि यस्य मनसः क्षीरस्य चौर्यं कृतम्।
सर्वस्थावरजङ्गमैकपतिना श्रीस्वामिनाऽपि स्वयं,
चौरः सोऽप्यभवद्, वरो भगवतोऽप्येषोऽत्र भक्तोत्तमः।।८६१।।

गृह्णात्वत्र भवानिदं भगवता ते चोरयित्वा कृते
वस्त्रे क्षीरमिदं निजे धृतमभूत्तस्यैव चादेशतः।
एतच्चाहृतवानहन्तु भवतः पार्श्वे निमाय्यात्मन'-
(स्त्रैलोक्याधिपतिर्निमायिभगवान् सत्यं निमायिप्रियः)।।८६२।।

श्रुत्वा स्वस्तुतिमेष पूजकमुखात्साधुर्मनाग् लज्जितः
श्रीमन्माधवकः पुरी भगवतो भक्तान् स्वकीयान् प्रति।
वात्सल्यप्रियता-स्वपारममताभावान् कृपालोस्तथा
भूत्वा प्रेम्णि विचिन्त्य चैष विकलः स्थाने रुदंश्चाभवत्।।८६३।।

दैन्येनाधिकमेव भिक्षुकसमो विस्तार्य हस्तावुभौ
तं जग्राह महान्तमेष भगवद्दत्तं प्रसादं रुदन्।
एकान्ते स महाप्रसादमघसत्तं प्रेम्णि मत्तो गत-
(स्तद्द्रव्यं किमपीह, यस्य मुदिता यस्मिन् परा, तस्य तु)।।८६४।।

तस्यानिर्वचनीयकस्य परमानन्दस्य शुद्धात्मन-
स्तत्कालस्य पुरीयतेरनुमितावेव क्षमोऽस्तीह कः?।
एकं त्वत्र, निमायिनो भगवतो भोगः प्रसादो महान्,
साक्षाच्चात्मकरेण तद्भगवता संचोर्य दत्तः परम्।।८६५।।

आस्तेऽसौ च रुदन् पुरी यतिवरस्तञ्च प्रसादं त्वदन्,
पात्रं तत्परितः प्रसादमघसल्लीढ्वा च लीढ्वाऽधिकम्।
निक्षिप्याम्बु पुनश्च साधुरपिबत्प्रक्षाल्य तन्माधवो,
मृत्पात्रं शकलं विधाय निखिलं वस्त्रे बबन्धात्मनः।।८६६।।

कामं स पात्रे भगवत्प्रदत्त
क्षेप्तुं क्षमः स्यात्कथमत्र साधुः।
दिने दिने तच्छकलं जघास
प्रत्येकमेतन्नियमेन साधुः।।८६७।।

वार्ता पावनरेमुणायजनतामध्ये यदा विस्तृता
गोपीनाथनिमाथिनो भगवतस्तत्क्षीरचौर्यात्मिका।
आयान्ति स्म सहस्रशो मनुजनरा आर्या पुरीमाधव
द्रष्टुं तर्हि तु (मायिसंसृतिले दृश्यो निमायिप्रियः)।।८६८।।

सर्वत्रैव पुरीयतेः प्रभुगतप्रेम्णः प्रशंसा सृता,
सर्वेषान्तु मुखेषु माधवमहाराजस्य सेवाधुना।
तल्लोकोत्तरगूढभक्तिविषया वार्ता, तदीयां बहु
प्रीतिं भागवतीं स्तुवन्ति निखिलाः (स्तव्य प्रभुप्रेम नुः)।।८६९।।

स्थातुं सम्प्रति नो शशाक सुकरीशिष्ठां प्रतिष्ठामिव
स्थाने गौरव-रौरवाख्यनरकं हेयञ्च दुःखप्रदम्।
विद्वान् कालमथाधिकं यतिपुरी श्रीगोपिकानाथजी-
पादाब्जप्रणतिं विधाय स जगन्नाथं चचाल प्रति।।८७०।।

तत्पुर्यां गत एव तत्र च समाचारः पुरीश्रीयतेः
साधोसमगमनस्य तु प्रवितत: सर्वत्र विद्युत्समः।
आयान्ती च बभूव तस्य जनता संदर्शनार्थं सती
दूराद्दूरतरात्पुरीवरयतेः (कश्चित्प्रपन्नः प्रभोः)।।८७१।।

सत्यं, कीर्त्तिगतिर्मनुष्यजगतां मानप्रतिष्ठा पुन-
श्छायेवात्र तथाहि चात्मवपुषः छाया यदि त्वं स्वयम्।
धर्तुं धावसि तत्त्वदत्र भविता सा धावमानाऽग्रतः,
सा नायास्यति ते करे, कुरु कियद्वापि प्रयत्नं तथा।।८७२।।

तूपेक्षाञ्च विधाय मर्त्यतनुकस्तस्यास्तथैवाचनो,
ताञ्च त्वं परिहृत्य धाव नियतोद्देश्यः परस्यां दिशि।
त्वं कामञ्च ततः परं कियदपि स्वात्मानमत्राव, सा
त्वत्पृष्ठं न तु हास्यतीह (तिमिरं स्थाने तले ज्योतिषः)।।८७३।।

त्वं यत्रापि तु यास्यसीह भुवने तत्रैव ते पृष्ठतः
सा सर्ता लगिता, तथेच्छति च यो लोके प्रतिष्ठामिह।
सर्वं कर्तुमथोद्यतोऽस्ति सततं स्वस्य प्रतिष्ठाकृते,
सम्पन्नैरपि साधनैर्भवति नो तस्य प्रतिष्ठाऽत्र कौ।।८७४।।

संसाराच्च पृथग् गतो ननु तु यः ख्यातिप्रतिष्ठादितो
दूरञ्चात्र पलायतेऽच्छलतया, धत्ते प्रतिष्ठामयम्।
संसारोऽस्य, ततस्तु संसृतिगतिर्लोकैर्विरुद्धोच्यते
(संसारश्चलति स्वभावगतितोऽत्रैव स्वभावः प्रभुः)।।८७५।।

गोपीनाथनिमायिनो भगवतश्चास्थानतो माधवः
पुर्यामागतवान् पलाय्य यतिकस्त्वेव प्रतिष्ठाभयात्।
तन्नात्रापि मुमोच पिण्ड,मसतः सर्वत्र संभावना
(सारः सत् त्वसतोऽत्र संसरति तत्संसारनामार्थता)।।८७६।।

अस्त्वल्पं समयं ह्युपोष्य स जगन्नाथस्य पुर्यां निज-
श्रीगोपालमनःस्पृहां द्विजसतामूचे पुरी सम्मुखे।
बुद्ध्वा तद्भगवत्स्पृहामतिशयं विप्राः प्रसन्नाः पुरी-
श्रीमत्स्थाननिवासिन(स्तु विरलाः पुण्यप्रसिद्धात्मनाम्)।।८७७।।

विप्रैस्तैर्मलयाचलस्य विपुलं सच्चन्दनस्य द्रुतं
विन्यासो विहितः पुरीयतिमहाराजस्य साधोः कृते।
राजानञ्च निवेद्य चन्दनकृते कर्पूरकस्तूरिका-
काश्मीर्यादिमहाप्रबन्धमपि ते चक्रुर्यथेष्टं यतेः।।८७८।।

यावद्व्रजं यतिवरस्य तथाऽस्य सङ्गे
तत्प्रापणार्थमदितापि सहायकौ द्वौ।
तं प्रेमपूर्वकमतो विससर्ज राजाऽऽ-
देशं पुरीं द्विजगणो ननु दापयित्वा ।।८७९।।

भूयोऽयं धृतचन्दनादिभगवद्द्रव्यः पुरी माधवः
सत्स्थाने समुपागतो यतिवरः श्रीरेमुणाये तथा।
श्रीगोपीप्रियनाथजीभगवतोऽद्धा दर्शनार्थं पुन-
स्तस्थौ द्वौ चतुरस्तु तत्र दिवसान् (प्रेमी कृतज्ञो जनः)।।८८०।।

भावस्य क्षुधितस्तु सोऽस्ति भगवान्, कस्यापि संसारिणो
भोगस्यास्य न कामना, प्रियसतोऽयं भक्तिभावं परम्।
द्रष्टुं वाञ्छति, तत्पुरीयतिमहाराजस्य संदृश्यतां
श्रद्धा लोकविलक्षणा तु (सुहृदोऽलोका भवन्ति प्रभोः)।।८८१।।

प्राप्ते त्वेव स साधुको भगवदादेशे पुरी माधवः
प्रेम्णा चन्दनहेतवेऽचलदहो! कुर्वन्न किञ्चित्त्वपि।
आपत्तेर्विपदश्च चिन्तन,मदोदेशैकसीम्नः पुनः
सीम्न्यन्यत्र तथाहि सागरतटे (सेवाप्रियः सेवकः)।।८८२।।

सम्प्रत्यग्निपरीक्षणं समभवद् भक्तस्य, तस्मिन्नसौ
शुद्धस्वर्णसमानमेव विमलो भूत्वा यथावत्तथा।
दीव्यन् सम्प्रति निर्गतो,ऽथ भगवान् भक्तस्य भूयोऽधिक-
क्लेशे क्षेपणकं न युक्तमबुधद् (युक्तावमर्शी प्रभुः)।।८८३।।

काले मुस्लिमशासनेऽत्र कठिनं त्वत्यन्तमासीदियद्-
दूरं तादृशचन्दनादिनयनं, स्थाने पुनः स्थानके।
आसीद्वै प्रधनं भवच्च तुमुलं, पन्था न कुत्रापि तन्-
निर्विघ्नस्तत एव चात्र भगवान् स्वप्नेऽदिशन्माधवम्।।८८४।।

'श्रीगोपीप्रियनाथजी, व्रजगतो गोपालनामा त्वहं
वर्ते संततमेक एव च, ततस्त्वञ्चावयोस्तूभयोः।
श्रीमद्विग्रहयोर्मनागपि पुनर्नो भेदबुद्धिं कुरु
(श्रीः सर्वत्र समानमत्र, मनसो भेदात्तु भेदो दृशाम्)।।८८५।।

एतच्चन्दनलेपनं कुरु ततो गोपीप्रियस्यैव तु
श्रीमत्सुन्दरविग्रहे प्रिययते!, तेनैव तापो मम।
दूरं यास्यति, वाचि, चन्दनमिदं, विश्वस्य मेऽत्रैव तन्-
निःसंकोचहृदा विघृष्य तनु चाऽभिन्नेऽत्र नौ विग्रहे'।।८८६।।

आदेशस्तु पुरीयतेः समभवत्स्वप्ने पुरा यो हि तत्-
पूर्त्यै चन्दनसंग्रहाय तु जगन्नाथस्य स स्थानकम्।
धावंश्चागतवांस्तथाऽद्य भगवान् स्वप्नेऽदिशद्यत्पुरीं,
कस्मात्तत्परिहर्तुमेष भविता साधुः क्षमो माधवः।।८८७।।

तस्मादेव पुरीयतिर्भगवदादेशं स कृत्वा शिरो-
धार्यं तत्र तथैव माधवमहाराजस्तु तस्थौ पुनः।
श्रीमच्चन्दनघर्षणाय निदधौ द्वौ चातिरिक्तौ जनौ,
(द्वावास्तां पुरवासिनौ प्रथमतः, स्यातामतः स्थानिनौ) ।।८८८।।

यावन्मासचतुष्टयं यतिपुरी ग्रीष्मस्य कालस्य स
स्थित्वा तत्र तथैव तद्भगवतश्चाङ्गेऽभवत्कारयन्।
कर्पूरादिसुगन्धिचन्दनमहालेपं, च तापो यदा
यातो दूरमथात्मनो भगवतः (सेव्यस्थितिज्ञः सुहृत्) ।।८८९।।

यातः पुरीं तदनु मासचतुष्टयं श्री-
मन्माधवोऽतिवहनार्थमसौ घनायाः।
स्थित्वा च तत्र चतुरः पुनरेव मासान्
स्वश्रीलगोपशिशुपार्श्वमितो व्रजान्ते।।८९०।।

एवं भक्तजनांस्तथाहि निखिलान् श्रीमाधवेन्द्रोत्कट-
प्रेमालौकिकभक्तिवृत्तमपरं सञ्जल्पतोऽस्य प्रभोः।
चैतन्यस्य गलौ भृतौ, नयनयोर्बाष्पाम्बुधारा द्वयो-
र्वक्षः क्लेदयति स्म तत्सुमनसो निःसृत्य निःसृत्य च।।८९१।।

श्रीचैतन्यसतोऽस्य माधवपुरीमाहात्म्यसंवर्णनं
चात्रान्ते ननु कुर्वतः स्मृतिगतः श्लोकः स, यं माधवः।
चक्रेऽदस्तनुपाञ्चभौतिकपरित्यागं पठन् वै पठन्,
वारम्वारमसौ च रुद्धगलतः श्लोकं पपाठाऽत्र तम्-।।८९२।।

*"अयि! दीनदयार्द्रनाथ! हे!*
*मथुरानाथ! कदाऽवलोक्यसे।*
*हृदयं त्वदवलोककातरं*
*दयित! भ्राम्यति किं करोम्यहम्।।"*

३४. हृदयं प्रियतममधुरमधुरतमदर्शनविकलं भ्राम्यति।
हृदयसरोवरभावाम्बुनि किल नैसर्गिकमुत्पत्तिः
सङ्गार्तिकमनु बुद्धिमतामपि विविधानां रूपाणाम्।
तज्जीवनसम्मतिसञ्चारः साधयति व्यवहारम्
सन्मतिसंस्कृतमानवतायां प्रियतमसंस्मृतिरर्थः।

त्वद्दर्शनकातरमाधवहृज्ज्ञाने तेऽनुग्रहतः
प्रस्थानस्य क्षण इह माथुर! केवलदर्शनविकलम् ।।

श्लोकं पठन् स पतितः सुहृदस्तदङ्के
नित्यस्य मूर्च्छितदशः प्रभुगौरकृष्णः।
अन्येऽपि तत्र समुपस्थितभक्तलोका-
स्तूच्चैर्विलोक्य रुरुदुश्च रुदन्तमेतम् ।।८६३।।

तस्मिन्नेव तथाक्षणे भगवतो भोगं समर्प्याभवद्-
वाद्याद्यैः शयनारती, प्रभुरपि स्थानेऽकृत स्वैः समम्।
सर्वश्रीशयनारतीप्रियमहच्छोभाविशेषेक्षणं
(निष्कामैरपि मुच्यते, सहृदयाश्चेत्सन्ति, सद्दर्शनम्?)।।८६४।।

भूयो मन्दिरपार्श्वमेव सुमनास्तत्रैव चैकत्र स
स्थाने यापननिश्चयं स्म कुरुते रात्रेः, पुनः पूजकाः।
चैतन्यप्रभुसम्मुखे भगवतस्तत्क्षीरभोगस्य चाऽऽ-
नीय द्वादश पात्रकाणि निदधु-(र्भोगः प्रदेयोऽतिथेः)।।८६५।।

चैतन्यो महतस्तथा भगवतस्तस्य प्रसादस्य च
प्रीतोऽभूदधिकं महाप्रभुरयं संदर्शनादेव तत्।
ऊचे तन्मुदितां निजां प्रकटयन् 'जन्माऽद्य जातं हि नो
बद्धानां सफलं (कदापि समये बद्धोऽप्यतो मुच्यते)।।८६६।।

यद्गोपीप्रियनाथजीभगवतः क्षीराधिकारी वयं
बुद्धाः सम्प्रति, तन्निमायिभगवद्भोगप्रसादस्य वै।
संबन्धे भुवि लोभवृत्तिकरणं नो सर्वथाऽत्रोचितं
(लोभः स्वे त्वपि न स्तुतो भुवि तथाऽऽस्वाद्येऽखिलैः का कथा?)।।८६७।।

पञ्चैवात्र वयं तथाहि पुरुषास्तत्पञ्च पात्राणि नो
दत्वा, सप्त नयन्तु, यद्भगवतः सन्ति प्रसादस्य वै।
अन्येऽपि त्वधिकारिणोऽत्र निखिला,स्त्वेकाकिनैवात्र तत्-
स्थाने भोजनमस्य नोचित'-(मिहोक्तः केवलादी त्वघी)।।८६८।।

उक्त्वा तथा पञ्च पुनर्गृहीत्वा
पात्राणि शेषं प्रभुरेष सप्त।
प्रत्यर्पयामास निमायिभावा-
(च्चैतन्यकृष्णोऽपरचेतनात्मा)।।८९९।।

तञ्चाद्भुतं भगवतश्च महाप्रसादं
श्रद्धान्वितः सनिजभक्तजनो निमायी।
जग्राह, चैष भगवच्चरणाब्जपार्श्वे
तत्रैव यापयति सङ्गिसुहृन्निशां ताम्।।९००।।



# श्रीसाक्षिगोपालः

३५. साक्षी वास्तविकः संसारे, यो गोकुलपालयिता।
इह कर्मजगति वासनानुसारं विविधं कर्म क्रियते
प्रियमप्रियकं निजपरविषयं फलभावनया मनुजैः।
कर्ता भोक्ता प्रेरयिता कश्चैषामत्र विवादः
सर्वेषां परमात्मा साक्षी गूढं, त्वपि विहितानाम्।
भक्तिमतां प्रियहरिहृदयानां केवलतत्स्मृतिमनसाम्
निखिलकर्मसाक्षी गोपालः पुष्टिमार्गशरणानाम्।।

उत्थाय प्रभुरेष नित्यविधितः प्रातर्निवृत्तोऽभवत्-
श्रीगोपीप्रियनाथजीभगवतस्तन्मङ्गलाऽऽरात्रिकम्।
दृष्ट्वाऽतो निजभक्तवृन्दसहितः प्रस्थानमग्रेऽकृत
(द्रष्टव्यं पथि लब्धमत्र गणयन् साधुः सरत्यग्रतः)।।६०१।।

मार्गे वैतरणी नदी च मिलिता, स्नानं विधाय प्रभु-
स्तस्यां राजपुरं तथाऽऽपयदसौ गौरः समं सङ्गिभिः।
तत्रास्ति प्रथितं वराहभगवत्स्थानं, वराहस्य च
श्रीचैतन्यमहाप्रभुर्भगवतः संदर्शनानन्तरम्।।६०२।।

गच्छन् याजपुरे निमायिसुमनाः प्रेमावतारी पुनः
संन्यासी शिवलिङ्गभद्रविरजासंदर्शनं, स्नानकम्।
कुर्वन्नाभिगयामथाऽऽपयदयञ्च ब्रह्मकुण्डे तथा
(तीर्थस्नानसुमूर्तिदर्शनमलं पुण्यं मनुष्यात्मनाम्)।।६०३।।

घाटे तत्र दशाश्वमेधकलिते स्नानं विधाय प्रभु-
श्चाप्त्वा सुन्दरकण्टकाख्यनगरं, चक्रे तथा दर्शनम्।
प्रेमाकारनिमायिनो भगवतः श्रीसाक्षिगोपालजी-
नाम्नो (मानवलोचनाऽमलफलं सद्दृष्टिहृत्तर्पणम्)।।६०४।।

कृष्णस्यातिचिरञ्च कीर्तनमभूच्छ्रीसाक्षिगोपालजी-
प्रेयोविग्रहमन्दिरेऽत्र सुहृदः, स्थाने तथैकत्रिताः।
श्रीमत्कीर्तननृत्यमस्य सुहृदो द्रष्टुं यथेष्टं नरा
नार्यस्तन्नगरस्य (सौहृदकृते लोकाः सदा लोलुपाः)।।६०५।।

कुर्वन्तं प्रभुमत्र नृत्यमपरं तद्ग्रामवासी तथा
दृष्ट्वा स्त्रीपुरुषोऽपि काष्ठघटिताभिर्मूर्तिभिः सन्निभः।
उन्मत्तश्च ननर्त तत्र विपुलानन्दे चुकूर्द तथा-
होरात्रं निखिलं प्रशिक्षित इव कोऽप्यत्र तत्संसदी।।९०६।।

संकीर्तनस्य बहुकालमभूत्प्रमोद-
स्तच्चात्मभक्तसहितः प्रभुरेष चक्रे।
विश्राममत्र सदने प्रियसाक्षिगोपी
(गोपाल एव सततं प्रतिभूः स्वभावात्)।।९०७।।

रात्रौ भक्तजनैः कथोपकथनं पप्रच्छ कुर्वन् प्रभु-
र्नित्यानन्दं निजप्रियं 'भवता श्रीपाद! तु प्रायशः
श्रीमद्भारतवर्षपावनभुवः सर्वेषु मुख्येषु सत्-
तीर्थेषु भ्रमणं कृतं (यतिसतो भ्रान्त्या पदोर्नो हृदा)।।९०८।।

तीर्थञ्च सम्भवतया किमपि प्रसिद्ध-
मस्याञ्चलेऽत्र भवतस्तु न, यत्र गत्वा
श्रीस्नानदर्शनमहो! भवता कृतं स्यात्'
(नित्यावधूतयतिकप्रियतीर्थपान्थः)।।९०९।।

नित्येन मन्दस्वरतस्तथोक्त
'बाढं, प्रभो! तद्विधिना तथैव
पवित्रतीर्थभ्रमणक्रमेण
त्वब्दानि च द्वादश मे गतानि।।९१०।।
प्रागत्रापि। त्वायातः किमु?' ।।९११।।

'साक्षिगोपदर्शनञ्च सुन्दरं कृतं मयाऽत्र।
आयता पुरीस्थलात्तु' (सद्दृशः सतो विभाति)।।९१२।।

गत्वा तीर्थममुष्य नूनममलं तीर्थस्य माहात्म्यकं
श्रोतव्यं सुहृदा, विना सुमनसः स्थाने महत्ताश्रुतेः।
तीर्थस्य ध्रुवमर्धमेव घटते लोके फलं यात्रिणा
माहात्म्यं विमलं निशामयतु मां श्रीसाक्षिगोपी भवान्।।९१३।।

तत्साक्षिगोपाल इतीव संज्ञा
गोवासिनोऽमुष्य कथन्तु जाता?
अनेन साक्ष्यं ननु कस्य दत्तं?'
(स्वयं हि साक्षी बहिरन्तरस्थः) ।।६१४।।

श्रुत्वाऽऽदेशमथेदृशं प्रभुसतः प्रेमावतारात्मनो
नित्यानन्दसुहृच्छनैर्ननु शनैर्वक्तुं तथाऽऽरब्धवान्
'कस्माच्चिन्न पुराणतो भगवतः श्रीसाक्षिगोपः कथा-
मश्रौषं त्वहमत्र, नास्ति यदिदं प्राचीनतीर्थं बहु ।।६१५ ।।

अल्पादेव दिनादहोऽद्य भगवाञ्छ्रीसाक्षिगोपास्तथाऽऽ-
प्तो विद्यानगरादथाऽत्र (किमपि स्थानं यतोऽसं स्फुटम्) ।
लोकानां मुखतः श्रुता ननु यथा प्रेयःकथा साक्षिणो
गोपालस्य, निशामयामि तदिमां (श्रोता निमायी मिलेत्?) ।।६१६ ।।

गोदासिन्धुतटे च कोटवसुधाप्राचीनराजस्थले
श्रीविद्यानगरन्तु नामललितं तैलङ्गदेशे पुरा
आसीत्तच्च समुद्रपार्श्वभवनाद् व्यापारवाणिज्ययोः
केन्द्रं चातिसमृद्धिमच्च नगरं (सम्पन्निधिः सागरः) ।।६१७ ।।

तत्रैको नगरे समृद्धिसहितो विप्रः कुलीनोऽभवद्
यो गोब्राह्मणयोरभूच्च भगवद्भक्तस्तथा भक्तिमान्
श्रीदेवप्रतिमासु भुक्तिरसनो नासीत्त्रुटिस्तद्गृहे
(प्रायोऽपेक्षितवैभवादिरहितो विप्रान्वयो जायते) ।।६१८ ।।

पुत्रास्तस्य वयस्कतां द्विजसतो याताऽस्त एवाधुना
तद्गेहाखिलकर्म चाकृषत, तद्वृद्धः स तु ब्राह्मणः
कुर्वन् सम्प्रति विद्यते स्म भजनं मालां गृहीत्वा स्वयं
(निश्चिन्तं भजनक्षणं हि लभते कश्चित्कृती गेहिनाम्) ।।६१९ ।।

आसीत्तस्य गृहे तथा स्वगृहिणी पुत्राश्च वध्वः पुन-
कन्यैका त्वविवाहिता लघुवयाः (गेही कुटुम्बैर्नरः) ।
विप्रेच्छा च बभूव कर्तुमधुना सत्तीर्थयात्रां स्वतः
(सत्तीर्थं गेहविलक्षणप्रियकरं यत्सेवयाऽऽत्माप्यते) ।।६२० ।।

तद्वृद्धद्विजपार्श्वमेव वसति स्मैको द्विजन्मात्मजो
निःस्वस्तत्पितरौ तमेव लघुकं त्यक्त्वा च यातौ दिवम्।
स्वं निर्वाहमसौ यथा ननु तथा कृत्वा श्रमं कायिकं
कुर्वन्नस्ति, परं बभूव भगवच्छ्रद्धाऽस्य पूर्णाऽऽत्मनि।।६२१।।

एकान्ते भजनं सदा भगवतः कुर्वंस्तथासीदसौ,
तद्धेतोर्भगवत्कृपा तदुपरि स्थाने बभूव स्वतः।
सर्वस्थूलमथेदमेव भगवत्प्रेयःकृपायाः परि-
ज्ञानं, यस्य हृदः स्फुटो व्यवहृतौ रागोऽमलः सत्सु कौ-।।६२२।।

तद्गोब्राह्मणतीर्थदेवसदनश्रीवृक्षविष्णुप्रियाऽऽ-
दिश्रीमद्भगवच्चरित्रभगवन्मूर्त्यादिषु, त्वेव सः।
बोधव्योऽत्र निमायिनो भगवतः पात्रं कृपाया गतो
(गूढं तिष्ठति सर्वतः परमदोवासोऽत्र कोऽपि स्फुटः)।।६२३।।

सर्वेषु तेषु च बभूव तथानुराग-
स्तस्यामलो द्विजसुतस्य, तदेष वृद्धः।
सिष्णेह तत्र धनिकः सुतरां कुमारे
(स्नेहः परत्र हृदि सत्त्वविशेषहेतोः)।।६२४।।

एकस्मिन् दिवसे तमाह युवकं वृद्धो धनी ब्राह्मणो,
भ्रातः! स्याद्यदि ते स्पृहा, चल मया तत्तीर्थयात्राकृते।
गार्हस्थ्यस्य भवे दिनानि कतिचित्कष्टात्तु मुञ्चावहै
(यद्यप्यत्र गृहस्थता तु कथिता धन्या, परं कष्टदा)।।६२५।।

ऊचेऽयं मुदितां युवा प्रकटयन् 'वार्ता त्वितश्चोत्तमा
कैवान्या भवितुं क्षमा प्रियतरा?, तीर्थाटनस्य क्षणः।
केनाप्येष तु भाग्यशालिपुरुषेणैवात्र लभ्यो भवेत्-
सज्जोऽहं भवता समन्तु चलितुं (कस्माद् विलम्बः शुभे?)।।६२६।।

लब्ध्वा स्वात्ममनोऽनुकूलमपरं स ब्राह्मणः सङ्गिनं
वृद्धोऽत्यन्तमभूत्तथाहि मुदितः सङ्गे युवानञ्च तम्।
नीत्वाऽयाद् गृहतः प्रसन्नमनसा सत्तीर्थयात्राकृते
(यात्रायां भवसङ्गिनः प्रियसुहृत्सङ्गो हितायाऽऽत्मनः)।।६२७।।

ब्रह्मावर्त-गया-प्रयाग-निमिषाऽयोध्यापुरी-काशिकाऽऽ-
दिश्रीस्थानविलोकनं व्रजधरां प्राप्तावुभावेव तौ।
कुर्वन्तौ, कुमुदं वनानि बहुला-भाण्डीर-लौहानि च
श्रीवृन्दा-मधु-भद्र-काम्य-खदिरं विल्वञ्च तालं महत्।।६२८।।

तेषु द्वादश तद्वनेषु तदिमौ कृत्वाऽत्र वृद्धो युवा
यात्राञ्चोपवनेषु तद्व्रजधरातीर्थान्तरेष्वप्यतः।
नन्दग्राम-वृषात्मजानिवसतिश्रीवास-गोवर्धनाऽऽ-
दीनां सुन्दरदर्शनं पुनरपि स्थानेऽत्र कृत्वा ह्युभौ।।६२९।।

विश्रामं कुरुतो दिनानि कतिचिच्चागत्य वृन्दावने,
चक्रेऽथाल्पवयाश्च विप्रतनयः सम्पूर्णयात्रासु सः।
वृद्धस्यास्य तथाहि सर्वविधिकं शुश्रूषणं सेवनं
निःस्वार्थेन, ततोऽधिकं स मुदितो वृद्धो धनी ब्राह्मणः।।६३०।।

वृद्धोऽयं स्वकृतज्ञतां प्रकटयन् गोपालजीमन्दिरे
प्रोचे विप्रसुतं तु तं 'मम कृता भ्रातस्त्वया तादृशी।
सेवाऽपूर्वमयी, पितुस्त्वपि सुतः कर्तुं क्षमो यादृशीं
सेवां स्यान्न निजस्य (सेवनकृतिर्भावान्न संबन्धतः)।।६३१।।

अनेन कार्तज्ञ्यभरेण तेऽहं
संपीड्यमानोऽस्मि यथाऽऽन्तरेण।
तच्चिन्तयेऽस्य प्रतिकारहेतोः
कुर्वीय किं ते हितमत्र साधु'।।६३२।।

तेनोक्तं द्विजसूनुना 'प्रकृतितः पूज्यो भवांस्त्वस्ति मे,
तद्वृद्धः प्रतिवेशिकश्च भगवद्भक्तः पितुर्मे समः।
अद्यत्वे गृहदूरमत्र सुकृती सत्तीर्थयात्री तथा,
धर्मो मे भवदीयसेवनमहो! सर्वप्रकारादतः।।६३३।।

किं कर्माऽत्र कृतं मयाऽनुचरता तावत्प्रशंसोचितं,
स्वं कर्तव्यमिदन्तु पालितमथ स्थाने मनुष्योचितम्।
हे पूज्याऽऽर्य! कृता न सम्प्रति भवत्सेवा कयापीच्छया,
किञ्चैतत्प्रतिकारशोधनमतो न्वावश्यकं? मन्मतम्'।।६३४।।

'न त्वं तु प्रतिकारमिच्छसि परं' वृद्धो जगाद द्विजः
'कर्तव्यं किमपीह मेऽपि भवति स्थाने, न यावत्त्वहम्।
बह्वल्पं प्रतिकारमद्य महतस्त्वस्योपकारस्य ते
कर्तुं स्यां प्रभुरत्र, मे न भविता तावत्तु शान्तिस्तथा ।।६३५ ।।

अस्ति तथा मम चाऽभिलाषा, त्वत्स्वसुताप्रिययोगम्।
तं कारयामि विवाहात्' (स्नेहरसेन हि बन्धः) ।।६३६ ।।

आश्चर्यं स युवाऽऽह तत्प्रकटयन् 'ब्रूते भवान् कीदृशीं
वार्तां, कुत्र भवांस्त्वियान्ननु महान्मानी कुलीनो धनी।
तावच्छ्रीपरिवारवान् जनपदख्यातो गृहस्थो महान्,
कुत्राऽहं द्विजजस्त्वमातृपितृको ऽनाथो ऽकुलीनस्तथा ।।६३७ ।।

संबन्धो भवतो ममाऽत्र किं?, संबन्धस्तु सदा समानयोः।
आचारे च गुणे मनुष्ययो'-(देया तत्सदृशाय वै सुता) ।।६३८ ।।

'कर्तव्यं पितुरस्ति योग्यपतिकं कन्याकृते चात्मनः
संसारे मृगयेत, देयमथ न ध्यानं विशेषं तथा।
तत्संपत्तिकुटुम्बवित्तविषये, शीलस्वभावान्वितः
कुत्राऽन्यत्र च मेलिता तव वरस्तुल्यः स्वकन्याकृते ।।६३९ ।।

तत्तुभ्यमेवात्मसुतां प्रदास्ये,
मत्प्रार्थनेयं नियतं त्वयाद्य।
साधुस्वभावेन तथाऽनुमन्या,
(वस्तु ग्रहीताऽनुमतं पिपर्ति) ।।६४० ।।

'कामं चैकमृतो भवांस्तु भविता, पत्नी च पुत्राः पुन-
स्ते ते ज्ञातिकुटुम्बिनश्च भवतः संबन्धमेतं कदा।
स्वीकर्तुं प्रभविष्णवस्तु नितरां श्रुत्वैव वार्तामिमां
ते क्रोत्सन्त्यनलोपमा' (हि सदसच्चारः समाजाश्रितः) ।।६४१ ।।

वृद्धश्चाह ततः समं दृढतया 'क्रुध्यन्तु सर्वे पुनः
कस्याप्यत्र किमंशिता? मम सुतां, दास्यामि, य चेषिता।
कश्चिच्छक्ष्यति वक्तुमेव किमदोबन्धे? परं स्वीकुरु'
(स्वीकारो व्यवहारसिद्धिरथवा स्वस्मिन् स्थितिर्वस्तुतः) ।।६४२ ।।

‘आपत्तिर्नहि कापि मेऽस्ति करणे तु स्वीकृतौ, तत्परं
विस्मर्ताऽत्रगतां भवांस्तु निखिलां वार्तां च गत्वा गृहम्।
पत्नीपुत्रकुटुम्बिनां च पुरतस्तत्राऽऽग्रहस्यात्मनः
किञ्चिन्नापि चलिष्यतीह भवतः’ (संख्याबलं निर्णये) ।।६४३।।

वृद्धब्राह्मणको जगाद तरसा चावेशमागत्य तद्
‘गोपालं भगवन्तमस्मि कथये कृत्वाऽधुना साक्षिणम्
कर्ताऽहं निजपुत्रिकापरिणयं सार्धं त्वदर्थं त्वया,
विश्वासं त्वधुना करिष्यसि’ (परं साक्ष्यं हि साक्षिप्रभोः) ।।६४४।।

ईषद् विप्रसुतो जगाद शनकैः ‘साध्वस्ति वार्ताऽखिलं
ज्ञातं भावि तथापि तत्र वचनाद्’ गोपालजी सन्निधौ।
पुत्रीदानवचो विधाय धनिको विप्रः स वृद्धस्तथाऽऽ
गतो विद्यानगरं निवृत्य सह तद् (यूनैव कैश्चिद् दिनैः) ।।६४५।।

कन्यादानवचस्तु तत्र सहसा स्वावेशमागत्य तद्
दत्वाऽऽर्त्तस्तु स भूसुरः परमहो! स्त्रीसंततीनां पुरः
तां वार्तां गदितुं न सोहसमर्थः स्थानेऽत्र तस्याभवद्
(यो भावो भगवत्पुरो हृदि सतां, स्युर्यान्ति मध्येऽसताम्?) ।।६४६।।

एकान्ते स तथैकदा निजसुतं चोवाच वार्तामिमा-
मेवास्मिन् वचसि श्रुतेऽखिलगृहे द्वन्द्वं प्रवृत्तं क्षणात्।
आत्मत्वात्तु तथात्मजो बहिरभूज्ज्ञातुं विषं स्त्री पृथक्
सन्नद्धा परिवारिणश्च मिलिता ज्ञातेर्विधातुं पृथक्- ।।६४७।।

तस्यादुर्ननु तर्जनामलमहो! वृद्धः स तु ब्राह्मणः
किंकर्तव्यविमूढमानस इव स्थानेऽभवत्तस्य नो
दृष्टौ याति तु किञ्चिदेव, ‘यदहो! कुर्यां किमस्यां स्थितौ’?
तद्यूनाऽत्र समं विभाव्य धनिको वृद्धमेलनेऽप्यद्य सः ।।६४८।।

कञ्चित्कालमसौ युवा तु स खलश्चक्रे प्रतीक्षां धृती
वृद्धो यत्स्वयमेव तन्निजवचस्तुल्यां करोतु क्रियाम्।
याताः किन्तु यदाऽधिका हि दिवसा यूना तदा चिन्तितं-
‘वृद्धः संभवमस्ति तन्निजवचो बाढं विसस्मार सः ।।६४९।।

तदेकवारं स्मरणं तदीयं
तु कारणीयं स्वयमेव गत्वा।
तस्यानुसारं करणं तदीयाऽऽ-
यत्तं पुनर्वाऽकरणं तथास्ति'।।६५०।।

यातोऽदश्च विचिन्त्य तस्य स युवा वृद्धद्विजस्यामुखे
तं दृष्ट्वैव तथा तदीयवदनं म्लानं युवानं गतम्।
ऊचे शुष्कमुखेन वृद्धधनिको 'भ्रातः प्रियाऽऽयाहि हे!
दृष्टस्त्वद्य बहोर्दिनात्' (परिचितं रागादिभावाश्रयम्)।।६५१।।

संवादे च तदत्र-तत्र विषये याते, युवा सोऽभणद्-
बाबाः! श्रीतुलसीवने व्रजगते गोपालजीसम्मुखे।
कन्यादानवचोऽर्पितं तु भवता मह्यं स्मरत्यात्मनः
(स्वस्थं न स्मरतीह यो हि भुवने तत्स्मारणं सौहृदम्)।।६५२।।

यावद्वृद्धजनोऽस्य तस्य वचसो यूनः किमप्युत्तरं
नादत्तापि, तु तावदेव धनिनः पुत्रस्तथाऽस्योपरि।
नीत्वा दण्डमधावदेतमवर्दत्किं नीच! रे! ते त्वियत्
स्थाने साहसमस्ति, वाञ्छसि ममाऽऽवुत्तो विधातुं स्वकम्।।६५३।।

गृहात्क्षणेनापसराऽमुना मे
न, लठ्ठमेवं नियतं तु हन्ता।
मध्याद्यतः स्याद् दलितः कपाल'-
(स्तमोविभेदे स्फुटमेति सत्यम्) ।।६५४।।

यूनस्तस्य निशम्य तच्च वचनं क्षोभस्तु जज्ञे महान्,
नासीद्दुःखममुष्य तत्परिणयाऽसंभावनातोऽधुना।
स्वस्यासावपमानतोऽज्वलदलं, दुःखं स्वकीयस्थितौ
जातं तस्य महत् (स्थितेरनुसृतेर्लोके नरो मीयते)।।६५५।।

'लोकेऽस्मिन्नभविष्यतां तु पितरौ, पार्श्वे तथा मे पणा-
श्चत्वारस्तदमुष्य साहसमभूत्किं? यत्प्रकारादतः।
कुर्यान्मे त्वपमानमेष? भवतु त्वप्यत्र किञ्चिन्न किं
कामं, नूनमतो ह्यदःपरिभवं कर्ता त्ववस्थान्तरम्।।६५६।।

स्वस्राऽमुष्य सहैव वा परिणयं कर्ता,ऽथवा जीवितो
भावी नैव' तथा विचिन्त्य स युवा पञ्चांस्तथाऽऽहूतवान्।
तत्पञ्चेषु समस्थितेषु युवकश्चादेस्तथान्तं कथां
सर्वामाह तदन्ततः कथयते'ऽन्यत्किञ्चिदीहेऽस्मि नो।।६५७।।

ब्रूयात्सम्प्रति वृद्ध एव भवतां बाबाः स्वधर्मेण-यत्
पञ्चानां पुरतो निमायिभगवद्गोपालजीमन्दिरे।
कन्यादानकृतेर्वचो मम कृते तस्यैव साक्ष्यं ददन्-
नाऽदाद्?' (धार्मिकवृद्धविप्रवचनं विश्रम्भणीयं सताम्)।।६५८।।

तत्पुत्रो ननु पूर्वमेव निदधौ चाध्याप्य तं प्रस्तुतं
वृद्धब्राह्मणकं, स तु स्वपितरं संबोधयित्वा न्यधात्।
'मिथ्या-सत्यमथाऽत्र किञ्चिदपि न ब्रूयाद् भवान् केवलं-
ब्रूयात्तत्समयस्य मे किमपि न (त्वेतावदेव) स्मृतिः।।६५९।।

मिथ्याऽप्यत्र न चास्ति, जल्पतु युवा-वार्ता (भवानेव) सा
चास्ते कस्य दिनस्य?' दुःखसहितं वक्तुं तथा स्वीकृतम्।
पुत्रस्नेहवशाच्च पञ्चपुरतः पित्रा,ऽत्र पृष्टो द्विजः
पञ्चै,र्जल्पति मन्दमेष 'मम नो सम्यक् स्मृतिः साम्प्रतम्।।६६०।।

वार्तेयं समयस्य कस्य' तदथ स्थाने त्वियत्येव तत्-
पुत्रो जल्पति मध्यमेव 'युवकस्त्वेषोऽकुलीनो द्विजः।
मिथ्याऽऽस्ते, पुरुषस्तु कश्चिदपरः पित्रा समं मे तदा
नासीदेव, तथैष एव वितथश्चासीदनाथो युवा।।६६१।।

वित्तं मे त्वपहर्तुमेष च पितुर्धत्तूरमेतं तथा-
स्थाने भोजयति स्म, वित्तमखिलं जग्राह त,त्साम्प्रतम्।
वार्तामेवमसौ पुना रचयते, कामं स्वकन्यार्पणा-
वाक्यं दास्यति मत्पिता कथमपि? (श्रीवत्स्वकन्या पितुः)।।६६२।।

इदृशदरिद्राकुलगृहहीने'।
(भवति वरो, योऽखिलगुणगीतः)।।६६३।।

ऊचुः पञ्चजनास्तमत्र युवकं 'किं भ्रातरेषोऽधुना
ब्रूते किं?, स्वसुताकदानवचनं वृद्धो यदा ते ददौ।

आसीत्तत्र तदाहि कश्चिदपरो लोकोऽपि, चासि क्षमः
साक्ष्यं कस्यचिदत्र दातुमधुना?(साक्ष्याश्रयो निर्णयः) ।।६६४।।

'गोपालजीभगवतः पुर एव पूज्यो
वृद्धस्त्वयं कथयति स्म, तथा विहाय।
गोपप्रभुं, मम न कोऽपि परोऽस्ति साक्षी'
गम्भीरतायुतवचो युवको बभाषे।।६६५।।

वृद्धो यथा कथयति स्म तथैकपञ्चो
हासस्वरेऽमलवचोऽस्य निशम्य चेदम्।
'आहर्तुमत्र भुवि किं तदहो! क्षमस्त्वं
गोपालमेव वदितुं समयेन साक्ष्यम्?' ।।६६६।।

आवेशमितोऽयं चोच्चैस्तु युवाऽऽह।
'कल्पे, त्वय किं?श्रीगोपाहरणेऽहम्।।६६७।।

एवास्मिन् वचसि श्रुतेऽत्र निखिला जातास्त्ववाचो जनाः,
सर्वो विस्मयमेव तत्प्रकटयन् प्रोवाच चैकस्वरे।
'आम् बाढं, यदि चात्र साक्ष्यकरणे गोपालकं त्वाहरे,-
गोपालस्तव सर्वपञ्चपुरतः साक्ष्यञ्च दद्यात्तदा।।६६८।।

त्वया समं ध्रुवं वयन्त्वदःसुताविवाहकम्।
प्रसह्य कारयामहे' (हि पञ्चता सहायता)।।६६९।।

ऊचे तद्वचसाऽमुना प्रकटयन् वृद्धः स्वमोदं द्विजो
'बाढं, युक्तमथेदमेव, यदि तत्साक्ष्यस्य हेतोरयम्।
गोपालप्रभुमाहरे,त्त्वदुहितुः संपादयिष्याम्यहं
नूनं सार्धमनेन तत्परिणयं' (यज्ञो हि साक्षिप्रभुः) ।।६७०।।

विश्वासोऽस्य तु वर्तते स्म सुहृदो वृद्धस्य 'यन्मे वचः
कर्तुं पूर्णमहो! निमायिभगवान् भक्तात्मनां वत्सलः।
एतद्विप्रकुमारमानमवितुं साक्ष्यं प्रदातुं तथाऽऽ-
गन्ताऽत्र ध्रुवमेव' (सौहृदहृदां लोकोत्तरं कल्पनम्)।।६७१।।

विश्वासः परमस्य तस्य हृदये चोद्दण्डपुत्रस्य किं
शक्नोति स्म कदा यदत्र भवितुं पाषाणमूर्तिस्त्वपि।

साक्ष्यं दातुमथाऽऽगताऽत्र भविता स्थाने क्षमा कर्हिचिद्?
(विश्वासेन समस्थितिर्भवदशा तर्काऽप्रतिष्ठात्मिका)।।६७२।।

एवं तेन च चिन्तितं 'स्वयमियं युक्तिस्तु भद्राऽधिका
प्राप्ता, प्रस्तरमूर्तिरत्र न तथाऽयाता तु साक्ष्यं पुनः।
दातुं, मे न निजानुजापरिणयः संपादनीयोऽमुना'
तच्चेदं स विचिन्त्य शीघ्रमवदद् (भावानुसाराऽऽग्रहः)।।६७३।।

'वार्ताऽस्ति मे त्वनुमतेय,मथागतश्चेद्-
गोपालजीप्रभुरहोऽत्र पुरोऽखिलानाम्।
साक्ष्यं ददीत वचसोऽस्य तदाहि नूनं
स्वाऽऽवुत्तमेतमहमेव परं विधाता'।।६७४।।

विश्वासी युवकस्तथात्र विषये सर्वैश्च हस्ताक्षरं
पञ्चैः कारितवान्, सुतेन सहितं तद् ब्राह्मणस्यापि तद्।
यद्धस्ताक्षरमग्रहीद्यदि तथाऽऽगन्ताऽत्र साक्ष्याप्तये
गोपालो, ध्रुवमेतयोः परिणयं तत्कारयिष्यामहे।।६७५।।

श्रीवृन्दाविपिनं जगाम निखिलैस्तल्लेखयित्वाऽञ्जसाऽ-
सौ गत्वा भुवि तत्र कातरगिरा गोपालजीप्रार्थनाम्।
चक्रे चाधिकमेव दैन्यसहितं, भक्तार्तनादं तथा
श्रुत्वा च प्रकटं बभूव भगवान् गोपाल एवाऽऽह तम्।।६७६।।

'याहि पुरस्तत्रैव तथाहं सुप्रकटं भूत्वा तव साक्ष्यम्।
सर्वपुरो दास्यामि समक्षं' (युक्तिरुचिर्विद्यापुरवासी)।।६७७।।

ऊचे तद्युवकः 'कृतिर्न भगवन्नेवन्तु सेद्धाऽत्र मे,
जाने न, प्रकटो भविष्यति भवान् रूपेण केनात्मनः।
विश्वासोऽस्तु न वाऽस्तु तत्र भवतो रूपे च तेषां नृणा-
मेवादःप्रतिमात्मना चलतु तत्सार्धं मया भो! भवान्'।।६७८।।

श्रीभगवान् दध्वान हसित्वा 'किं चलतीहाऽश्मप्रतिमाऽपि।
पूर्णतयाऽदोऽसंभववाक्यं' (संभवचर्या सर्वमता कौ)।।६७९।।

'किञ्चिन्नापि भवत्कृते प्रभो! स्थानेऽसंभवमस्ति कुत्रचित्।
मत्सङ्गे चलनीयमस्ति ते, रूपेणैव तथाऽमुना विभो!'।।६८०।।

भक्ताधीननिजस्थितिस्तु भगवान्, तेनाखिलं स्वीकृतं,
ब्रूते 'त्वं चल चाग्रतोऽस्मि चलिता त्वत्पृष्ठतोऽत्र क्षितौ।
त्वं विभ्रम्य न मत्पुरः पथि तथा द्रष्टाऽसि पृष्ठे, पुन-
र्यत्र द्रक्ष्यसि वै निवृत्य तदहं तत्रैव भावी स्थिरः'।।६८१।।

जगाद भक्तोऽल्पबलं प्रदाय
'ज्ञातं कथं मे भविता तदा, यत्-।
अवश्यमायाति भवान्ममानु,
स्यान्मध्यतस्तु प्रतियन् कदाचित्?'।।६८२।।

प्रोचे विहस्य भगवान् 'भविता श्रुतौ ते;
पश्चात्क्वणच्चरणनूपुरकध्वनिर्मे।
आयामि तेऽनु यदहं त्वमुनैव बोधे'-
(र्विद्यात्तदीयकृपयाऽऽन्तरबाह्यगं तम्)।।६८३।।

भक्तः स्वीकृतवांस्त्विदञ्च वचनं, सोऽसौ चचालाग्रतः
पृष्ठाच्च श्रुतिगोचरोऽस्य भगवत्पादक्वणद्ध्वंसकः।
जानाति स्म तथाऽमुनैव भगवांस्त्वायाति मत्पृष्ठतः
(श्रद्धाभक्तिवशात्सदैव भगवत्सङ्गानुभूतिः सताम्)।।६८४।।

निर्मायाऽध्वनि भोजनञ्च भगवद्भोगञ्च नानाऽर्पयन्,
तद्विद्यानगरस्य सन्निधि मथाऽऽयातो युवाऽलौकिकः।
जिज्ञासुर्नगरस्य सन्निधिमितोऽज्ञानी न तस्थौ स्थिरो
(भक्तार्तः प्रथमोऽस्ति यद्यपि, परं ज्ञानं तथाप्यद्वयम्)।।६८५।।

चित्ते तेन कृतं-'ममाऽत्र भगवान् पृष्ठेऽस्ति वा न स्फुटं,
पश्येयन्तु तदेकवारमधुना, तच्चिन्तयित्वाऽथ सः।
पृष्ठे दृष्टिमनेष्ट, तच्च भगवांस्तस्थौ हसित्वाऽनुग-
स्तत्रैव स्वगतां मुदं प्रकटयन् प्रोवाच गोपालजी-।।६८६।।

स्थास्यामि चात्रैव भुवि त्विदानीं
दास्यामि साक्ष्यं त्वित एव तेऽहम्।
हूत्वाऽऽनयात्रैव च तांश्च लोकान्'
(ह्यल्पोऽपि यत्नो निखिलैर्विधेयः)।।६८७।।

लब्ध्वैवं द्विजपुत्रको भगवदादेशं स यातो युवा
ग्रामं, श्रावितवांश्च सौहृदवतो लोकाँल्लपित्वाऽखिलान्।

गोपालस्य निमायिनो भगवतो वृत्तान्तमस्यागतेः
(स्यादेकः सुकृती कृती जनपदे, श्रेयोऽमुनैवात्मनाम्)।।६८८।।

तद्वृत्ते श्रुत एव सौहृदवतो ग्रामस्य सर्वे नरा
नार्यश्चाखिलबालवृद्धयुवका धावन्त एवाऽऽगताः।
द्रष्टुं श्रीप्रतिमासुरूपभगवद्गोपालबालप्रभुं
(वात्सल्यस्थितिरस्ति चेतसि निधौ संसारिणां पूर्णतः)।।६८६।।

भूमौ तत्र विलुट्य ते च निखिलाः स्थाने प्रणामं पुरः
कुर्वन्तस्त्वभवंस्तथा भगवतः साष्टाङ्गमभ्यागतेः।
कश्चिच्छुष्कफलं पुरो भगवतश्चानीय चादीधरत्
पुष्पैरेव करोति कोऽपि भगवद्गोपालपूजां तथा।।६६०।।

एवं प्राभृतकानि तद्भगवतो नानाविधञ्चाग्रतो
ह्यपर्यन्ते स्म, तथार्चनञ्च सततं तस्य प्रियं प्राचलत्।
तत्साक्ष्यग्रहणस्य वै भगवतः कस्यापि नाभूत्पुनः
स्थाने साहसमेव (सौहृदवशात्संकोचभावोद्गतिः)।।६६१।।

वृद्धब्राह्मणपुत्रको मुदितया चात्यन्तमेवात्मन-
स्तद्यूना भगिनीविवाहमधुना संपादयामास सः।
वृद्धः स द्विजकः पुनश्च युवकश्चोभौ मिलित्वा सदाऽ-
वात्तामेव तथार्चने भगवतो (योगः सतोः सङ्गमः)।।६६२।।

दूराद्दूरतरं तथा भगवतश्चाभ्यागतेस्तत्समा-
चारोऽत्र प्रससार, दर्शनकृते स्थाने सहस्रं जनाः।
गोपालस्य निमायिनो भगवतः स्माऽऽयान्ति नित्यप्रति
(प्रास्मार्षू रससारमद्भुतरसं सत्काव्यसाहित्यिकाः)।।६६३।।

वृत्तान्तो विदितो यदाऽभवदयं तद्देशराज्ञस्तदा
गोपालस्य कृते सतो भगवतः संपादयामास सः।
एकं भव्यविशालमन्दिर,मसौ श्रीसाक्षिगोपालजी-
नाम्ना तत्समयाच्छ्रुतः' (प्रभुरलं सर्वस्य साक्ष्यं क्रियात्)।।६६४।।

नित्यानन्दयतिर्महाप्रभुयतिं भक्तैः समं संस्थितं
गौराङ्गं स्म कथामिमां कथयते, तन्निर्निमेषः प्रभुः।

शृण्वन्नस्ति निमायिमायिकमुपाख्यानं पवित्रं महन्-
नित्यानन्दयतौ च मौनमधुना याते प्रभुः पृच्छति-।।९९५।।

'अत्र पुनर्विद्यानगराच्छ्रीसाक्षिकगोपालः कथमाप्तः?
श्रावय नश्चैतामिह वार्तां' (सच्चरिताऽऽसङ्गो भुवि सङ्गः)।।९९६।।

यावत्स क्षणमत्र नित्ययतिकः पश्चाच्च मौनस्थिते-
श्चैतन्यं कथयन् बभूव 'समये देशे तदा ह्युत्कले।
राज्यं भागवतस्तथाहि परमः कुर्वन्नभूद् विक्रमी
देवश्रीपुरुषोत्तमो भुवि महाराजः प्रजासत्प्रियः।।९९७।।

तद्विद्यानगरस्य भूपसुतया सार्धं विवाहं तथा
स्वेच्छां स प्रकटां विधातुमकरो,दस्मिन् स विद्याधिपः।
देवश्रीपुरुषोत्तमाय न निजां कन्यामदा,त्कुर्वता
ह्यस्वीकारमनेन चोक्त-(मिह नुः कार्यो वचःसंयमः)।।९९८।।

'नाहं निजसुतां कर्ताऽवरनरि।
देवालयभुवः संमार्जनकरे'।।९९९।।

देवश्रीपुरुषोत्तमः परमतः क्रुद्धश्च भूत्वा महा-
राजस्तन्नगरे चकार सुयशा विद्यापुरे चाक्रमम्।
स्थानश्रीभगवत्पुरीश्वरजगन्नाथस्य चानुग्रहा-
ज्जित्वा तद्विजयाभिधञ्च नगरं राज्ये निजेऽमेलयत्।।१०००।।

चक्रे स्वेन समञ्च तन्नृपसुताकन्याविवाहं तथा,
सोऽयं प्रार्थितवांस्तदैव सुमनाः श्रीसाक्षिगोपालकम्।
प्रस्थातुं पुरुषोत्तमस्य नगरीं भद्रां सुभद्रां पुरीं
(पृथ्वीभागजयी नृपो हि हरते तद्रत्नमात्माश्रये)।।१००१।।

सम्राजोऽस्य च भक्तिभावमुदितः श्रीसाक्षिगोपालजी
प्राप्तस्तद् भगवान् पुरीं, कतिपयं कालं विरेजेऽत्र सः।
श्रीनाथायतने तथैव ललिते माणिक्यसिंहासने
(सम्मानातिशयस्य दानमतिथेर्गार्हस्थ्यसत्संस्कृतिः)।।१००२।।

आसीत्तत्र पुरातनोऽपरपुरीस्थाने जगन्नाथजी,
प्राप्तोऽयं नव एव सौहृदमनाश्चासीद्वराकोऽधुना।

किञ्चित्प्रेमकलिर्द्वयोर्ननु तदुत्पन्नो मधुप्रेमिणो-
(र्माधुर्ये कलहस्वरूपमपरं ह्याद्ये रसे जायते)।।१००३।।

देवश्रीपुरुषोत्तमः प्रियमहाराजोऽत्र चैकत्र तत्-
स्थाने नोचितकं निधानमुभयोर्बुद्ध्वाऽनुरागात्मनोः।
तत्क्रोशत्रयदूरमत्र सृजति स्माऽन्ते पुरीतः प्रियं
गोपालस्य च 'सत्यवादि'-कलितग्रामस्य पार्श्वे गृहम्।।१००४।।

तस्माद्दूदयमानोऽत्रैवैष तथाऽऽस्ते।
(लोकः प्रियलोकः, पन्थाः प्रियपान्थः)।।१००५।।

गोपालस्य तथाऽस्य चास्ति महिमा (जाने) त्वपारो महान्,
प्राप्ता द्रष्टुममुं तथोत्कलमहाराज्ञी सती चैकदा।
लब्ध्वाऽमुष्य च वक्रमीक्षणमहो! राज्ञी मनोमोहनं
मुग्धाऽभूदथ तत्स्पृहाऽभवदलं (लोकोत्तरा सत्स्पृहा)।।१००६।।

'स्यान्नासिका भगवतो यदि चास्य विद्धा,
गोपालमेतमधुना परिधापयेयम्।
मुक्तां स्वनासिकगतां बहुमूल्यकां तत्-'
(स्थाने हि दत्तमपरं तनुते सुतोषम्)।।१००७।।

अन्यत्रैव दिने बभूव मधुरस्वप्नस्तु राज्ञ्याः, स्थितो
(मन्ये) तत्पुरतो गृणाति भगवाञ्छ्रीसाक्षिगोपालजी।
'कर्ता पूर्णमहं तथा तव मनोवाञ्छां महाराज्ञि! हे!,
ज्ञातं नास्ति मदीयपूजकजने, नासाऽस्ति विद्धा मम।।१००८।।

श्वो ध्यानपूर्वकमतस्त्ववलोकय त्वं
छिद्रं तथास्ति नियतं मम नासिकायाम्।
स्वं मौक्तिकं मुदितया परिधाप्य तत्त्वं
पूर्णां क्षमाऽसि ननु कर्तुमतः स्ववाञ्छाम्'।।१००९।।

प्रातोऽसावथ चोत्थितैव हि महाराज्ञी महाराजकं
वृत्तान्तं प्रियमेतमाह, च महाराजस्तदैव द्रुतम्।
गोपालस्य निरीक्षिता भगवतो नासा तदीयार्चकै,-
स्तस्यां छिद्रमवश्यमस्य मिलितं (भावस्वरूपः प्रभुः)।।१०१०।।

तर्हि महाराज्ञी च महार्घां चातिशयप्रेम्णा निजमुक्ताम्।
तत्प्रभुनासायां निसिषेच' (ह्यर्पणताऽऽप्या भक्तजनेभ्यः)।।१०११।।

नित्यानन्दसुहृच्च मौनमभवत्स्थाने लपित्वा त्वियद्,
यातः प्रेम्णि तु गद्गदः प्रभुरहो! श्रुत्वा तथेमां कथाम्।
तां तत्रैव निशां स्म यापयति तद्गोपस्य साक्षिश्रियो
ध्यायन्नेव महाप्रभुश्च सुमना मूर्तिं मनोमोहिनीम्।।१०१२।।



# श्रीभुवनेश्वर-महादेवः

३६. हरिहर-लपनमखिलपुरुषार्थः।
जीवानामिह मानववर्गो गणितस्तूत्तमकोटौ
तेषां मान्द्यं त्रिविधं सद्भिश्चिन्तनतः संकलितम्।
चेष्टामन्दा प्रज्ञामन्दा चायुर्मन्दा जनता
व्यर्थकर्मजालैरिह बद्धा ह्रियते तमो दुरन्तम्।
हरिनामोच्चारणमथ तस्या हर-संबोधनमनिशम्
क्षुत्तृट्पूर्तिं पुष्टिं तुष्टिं सिद्धिप्रीतिं यच्छति।।

प्रातः साक्षिकगोपमङ्गलमहन्नीराजनादर्शनं
कृत्वा श्रीलमहाप्रभुश्च चलितो गन्तव्यमार्गाय सः।
आसीदुत्कटतां पुरीश्वरजगन्नाथप्रियाऽऽलोकनाऽऽ-
काङ्क्षाऽस्य त्वधिकाधिकञ्च हृदये यान्ती निमायिप्रभोः।।१०१३।।

अग्रेऽसौ च यथा-यथा स्म सरति स्थाने तथैव प्रभो-
रत्यन्तं प्रबलायते भगवतः संदर्शनेच्छाऽधुना।
आरेभे स्वपिकाभतुल्यगलतो मार्गे चलन्नेव तत्-
सङ्गी दत्तमुकुन्दकः प्रियपदं संकीर्तनस्येदकम्-।।१०१४।।

३७. रक्षणमिह कुरुतां श्रीरामः।
अनुकूलप्रतिकूलपरिस्थितिसंकुलसंसृतिमध्ये
प्रतिकूलायामपि रामाननरमणीयाऽऽभाऽवतु माम्।
पातु श्रीकृष्णोऽमलरासः।
प्रकृतिजनिततरुवनसमधर्मो जीवसमूहो लोके
काले काले ह्युदयं विलयं गच्छति साधारणतः।
तरुपरिणामः कुसुमविकासः स्वादुरसं फलमस्मात्
मनुजयोनिफलकमनीयाकृतिकृष्णाक्षररसरसनम्।।

सर्वैस्तत्र निजस्वरः सहृदयैर्दत्तस्वरे मेलितः,
श्रीसंकीर्तनरम्यतानलयतस्तत्राऽभितः शुश्रुवे।
नादस्तज्जनशून्यनीरवपथेऽदःकीर्तनस्यैव तद्-
(रिक्ते ह्न्नभसीह भावरसितं स्थाने हि कौति स्फुटम्)।।१०१५।।

भावावेशगतो महाप्रभुरतो नृत्यञ्च कुर्वन्नभून्,-
नासीत्सम्प्रति बोध एव सुहृदां कस्यापि किञ्चित्तु यत्।
गच्छामोऽत्र वयन्तु कां प्रति दिशं, मन्त्राद्यथा कीलिता
लोका वा, स्वयमेव चाग्रमचलंस्तत्सर्वदेहाः प्रति।।१०१६।।

गन्तव्यं दिशया कया, वयं यास्यामो ननु कुत्र साम्प्रतम्।
एतच्चिन्तनमेव तेषु नो कस्याप्यत्र तथाहि विद्यते।।१०१७।।

मग्नः प्रेम्णि तथा महाप्रभुरसावानन्दनृत्यं पुनः
कुर्वंस्तद् भुवनेश्वराभिधमथाऽऽप्नोत्तीर्थकं सङ्गिभिः।
एकं बिन्दुसरं सरोऽमलजलं तत्रास्ति पूतात्मकं
(यत्राऽऽस्ते शिव एव, तत्र नियतं सर्वं पवित्रं भवेत्)।।१०१८।।

अस्त्येतस्य सरोवरस्य विषये स्थाने तथैवं कथा-
ह्यानीयाम्बु तु बिन्दु-बिन्दुमितकं सत्सर्वतीर्थाम्बुतः।
चक्रे चास्य सरोवरस्य च महादेवः प्रतिष्ठां शिव-
स्तस्माद् बिन्दुसरोऽस्य नाम भुवि वा बिन्दोस्त्वभूत्सागरः।।१०१९।।

तीर्थेऽयं कृतवांश्च बिन्दुसरसि स्नानं स्वभक्तैः प्रभु-
स्तत्पश्चाद् भुवनेश्वराभिधमहादेवालये यातवान्।
गौराङ्गो भुवनेश्वरस्य भगवच्छ्रीकस्य संमूर्च्छित-
स्तावन्मञ्जुललोकमोहनमहन्मूर्तिप्रियाऽऽलोकनात्।।१०२०।।

बाह्यज्ञानमितो निमायिसुमनाः किञ्चित्क्षणानन्तरं
त्वारेभे हरकीर्तनं, सहृदयैर्भक्तैः समञ्च प्रभुः।
उत्थाप्योपरि शम्भुशङ्करपदं गात्वा च हस्तावुभौ
कुर्वन्नृत्यमभूद्बलेन (मुदिता संज्ञायते चेष्टया)।।१०२१।।

लोकाः शतशः श्रीगौरं परिवृत्य।
तस्थुः परितोऽमुं (साधुः शिवभावः)।।१०२२।।

३८. शम्भो! जगत्प्रबोधं वितरतु।
देहगेहममतादिकजाले जन्तुमात्रसममनुजाः
बद्धाः शिव! शिव! विद्यालब्ध्यै त्वदनुग्रहमीक्षन्ते।
त्वन्मायासंसृतिपतितानां त्वन्मात्रैकोद्धारक!
महादेव! भवसङ्कटमखिलं हर! हर! हरतां स्मरताम्।।

प्राचीनं भुवनेश्वरामिधमहादेवस्य तन्मन्दिरं
त्वत्यन्तं ननु विद्यते,ऽयमपरश्चायं पुराणः शिवः।
भाषन्ते भुवनेश्वरस्थलमिदं वै गुप्तकाशीं त्वपि
स्थानीया (निखिलं पदं ममतया वैकुण्ठमच्छात्मनाम्)।।१०२३।।

तद्दूराद् भगवन्तमेतमपरं दूरात्सहस्रं तथाऽऽ-
पद्यन्ते भुवनेश्वरं शिवहृदो द्रष्टुं प्रिया यात्रिणः।
एतन्मन्दिरकेऽर्चनैव चलति स्थानेऽस्य भक्तैः सदा
(पूजाहेतुकमेव शङ्कर! भवे प्राप्ता वयं तेऽर्चकाः)।।१०२४।।

दीपांश्च ज्वलतो विलोक्य परितो जातो यथा प्रेम्णि स
ह्युन्मत्तोऽत्र महाप्रभु,स्त्वतिशयं स्थानं मनोहारि तत्।
पूजाप्रस्तृतवस्तुभिस्त्ववगतं प्रायोऽभितोऽभूत्स्वतः
(स्थानं वस्तुविशेषसज्जितमहद्रूपं प्रमोदास्पदम्)।।१०२५।।

मन्दिरे बहुक्षणञ्च कुर्वन् कीर्तनं महाप्रभुर्बभूव।
व्यश्रमद् दिनेऽत्र तत्र चैव (स्थानसाधुताफलं सदाप्तिः)।।१०२६।।

रात्रौ चाखिलकर्मतः प्रभुरयं भूत्वा निवृत्तो यदा
सार्धं भक्तजनैः कथोपकथनं कर्तुं निषण्णस्तदा।
चैतन्यप्रभुपादपद्मयुगलं मन्दञ्च संवाहयन्
ब्रूते दत्तमुकुन्दकः (सहृदयः सेवाक्षणायोद्यतः)।।१०२७।।

'निर्दिष्टं भवतैव सत्प्रियजने स्थाने निमायिप्रभो!
"तीर्थे यत्र तु यातु तस्य नियतं श्रव्यं हि माहात्म्यकम्।
माहात्म्यश्रवणं विना भवति तत्तीर्थस्य चार्धं फलं"
वाञ्छामो भुवनेश्वरस्य तदिह श्रोतुं महत्तां वयम्।।१०२८।।

एकान्तप्रिय-शैलकाननधरावासी च भोला त्वयं
बाबाश्चोत्कलदेशमेतमपरञ्चागत्य किं संस्थितः?।
काशीं चैष विहाय चात्र विदधे किं गुप्तकाशीं नवा-
मेतां, ज्ञातुमिदं तथास्ति महती काङ्क्षाऽत्र नो हार्दिकी।।१०२९।।

तस्मान्नो भुवनेश्वराख्यभगवत्पापच्छिदं संकथा-
मस्मत्कर्णयुगं निशाम्य कृपया पूतं करोतु प्रभो!।

मालिन्यं भगवन्निबन्धिघटनासंकर्णनामात्रत-
श्चैवान्तःकरणस्य नश्यति तथा शुद्धिर्हृदो जायते'।।१०३०।।

श्रुत्वा दत्तमुकुन्दकस्य च तथा प्रश्नं मनाक् स स्मयन्
ब्रूते श्रीप्रभुजी 'मुकुन्द! तव तु प्रश्नोऽयमत्युत्तमः।
अत्रैतत्प्रभुभूतनाथभगवत्प्राप्तेः कथाऽस्त्यद्भुताऽ-
त्यन्तञ्चैव (तथाहि भूतकरुणाऽम्भोधिर्विचित्रः शिवः)।।१०३१।।

एषा स्कन्दपुराणके शिवकथा विस्तारतो वर्णिता,
तामेवास्मि निशामयामि सुहृदो युष्मांश्च संक्षेपतः।
एतां पुण्यकथां तथाहरिहरश्रीलप्रभावान्वितां
ध्यानेन शृणुता-(ऽत्र पावनकथाऽऽसङ्गो हि पुण्यं कलौ)।।१०३२।।

आसीत्काशिनिवासिनामपथतश्चैव प्रसिद्धः शिवः
पूर्वं, त्यागविरागमूर्तिभगवान् वाराणसीमेव सः।
लीलावासनिजस्थलीं रचितवां,स्तत्सर्वकर्माऽद्भुतं,
तत्तं ह्यौघडनाथमत्र जनता ब्रूते (शिवः स्वप्रियः)।।१०३३।।

श्रीबाबौघडनाथजीभगवतस्तत्र प्रतीतो मनाक्
श्रीकाशीपुरि चापि दाह इव तत्त्यक्त्वा स्वकाशीं भवान्।
कैलासप्रियपर्वतस्य शिखरे गत्वा तथोवास स
(क्षीराब्धौ यतते हरिः प्रतिनिधिः शैले हरो दीक्षते)।।१०३४।।

शून्याऽभूदथ काशिकाऽत्र, विदधे स्वां राजधानीं नृप-
स्तत्रैको, विभुभूतनाथभगवत्पूजां स कुर्वन्नभूत्।
भक्त्याऽऽत्यन्तिकयैव, घोरमकरोद्राजा शिवाराधनं
यावद्वर्षसहस्र,मुग्रतपसा तस्याशुतोषः शिवः।।१०३५।।

तुष्टोऽभूदथ भूत्वा तस्याग्रे प्रकटञ्च।
ब्रूते याचितुमेतं स्वं भक्तं वरमेषः।।१०३६।।

राजा बद्धकरद्वयाञ्जलिरसौ प्रोचे विनीता'त्प्रभो!'
भावार्द्रे करुणस्वरे'ऽहमधुना याचे भवन्तं तु किम्?।
संसारोत्तममान्यवस्तु निखिलं तेऽनुग्रहादस्ति मे
संप्राप्तं धनधान्यराज्यपृथुताश्रीमत्कुटुम्बादिकम्।।१०३७।।

एकैवास्ति ममेच्छाऽत्यन्तोग्रा, न कदाचित्।
भावी पूरयितुं तां मे भक्तस्य समर्थः'।।१०३८।।

तोषस्य प्रभुभूतनाथशिवजी वेगे बभाषे द्रुतं
'राजन्! किञ्चदपीह तु त्रिभुवने याते प्रसन्ने मयि।
नादेयं मम वस्तु, याच नियतं येच्छाऽस्तु ते तां परं
निःसङ्कोचहृदा-(ऽत्र सात्त्विकहृदो दुन्वन्ति सङ्कोचिनः)।।१०३९।।

दैन्यं सोऽधिकमेव तत्प्रकटयन् राजाऽऽह सारल्यत-
'श्चेन्मह्यं वरमेव दातुमपरं भूत्वा प्रसन्नो भवान्।
इच्छत्यद्य, तदा वरं प्रियतमं दत्तामदश्चैव मे-
कर्तुं स्यां प्रभुरत्र निर्जितमहं श्रीकृष्णचन्द्रं मृधे'।।१०४०।।

ब्रह्माण्डेऽत्र सदाऽर्कमोहनमदे मत्तः स्थितश्चौघडो-
दानी श्रीलसदाशिवः परिणतिं योगी न तु ध्यायति।
भक्तानां हि वरस्य दानविषये, कामं त्वपीहाऽवनौ
याचेत्कोऽपि कथं न यादृशवरं, तेनात्मनोऽप्यस्य नो।।१०४१।।

कामं क्लेशपदानुभूतिरपरा भूया,त्परं शिक्षितं
नैवानेन वरप्रदानसमये नाकारकोच्चारणम्।
श्रुत्वा राजवचो भवान् कथयति 'क्षोभस्व राजन्नहि,
श्रीकृष्णाद् ध्रुवमेव ते युधि जयं संप्रापयिष्याम्यहम्।।१०४२।।

सज्जीकृत्य तथा चल त्वमधुना युद्धाय सैन्यं निजं
त्वत्पृष्ठे चलिताऽस्मि युद्धभुवि ते रक्षानिमित्तं पुनः।
सार्धं भूतपिशाचवैतलगणैः सर्वैः स्वकीयैरहं
(दातुं काङ्क्षितवस्तु भक्तिमुदितोऽत्यन्तं ह्युदारः शिवः)।।१०४३।।

एतत्पाशुपतास्त्रकं मम तथाऽऽदेहि, त्वमेतेन तच्-
छ्रीकृष्णस्य रसात्मनो भगवतः सम्पूर्णसेनाभरम्।
भावी ध्वंसयितुं क्षमो' मुदितयाऽत्यन्तं तथोक्त्वा शिवो
राज्ञे पाशुपतास्त्रकं स्फुटमदा-(च्छम्भुर्ह्युदारात्मकः)।।१०४४।।

दिव्यास्त्रमेवं शिवतश्च लब्ध्वा
राजाऽभवद्वै परमं प्रसन्नः।
आक्रामदेवं भगवन्तमेष
(स्थाने विधेयः प्रभुताप्रयोगः)।।१०४५।।

अन्तःस्थो भगवांस्त्वसौ घट-घटज्ञाताऽस्ति, चास्याखिलं
जातं ज्ञात,मनेन चिन्तित'महो ! भक्तस्तथा मे शिवः।
राज्ञा तेन तपोऽभिमानिमनसाऽप्यस्याभिमानोऽभवत्-
क्षोद्यः सम्प्रति तद्द्वयोरपि मयाऽस्थानेऽभिमानः सता।।१०४६।।

लोके योऽस्ति शिवप्रियः, स सुहृदो विष्णोर्ममापि प्रिय-
स्तद्द्वावेव निमायिनो मम तथा भक्तौ शिवोपासकौ।
कर्तव्यं मदनाशनं तदुभयोर्मे वर्तते साम्प्रतं
युक्तं मे मदहारिनाम भवितुं शक्नोति तस्मात्परम्'।।१०४७।।

मत्वेदं भगवान्मुमोच निजकं तद्राजसैन्योपरि
स्वं चक्रन्तु सुदर्शनं, भगवता चक्रं प्रयुक्तं सता।
तत्सर्वप्रथमं नृपस्य तु शिरः कृत्वा कबन्धात्पृथग् -
वैकुण्ठे प्रजिघाय तं भगवतः (स्पर्शानुरूपं फलम्) ।।१०४८।।

यस्माद् भगवतः क्रोधोऽपि भवति।
नूनं वर इव (स्वामी हितकरः) ।।१०४९।।

३९. वन्दे श्रीलसुदर्शनचक्रम्।
संसृतिचक्रं जीवनचक्रं कालचक्रमिह सततम्
व्यवहारक्षणचालनहेतुश्चलदपि नास्ति सुबोधम्।
शोकमोहभयसंवृतमनसां सामान्यानां गूढम्
उद्बुद्धानां जिज्ञासूनां स्पष्टं ज्ञेयं सुतराम्।
उद्धारे केषाञ्चित्परमिह सच्चक्रं क्षणमुदयति,
चक्रं यस्य सुदर्शनरूपं, भागवतं तन्नयनम्।।

अस्यानन्तरमत्र भूपतिबलं सम्पूर्णमस्तं तथा
कृत्वा व्यस्तमहो ! सुदर्शनमदश्चक्रं शिवस्योन्मुखम्।
आक्राम,न्निजमस्त्रशस्त्रमखिलं त्यक्त्वा च बद्ध्वा शिवो
मुष्टिं तच्च पलायितो (नहि शिवक्षेमोऽपि सङ्गेऽसतः) ।।१०५०।।

आसीत्कुत्र तु गन्तुमेव जगतो बाह्यं क्षमो, यात्यसौ
यत्कुत्रापि पलाय्य, चक्रमनुगं तस्याऽऽप तत्रैव तत्।
त्रैलोक्ये निजरक्षणाश्रममयं कुत्राप्यदृष्ट्वा शिवो
भूयोऽस्यैव निवृत्य तद्भगवतः प्राप्तः प्रभोराश्रये।।१०५१।।

भूमौ च विलुट्य त्वस्तौत्करुणं सः।
(स्तोत्रं करुणाब्धिं दुग्धे भगवन्तम्) ।।१०५२।।

'अस्मादमोघास्त्रभयाज्जगत्पते !
नः पाहि, मायावशगास्तव प्रभो ! ।
वयं प्रभावं तव विस्मरामि हे !
(माया स्मृतिं लोपयतीह संतता) ।।१०५३।।

अज्ञानतश्चैव कृतोऽद्य नौ प्रभो !
घोरापराधोऽयमथ त्वमेव हे ! ।
एकाश्रयोऽस्यास्तु समस्तसंसृते-
(श्चक्रं तथा, यत्सततं सुदर्शनम्) ।।१०५४।।

ब्रह्मा तथा विष्णुरहन्तु ते कला-
कोट्यंशतुल्यास्त्वपि नो भवेम वै।
प्रत्येकरोम्णां बिलमध्यमाविशेद् -
ब्रह्माण्डकं विश्वपतेऽर्बुदन्तु ते।।१०५५।।

मायापराधीनदशा वयन्तु हे !
नाथाऽस्ति माया भवतो हि दासिका।
अस्मान् यथा नर्तयतेऽत्र सा, वयं
तथैव नृत्यामि नटात्मसन्निभाः।।१०५६।।

कोऽत्र नोऽपराध एव, तु स्वके वशेऽस्मि नैव।
तत्कृपां तथा विधेहि यन्मनस्तव स्मृतौ हि'।।१०५७।।

श्रुत्वैवं भगवान्निमायिशिवजीवाणीं पुनः कातरां
तेजःसंवरणं चकार सुहृदां स्वामी स्वचक्रस्य च।
शुद्धप्रेष्ठगुणो हसन् कथयते 'हे शूलपाणे ! शिव !,
(स्वामी सेवकगाढभक्तिवशगः कश्चित्करोत्यन्यथा ?) ।।१०५८।।

चक्रस्यात्र सुदर्शनस्य भवतः स्थाने मदं केवलं
स्पष्टं चूर्णयितुं मयैव सुहृदा त्वासीत्प्रयोगः कृतः।
येन स्याद्भवतो निमायिमनसोऽद्धा मत्प्रभावः स्मृतः
(किं किं बोधयितुं स्मृतिं न कुरुते स्थाने हितैषी सुहृत्) ।।१०५९।।

आसीन्नोपरि मत्प्रहारकरणाऽऽकाङ्क्षा तव स्वात्मनो,
ब्रह्माण्डेऽस्ति भवांस्तु सौहृदवतः साक्षात्स्वरूपन्तु मे।
सामान्येन च यः प्रियोऽस्ति भवतोऽद्धाऽसौ ममापि प्रियः,
सन्तुष्यामि, पुनर्निमायिकभवद्भक्तिं करोत्यत्र यः।।१०६०।।

यो मूर्खोऽत्र ममार्चनन्तु कुरुते स्वात्मन्नुपेक्षाञ्च ते,
लोके तत्र कदापि नापि भवितुं शक्तः प्रसन्नस्त्वहम्।
त्वत्सेवाकरणं विनाऽत्र भुवने नो मत्प्रसादांशिकः
स्यात्कश्चिद् भवितुं क्षमस्तु (परमं सत्यं शिवाराधनम्)।।१०६१।।

सम्प्रति हृष्टस्ते बहु चास्मि। याचतु किञ्चिन्मां वरदानम्'।।१०६२।।

तत्प्रोवाच शिवो विनीतहृदयः 'स्वामिन्! स्वभावस्त्वयं
ते सत्त्वस्य सनातनो, निजदयाभावोऽपराधिष्वपि।
देयः संततमेव, सम्प्रति भवत्पादाम्बुजेऽत्र प्रभो !
किं कुर्यां स्वनिवेदनं ? (मधुमये सर्वं स्वभावे मधु)।।१०६३।।

एषैवास्ति तु याचना मम, भवान् स्वस्यैव पादाश्रये
मां भक्तं धरताञ्च तिष्ठतु सदा त्वत्पादयोश्चिन्तनम्।
न स्यात्ते त्वमितप्रभावजगतो मे विस्मृतिः कर्हिचि -
च्चाशीर्वादमथैवमेव कुरुतां' (श्रीः स्वामिनं याचते)।।१०६४।।

श्रुत्वैवं भगवान्मुदं प्रकटयन् वाक्यं शिवस्याभणद्-
'ह्यत्यन्तं वृषभध्वजाऽस्मि भवति स्थाने प्रसन्नस्त्वहम्।
आसीस्त्वन्तु ममैव सर्वसमयात्स्थाता तथा सर्वदा,
(भिन्नौ केवलमात्रया हरिहरौ, धातुस्तु मूलेऽपरः)।।१०६५।।

गोप्यं पावनमेकमत्र परमं स्यान्मे जगन्नाथजी-
क्षेत्रं ज्ञातमवश्यमेव भवतस्तत्क्षेत्रमस्ति प्रियम्।
मेऽत्यन्तन्तु, समन्ततोऽस्य परमं भूमिः पवित्रा तथा
यावद्विंशतियोजनं (वसुमती स्थाने विशिष्टायते)।।१०६६।।

जीवो योऽपि निवासमत्र कुरुते, भक्तस्तु मे सर्वतः
श्रेष्ठः सोऽस्ति, तथाऽस्तु काममथवा यस्यां स योनौ न किम् ? ।
अन्ते धाम ममैव नित्यपरमं प्राप्नोति, गत्वा भवान्
वासं तत्र करोतु (किं जनपदं नो यत्र वस्ता शिवः)।।१०६७।।

क्षेत्रञ्च भावि भवतो भुवि गुप्तकाशी -
नाम्ना प्रसिद्धमिह, तत्र च यो हि गत्वा।
संदर्शनं तव करिष्यति, तस्य पापं
याता क्षयं निखिलसञ्चितमीश ! सत्यम्'।।१०६८।।

लब्ध्वाऽऽगत्य शिवस्तथा भगवदादेशं वसन्नस्ति च
स्थानेऽत्रैव तु तद्दिनात्सहृदयः, क्षेत्रेऽत्र चागत्य यः।
सद्भक्त्या भुवनेश्वराभिधमहादेवस्य संदर्शनं
पुण्याख्यानमिदं करोति नियताऽऽसक्त्या शृणोति ध्रुवम् - ।।१०६९।।

भूत्वाऽघविमुक्तोऽनन्तस्य सुखस्य।
अंशी भवतीह' (श्रीरीशकृपायाम्)।।१०७०।।

आख्यानमेतदमलं वदनात्प्रभोस्ते
श्रुत्वा शिवस्य मुदिता निखिलाश्च भक्ताः।
आज्ञां विलभ्य सुहृदः प्रभुतो निशा सा
तत्रैव तैर्मुदितया सह यापिता च।।१०७१।।

प्रातर्नित्यविधेस्तथा भगवतो भूत्वा निवृत्तः प्रभुः
स्वैर्भक्तैर्भुवनेश्वरस्य सहितः कृत्वा च संदर्शनम्।
प्राप्तोऽसौ कमलाख्यसुन्दरपुरे, गत्वाऽखिलैस्तत्र तैः
सानन्दं विहितञ्च पुण्यसलिलामार्गीनदीस्नानकम्।।१०७२।।

गत्वा मन्दिरमेष तद्भगवतः श्रीमत्कपोतेश्वराऽऽ -
ख्यातस्याऽत्र शिवस्य भक्तसहितश्चक्रे निमायिस्तुतिम्।
पश्यन्नस्ति ततश्च दक्षिणदिशं, श्रीमत्पुरी च त्वितो
गव्यूतत्रयमात्रमस्ति (नयने प्रेष्ठोन्मुखेऽद्धा सताम्)।।१०७३।।

श्रीलजगन्नाथस्य विशालो मन्दिरकेतुस्तद्गतचक्रम्।
स्पष्टमथायातो दृशि चास्मा-(त्स्थानमपूर्वं यत्प्रियदृष्टिः)।।१०७४।।

दूरात्सम्प्रति मन्दिरस्य हि जगन्नाथस्य गौरप्रभुः
स्पष्टं लोकितवान् विशालमपरं दोधूयमानं ध्वजम्।
भूमौ दर्शनतस्तथैव पतितस्तस्य ध्वजस्य प्रभु -
र्मूर्च्छातो (दयितानुबन्धिविषयस्तत्तुल्य एव प्रियः)।।१०७५।।

मत्तः प्रेम्णि कदापि स स्म हसति स्थाने पुनः कर्हिचि -
द्रोदित्यत्र महाप्रभुः सहृदयश्चाग्रे तथा धावते।
संज्ञाशुन्यदशः पपात सहसा तच्चेतनायां गत -
श्चोत्थायात्र पुनः पुनश्च पतितः (प्रेमी भवत्यातुरः)।।१०७६।।

साष्टाङ्गं नमति प्रति ध्वजमसौ लम्बं पतित्वा क्षितौ,
कुर्वन्नेव पुनस्तथाहि नमनं चाग्रे चचाल प्रभुः।
भूयश्चैष तदेकवारमपरं भूमौ विलुट्याऽनमत् -
ह्युत्तस्थौ च पुनर्ननाम च पुन-(र्भूयो नतिः सत्स्थितिः) ।।१०७७।।

एवञ्चाश्रु निमायिभागवत-ना स्वाक्ष्णोस्तथा सारयन्
धूलौ चाथ पुनः पुनर्भुवि लुठन् संदर्शनस्येच्छया।
साक्षादुत्कटया स्खलन्ननु पतन् यामे तृतीये पुनः
प्राप्तः श्रीलनिमाय्यठारहमहन्नाला-समीपेऽमनाः।।१०७८।।

पृष्ठे भक्तगणोऽपि तस्य सुहृदः स्मायान्ति संकीर्तनं
कुर्वन्तो,ऽस्ति तथाह्यठारहपदो नालः पुरीसन्निधौ।
एकः सेतु,रनेन चैव तु जगन्नाथस्य पुर्यां सतो
भद्रायां प्रविशन्ति यात्रिसुहृदः (सेतुर्नयत्याश्रयम्) ।।१०७९।।

स्थाने प्रेत्य च तत्र स प्रभुश्चैतन्यः पतितश्च मूर्च्छितः।
तत्राप्ताः सुहृदोऽपि पृष्ठतः (सौहार्दं सुहृदो हि सर्वतः)।।१०८०।।



# श्रीजगन्नाथजीदर्शनान्मूर्च्छा

४०. हृष्यति स, प्रभुशरणापन्नः।
प्रभुनामोच्चारणमिह सततं तद्रूपस्मृतिरनिशम्
श्रीमल्लीलाचिन्तनमखिलं रसनामानसचित्तैः।
प्रियतमधामाश्रयणं तन्वा सम्पादितकृत्यानाम्
मानवतनुधारणमानवतास्फुटदर्शनमसमोर्ध्वम्।।

किञ्चित्किञ्चिदभूदठारहपदं प्राप्तस्य नालं प्रभो-
र्बाह्यज्ञानमथाऽऽस्त चिन्तितसमस्तत्रैव चाल्पं भवान्।
आस्तामस्य च लोचनेऽत्र रुदती वृत्ते ह्युभे लोहिते
भ्रूभङ्गौ च समुत्थिता-(विह सतस्ते तेऽनुभावाः सताम्)।।१०८१।।

उद्गच्छन्ति तनौ स्म चास्य निखिला भावास्तथा सात्त्विकाः,
किञ्चित्स प्रकृतौ स्थितः किमपि तद्भावादिवाऽचेतनः।
ऊचे चाधिकमेव सम्प्रति तयोर्मध्यस्थितावेव तद्
भक्तान्नम्रतया भवां(स्तु सुजनो नम्रोक्तिहार्दार्पकः)।।१०८२।।

'सङ्गे चोपकृतं ममाऽतिशयितं सर्वैर्भवद्भिस्त्वितः
किञ्चान्या भवितुं क्षमा ह्युपकृतिश्चैवाधिका भ्रातरः!।।
मां नानाविपदः पथो ननु परित्रायाऽखिलैः प्रापितो
युष्माभिर्भुवमात्मनः, प्रियपुरीं नेता सखा ह्यात्मनः।।१०८३।।

यूयं चेदभविष्यताऽत्र मम नो सङ्गे, न जाने तदा
मोघं यानभवं क्व कुत्र, वचसोऽप्यस्यापि नो निश्चयः।
आसी,द्यावदथाऽऽगतोऽपि नहि वाऽहं स्थानमेतत्क्षमः,
युष्माभिर्मम कारितं स्वकृपया श्रीमत्पुरीदर्शनम्।।१०८४।।

एवं सौहृदसङ्गतः सुमनसां जातः कृतार्थस्त्वहं,
सङ्गे धारणमेतदेव भवतां यावद्विचारः कृतः।
इच्छा सम्प्रति यत्र वास्तु सुहृदां तत्रैव यान्तु प्रियाः!,
सङ्गेऽहं भविताऽधुना न भवतां' (सङ्गप्रियः खिद्यते)।।१०८५।।

रुन्धानो हसितं निजं कथयते नित्योऽवधूतः प्रभुं
'सङ्गेऽस्मान् यदि नो निधास्यति, कदा सङ्गे वदामैव ते।

स्थातुं, स्थानमिदं यदा ननु वयं प्राप्ता, जगन्नाथजी-
प्रेयोदर्शनहेतुकन्तु चलनं तद्दास्यतीहाऽऽत्मनाम्'? ।।१०८६ ।।

मूर्धानं ननु चालयन् प्रभुरतो ब्रूते गभीरस्वरे
'नेदं भावि, चलन्तु नो मम पुनः सङ्गे भवन्तोऽधुना।
चेदिच्छा भवतां सुदर्शनकृते वाऽऽयान्तु पश्चात्तु मद्-
यान्त्वग्रे त्वथवा तदा, मम परं सङ्गे न यातुं क्षमाः ।।१०८७ ।।

ब्रूत किमग्रे चाथ पुनर्वा। तिष्ठथ पृष्ठे?' (साधुरसङ्गी) ।।१०८८ ।।

मन्दं स्मयन् जल्पति तन्मुकुन्दः
'प्रभो! भवानेव चलत्वथाग्रे।
त्वत्पृष्ठमेवात्र वयन्तु चाप्ताः,
सर्वत्र यामो ननु पृष्ठमेव' ।।१०८९ ।।

आसीच्च श्रवणं महाप्रभुरियच्छ्रीमज्जगन्नाथजी-
प्रेयोमन्दिरसम्मुखन्तु महता वेगेन धावत्ययम्।
मन्ये कश्चिदरण्यमत्तगजकः स्वोन्मादिकावस्थितो
ग्रामे कुत्रचिदस्तु तर्ह्युपगतो, दृष्ट्वा तथा तं भयात् ।।१०९० ।।

धावन्तो विकलाश्च सन्तु पशवो ग्राम्यास्त्वितो वै ततो,
दृष्ट्वा तादृशमेव मन्दिरमुखं चोन्मत्ततावस्थितौ।
अस्यां, गौरनिमायिसुन्दरयतिं धावन्तमेतं प्रभुं
यातारोऽत्र च तत्र सर्वपथिका मार्गे दधावुर्द्रुतम् ।।१०९१ ।।

संभ्रम्याऽपसृतास्तथा तु बहवो भागे परस्मिन् पुनः
पन्थानं बहवो विहाय सहसा चैकत्र भागेऽसरन्।
धावन्ते बहवो मतिभ्रमवशात्पृष्ठोन्मुखञ्चैव तु
(व्यामोहावसरः सतोऽपि वशतो लोके क्षणं जायते) ।।१०९२ ।।

चिन्तां कामपि नो महाप्रभुरयं कस्यापि कुर्वन्नहो!
यातो मन्दिरसम्मुखः सहृदयो धावन्नवक्रं तथा।
सिंहद्वारमथ प्रविश्य च भवाञ्छ्रीमन्दिरस्याञ्जसा
प्राविष्टो जगमोहने च सहसा द्रागेव विप्लुत्य तत् ।।१०९३ ।।

संप्राप्तो भगवत्पुरस्त्ववितथं स्थाने सुभद्राबल-
श्रीनाथेक्षणमत्र सौहृदवतः कृत्वैव गौरप्रभोः।

उन्मादो ह्यनुरागिणो ननु पराकाष्ठाकपारन्त्वितो
(ह्युन्मादः परमात्मनि व्यवहृतौ लोकोत्तरस्यात्मनः)।।१०६४।।

आवेशे महति त्वितश्च भगवच्छ्रीविग्रहालिङ्गनं
कर्तुं मन्दिरकाऽऽन्तरप्रतिमुखं सोऽयं दधावाऽपरः।
अस्मिन्नेव तथान्तरे प्रभुममुं श्रीमन्दिरावेक्षका
मध्ये चैव जनास्तथाहि रुरुधुः (सीमा प्रियप्रेमिणोः)।।१०६५।।

मध्ये मन्दिररक्षकाऽऽगतिवशाद् भूमौ पपात प्रभु-
र्भूत्वा सम्प्रति मूर्च्छितः, स्ववपुषः संज्ञानमस्यास्ति तत्।
किञ्चिन्नापि, यथा ह्यचेतननरो निर्जीवतुल्यस्त्वसौ
तत्रासीज्जगमोहने च पतितः (प्रेमाभिनेताऽपरः)।।१०६६।।

विस्मृत्याऽत्र च दर्शनार्थिजनता श्रीमज्जगन्नाथजी-
प्रेयोदर्शनमस्य दर्शनमभूत्सर्वाऽधुना कुर्वती।
श्रीमन्मन्दिरकर्मचारिनिवहः पर्याप्तकं यात्रिण-
स्तस्थुस्तं परिवृत्य तत्र परितो (रक्षा-दिदृक्षाऽभिदा)।।१०६७।।

स्वस्य तु तस्यामेव दशायाम्। अस्ति विमूर्च्छः संपतितोऽयम्।।१०६८।।

तत्रैव क्षणके तथोत्कलमहाराजस्य विद्यालय-
प्राचार्यो बुधसार्वभौमपदवीश्रीवासुदेवप्रधीः।
आसीद्दर्शनहेवते भगवतः प्राप्तश्च तन्मन्दिरे
(संयोगः समये स्थले हि विधितः सद्ग्राहकग्राह्ययोः)।।१०६९।।

दृष्टिः कुर्वत एव तद्भगवतः संदर्शनं तस्य तु
श्रीगौराङ्गमहाप्रभोरुपरि च स्थाने पपाताऽपरा।
तल्लोकोत्तररूपसौभगमहातेजस्विदेहस्य स
स्थाने दर्शनमात्रतोऽपरिचितश्रीमन्निमायिप्रभोः।।११००।।

यातो हि स्वयमेव तं प्रति तथाऽद्धाऽऽकर्षितः सद्ग्रही
गत्वाऽयं प्रभुसन्निधौ द्रुतमभूद् दृष्ट्वा तथोच्चस्थितिम्।
आसीदेष निभालयन् प्रभुदिशं स्थानेऽनिमेषं सुधी-
र्यावत्कालमथाधिकं (ह्यनुपमं गृह्णाति दृक् कस्यचित्)।।११०१।।

आसीदेव महाशयस्तु सुतरां स न्यायवेदान्तयोः
शास्त्राणां ननु पण्डितोऽपरिमितोऽद्धा वासुदेवः परम्।

आसीद् ज्ञानमथास्य चोत्तममहो! ग्रन्थेऽपि चालङ्कृता-
(वालङ्कारिदिशा 'रसः स इति वै' स्थायी स्वभावोऽयते)।।११०२।।

भावानुभावमृदुशास्त्रविकारवर्गै-
र्भेदप्रभेदनिवहैरपि नायिकादेः।
आसीदसौ परिचितो, रसशास्त्रदृष्ट्या
गौरस्थितिं स ननु मेलयति स्वचित्ते।।११०३।।

तिष्ठन्नेव पुनः स चेतसि तथाऽऽसीच्चिन्तयन् 'नुस्तनौ
भावानां प्रणयस्य नाम महतां शक्यः प्रकाशस्त्वियत् ?।
उद्दीप्ता युगपत्तु चात्र निखिलाः सत्त्वा विकारास्तथा
तेषां संवरणेऽपि नायमपरः स्थाने समर्थः पुनः।।११०४।।

एतत्कालसुदीप्तसात्त्विकदशाऽसौ सर्वथाऽलौकिकी
तस्मादस्य निमायिनोऽस्ति (घटते सत्त्वैर्महामानवः)।
उद्रेके प्रणयस्य या स्थितिरभूच्छ्रीराधिकायास्तथा
या शास्त्रेष्वधिरूढनामकमहाभावः पुनर्वर्णितः।।११०५।।

सत्यं, सैव दशाऽस्ति साम्प्रतमहो! यूनोऽस्य संन्यासिनः,
शास्त्रेषु प्रणयस्य यावदधुना भावः प्रगाढस्त्वियान्।
आसीत्केवलकं मया तु पठितः प्रेष्ठं प्रति श्रीप्रभुं,
तेषां नोदयता तनौ दृशि गता कस्यापि चाद्यावधिम्।।११०६।।

प्रत्यक्षं कृतमद्य तस्य तु महाभावस्य मे दर्शनं,
गौराङ्गो ध्रुवमेव चास्ति युवकः संन्यासिवेषी त्वसौ।
दिव्यः कोऽपि महानरस्त्वनुपमो लोकोत्तरोऽलौकिकः,
स्पष्टं दर्शनतः प्रतीतिमयतेऽयं गौडदेशोद्भवः'।।११०७।।

तिष्ठन्नस्ति स सार्वभौमसुमनाः संचिन्तयन्नेव तनू-
मध्याह्नस्य तथाहि भोगसमयः प्राप्तः समीपे, परम्।
मूर्च्छायास्त्वधुनापि नो सुमनसो भङ्गो बभूव प्रभोः
(सत्प्रेमस्थितिगा क्षणात्सुमनसां मूर्च्छा सती भज्यताम्?)।।११०८।।

भट्टाचार्यमहाशयः प्रभुमतोऽस्यामेव मूर्च्छास्थितौ
साहाय्येन तु मन्दिरस्य सुमनाः सत्सेवकानामयम्।

निन्ये श्रीलनिमायिनं ननु समुत्थाप्य स्वगेहं प्रति,
स्वच्छे सुन्दरलिप्तपूतविषये स्थाने तथैकत्र तम् ।।११०९।।

नीत्वा शाययति स्म, बालुकमये खण्डे जगन्नाथजी-
श्रीमन्मन्दिरदक्षिणे गृहमभूत्तत्सार्वभौमश्रियः ।
मार्कण्डेयसरःसमीप,मधुना नाम्ना प्रसिद्धन्तु यद्
गङ्गामातृमठस्य चास्ति (सुधियां वासः पवित्रस्थलम्) ।।१११०।।

तस्मिन्नेव तथा स्वसुन्दरगृहे स्थाने निधाय प्रभुं,
तद्देहस्य महाशयः स सुमनाः कुर्वन्नभूद्वीक्षणम् ।
नासाग्रे निदधौ प्रभोर्निजकरं श्रीसार्वभौम,स्ततो
मन्दं प्राणगतिस्तथैव परमं यान्ती प्रतीताऽभवत् ।।११११।।

प्रसन्नताऽभूदमुना महाशय-
श्रीसार्वभौमस्य च भट्टधीमतः ।
शुश्रूषणं सेवनमेष च प्रभोः
कुर्वन्नभूत्स्वेन कुटुम्बकेन तत् ।।१११२।।

अत्र श्रीप्रभुसङ्गिनः समहृदः स्माऽऽयान्ति पृष्ठे तथा
चत्वारः सुजना निमायिसुहृदो भक्ताश्च नित्यादयः ।
ते द्वार्येव च मन्दिरस्य मिलिताः पृच्छन्ति तद्रक्षिणो
'युष्माकं हरिसम्मुखस्थसुहृदां ज्ञातं कथ भ्रातरः! ।।१११३।।

गौडधरादेशीययुवैकः केवलसंन्यासी तनुगौरः ।
अत्र तथाह्यल्पक्षणपूर्वं दर्शनमाप्तः सम्प्रति कर्तुम्?' ।।१११४।।

ऊचुस्तान् सुहृदो द्रुतं प्रहरिणो'ऽस्माभिः कृतं दर्शनं
तस्याऽऽमामधुना निमायिकमहाराजस्य संन्यासिनः ।
अत्यन्तं ननु सुन्दरोऽस्ति, सुहृदो जातं(न जाने-)ऽस्य किं?
मूर्च्छांतो जगमोहने स पतितः कृत्वैव सद्दर्शनम् ।।१११५।।

गेहं स्वमाचार्यकसार्वभौमो
निन्येऽधुनैवाल्पमथैव पूर्वम् ।
तस्यैव यूयं ननु सङ्गिनः किं?'
(सौभाग्यमस्यां प्रियसङ्गिलाभः) ।।१११६।।

उक्तञ्च नित्येन 'वयञ्च सर्वे
तस्यैव भृत्याः, प्रभवोऽत्र यूयम्।
श्रीसार्वभौमस्य गृहस्य मार्ग-
प्रदेशने नः परदेशिनां किम्?'।।१११७।।

उक्तं तै'रधुनैव तैर्द्रुतमितं, यास्यन्ति शीघ्रं तदा
प्रायः सम्भवमस्ति चैव भवतां मार्गे मिलेयुस्तु ते।
गत्वा त्वत्र पुरश्च दक्षिणदिशं संयान्तु तत्रैव त-
न्मार्कण्डेयसरःसमीपमपरं दीर्घं यथाऽस्त्युन्नतम्।।१११८।।

श्रीसार्वभौमस्य बुधस्य गेहं
प्रष्टा यमेवात्र स एव वक्ता।
तथाधिकं सम्भवमस्ति नूनं
प्राप्ता भवेयुः पथि चैव ते वः'।।१११९।।

एवं तद्वचनं मुखात्प्रहरिणां श्रुत्वा च नित्यादय-
स्ते तामेव दिशं तु चेलुरधुना, तत्रैव मार्गे क्षणे।
भट्टाचार्यकसार्वभौमसुधियः प्राप्तो भगिन्याः पति-
र्गोपीनाथपदो निमायिसुहृदां श्रीमन्दिरान्निःसरन्।।११२०।।

गोपीनाथबुधो निमायिकभुवस्त्वासीन्निवासी नव-
द्वीपस्यैव, च पूर्वतः परिचयोऽस्याऽऽसीन्मुकुन्देन तत्।
श्रद्धाभावुकता प्रति प्रभुमपि स्थानेऽस्य चासीद्धृदि
(ह्यादर्शे विमले निमायिनि सतां शुद्धस्वरूपग्रहः)।।११२१।।

आचार्यं विनतो ननाम दृशिगं दत्तो मुकुन्दस्तु तं,
गाढालिङ्गनकं मुकुन्दसुहृदः कुर्वन् प्रसन्नात्मना।
आचार्यो दिशते'ऽत्र कुत्र सुमनो! हे गायनाचार्य! तु
प्राप्तोऽत्र क्व भवानहो! ननु समाचारं प्रभोः श्रावय।।११२२।।

सन्ति महाप्रभुगौरस्तस्य तथाऽखिलभक्ताः।
ते कुशलं नदियायां?' (कौ कुशली तु निमायी)।।११२३।।

'सम्प्रत्येव वयं तथाहि चलिताः प्राप्ता' मुकुन्दोऽवदत्-
'संन्यासञ्च महाप्रभुस्तु जगृहे त्यक्त्वा गृहस्थाश्रमम्।

तेनैवात्र च सार्धमेव सुहृदा प्राप्ता वयं प्रेमिणा
(संसारे ह्यनुरागिणामनुपमो रागी निमायी मिलेत्) ।।११२४।।

भूत्वाऽस्मत्स पृथक् त्वठारहपदान्नालात्तथैवापरः
श्रीमद्दर्शनहेतवेऽपरमना धावन्निमाय्यागतः।
अस्माभिस्त्विह चागतैश्च विदितं यत्सार्वभौमो निजं
गेहं प्राज्ञमहाशयोऽनयदमुं (शिष्टो विशिष्टाग्रही) ।।११२५।।

श्रीसार्वभौमभवनाभिमुखं वयं वै
यान्तोऽभवाम निजकं तु निमायिनं प्रति।
सौभाग्यतोऽभवदहो! भवतोऽपि लब्धि-
र्यात्रा निमायिसुहृदां सफला परं नः' ।।११२६।।

'श्रीसार्वभौमस्य निवासगेहं
सर्वांस्तु युष्मान् चलिताऽस्मि नीत्वा।
चलन्तु पूर्वं भगवत्सुमूर्ते-
रायान्तु कृत्वा प्रियदर्शनन्तु' ।।११२७।।

'पूर्वं श्रीलमहाप्रभोर्ननु समाचारन्तु विद्मां वयं,
तत्स्वस्थाः प्रियदर्शनं भगवतो निश्चिन्ततापूर्वकम्।
कर्तारो, गृहमेव पूर्वमधुना श्रीसार्वभौमस्य नो
गौरप्राणहृदो भवांस्तु नयतां' हार्दं मुकुन्दोऽभणत् ।।११२८।।

श्रुत्वैवं वचनं मुकुन्दमुखतो जातः प्रसन्नोऽधिकं
गोपीनाथसुधीर्गृहोन्मुखमतस्तैः सार्वभौमश्रियः।
आचार्यश्चलितस्तथा परिचयं लब्ध्वाऽवधूतास्थया
नित्यानन्दपदे ननाम (विनयी हेतुं नतेरीहते) ।।११२९।।

कुर्वन्तो विषयां महाप्रभोर्वार्तामेव च पञ्च ते गृहम्।
प्राप्ताः सम्प्रति सार्वभौमकं (सर्वत्वं हि निमायिना सता) ।।११३०।।

गत्वाऽमी निखिलास्त्वचेतनदशायामेव तं लेभिरे,
चारब्धं परिवेष्ट्य तत्र परितो भक्तैः प्रभुं कीर्तनम्।
तत्कर्णे पतिते तथैव मधुरे संकीर्तनस्य स्वरे
कृत्वा हुंकृतिमास्त स प्रभु-(रहो! चैतन्यमास्वादनम्) ।।११३१।।

पुत्रस्त्रीसहितः समीपमिलितः श्रीसार्वभौमो गृही
शुश्रूषानिरतस्तथाऽपरजनाः सर्वे च तत्र स्थिताः।
उत्थानेन निमायिनः प्रभुसतो जाता प्रसन्ना बहु
(ह्युत्थानं त्वनिशं निमायिशशिनः पक्षद्वयाऽऽह्लादनम्)।।११३२।।

सर्वम्लानमुखेषु तत्र ददृशे मन्दस्मिताभाऽरुणा,
तद्भव्यं ननु सार्वभौमभवनं गुञ्जद् बभौ साम्प्रतम्।
श्रीसंकीर्तननादतः प्रकृतिगे किञ्चित्तदानीं प्रभौ
संमत्या गृहिसार्वभौमसुधियः सर्वे तु नित्यादयः।।११३३।।

भक्तास्तत्सुतचन्दनेश्वरयुताः श्रीमज्जगन्नाथजी-
प्रेयोदर्शनहेतवे च चलिता, गत्वा च तत्राखिलैः।
आप्तं सात्त्विकभक्तिभावसहितैर्भद्राबलाभ्यां जग-
नाथश्रीभगवत्सुदर्शन-(मलं दृष्टिप्रियः श्रीधरः)।।११३४।।

ददौ प्रसादं ननु चन्दनञ्च
स्रजं तथा देवलकस्त्वमीभ्यः।
सर्वं गृहीत्वा निजभाग्यशंसां
कुर्वन्ति गौराङ्गनिमायिभक्ताः।।११३५।।

भट्टाचार्यकसार्वभौमसुधियो नाम श्रुतं पाठकैः
सन्निष्ठैस्तु पुरैव, सम्प्रति सतः संक्षिप्तमावश्यकम्।
स्थाने तस्य महात्मनः परिचयादानं तथा ज्ञायते
(चैतन्यः प्रभुदत्तसाधुघटितः सत्प्रीतिलोकाकरः)।।११३६।।

प्रान्ते तत्र महाशयः स्वसमये श्रीसार्वभौमोऽपरः
सर्वेषां ननु बुध्यते स्म सुधियां विद्वांश्च नैयायिकः।
आसीत्ख्यातिरहो! चतुर्दिशमलं तच्छास्त्रबोधस्य तद्
(विद्वत्ताकिरणो हि भासयति तद्, यद्भासितं नोऽर्कतः)।।११३७।।

सर्वस्मिन्नपि वै तथेयति सति श्रीमन्निमायिप्रभोः
पूर्वं तस्य समागमस्य सुधियः सत्त्वात्मनो जीवनम्।
आसीद्भक्तिविहीनमेव, महती नासीत्तदन्तर्गता
व्यक्ता भावुकता तु यावदधुना (बीजाद्धि कालेऽङ्कुरः)।।११३८।।

आसीत्सा शशिकान्तनिर्मलमणौ गूढं यथाऽम्भोऽधुनाऽ-
व्यक्तावस्थितितस्तथैव मतिमच्छ्रीसार्वभौमात्मनि।
श्रीचैतन्यनिमायिगौरशशिनः प्राप्यैव संसर्गकं
प्रेयःशीतलसौख्यदाशुंजगतः शीघ्रं द्रवीभूय सा।।११३९।।

श्रीमद्भावुकता निरन्तरमभूत्स्थाने क्षरन्ती बहि,-
र्भट्टाचार्यकसार्वभौमसुधियस्तस्यैव हेतोस्तथा।
जातं नीरसजीवन्तु सरसं सर्वात्मना वस्तुतो
(व्यक्तिः साधुविभावयोगबलतः पात्रे रसः स्थायिनः)।।११४०।।

सदामहानन्दसमुद्रमध्ये
कुर्वन् किलोलं स च सार्वभौमः।
सुखस्य लोकोत्तरभावभूमे-
रास्वादनं यापयति स्म कालम्।।११४१।।



# आचार्यवासुदेव-सार्वभौमः

४१. अखिलं वैदुष्यं भोगार्थं, परमप्रीत्यै विरलम्।
नानायोनिषु मानवयोनिर्बुद्धिवैभवाच्छ्रेष्ठा
तत्र व्यवसायात्मिकबुद्धिस्त्वेका क्रियते कृतिना।
वस्तुतः स एव व्यवसायी संसृतियात्रामध्ये
अन्या भुक्त्यै, फलमिह मुक्तिश्चैतन्याऽच्युतयोगः।।

बुद्धिः शास्त्रभरे द्विधा निगदिता, त्वेका तथा लौकिकी
सा चान्या परमार्थवस्तुविषया, कार्यं न वै सेत्स्यति।
लौकिक्या परमार्थवस्तुनि पथि त्वस्त्वत्र विद्वान् भवान्
कामं किं न भवे कियानपि महान्, कामञ्च वार्तोन्नता-।।११४२।।

बुद्धौ रोहतु यावती तु भवतस्तस्याः फलं त्वन्तिमं
तावत्तीक्ष्णतथोन्नतस्थितिमतेः सांसारिकस्यैव तु।
प्राप्तिः केवलकं सुखस्य, कुरुते यावन्न लोके भवान्
बुद्धिं तां परमार्थसम्मुखमलं, तावत्किमप्यन्तरम्।।११४३।।

नो चापि त्वयि, कुक्षिपूरकजने विक्रीय काष्ठं जडे,
कृत्वा सोऽत्र परिश्रमं दिनमलं नित्यं तथा केवलम्।
संप्राप्नोति चतुष्पण,ञ्च कुरुते लोके यथा वै तथा
तेनैव स्वकुटुम्बपोषण-(महो! गेही तपस्वी स्वतः)।।११४४।।

तीक्ष्णस्वप्रतिभाप्रभावबलतो नित्यं भवानर्जति
श्रीरूप्यन्तु सहस्र-लक्ष-गणितं, तेनापि नो पूर्णतः।
संतुष्टिर्भवतो भवे भवति वै, शेषैव तिष्ठत्यतोऽ
-पि प्राप्तेरधिकाधिकं बलवती वाञ्छा धनस्यात्मनि।।११४५।।

उद्योगं कुरुतस्तथा भुवि धनप्राप्तावुभावेव तौ,
च प्राप्तं भवति द्वयोर्यदपि वै, तत्र स्वकस्वस्थितेः।
द्वावेवात्र न तिष्ठतः प्रकृतितस्तुष्टौ विपश्चिज्जडो
(तुष्टिर्भौतिकसंग्रहान्न भुवने स्वानन्दचित्सद्ग्रहात्)।।११४६।।

वित्तार्जके तदनु केवलशास्त्रवार्ता-
मध्याप्य पण्डितजने, च तथाहि मूर्खे।

विक्रीय काष्ठमरसं निजजीवनानां
निर्वाहकेऽन्तरमभूत्तु किमेव लोके? ।।११४७।।

४२. तुलसीदासदिशा- वैशिष्ट्यं नृषु, तस्यान्तःप्रियता।
मानवचित्तं भावनिधानं विधिना घटितं चित्रम्
नानासदसद्भावास्तस्मिन् वर्तन्ते सम्मिलिताः।
यावत्कामादीनामसतां भावानामाधारः
यच्चित्तं, तावत्तत्पण्डितमूर्खौ कथमिह भिन्नौ?।।

उल्लेखोऽस्ति च यस्य पूर्वमपरस्थानेऽद्वितीयो निजे
काले न्यायविशारदो बुधवरोऽद्धा सर्वविद्याप्रधीः।
आचार्यः स हि सार्वभौमपदवीश्रीवासुदेवः प्रभो-
रासीद् दर्शनपूर्वमत्र भुवि तद्वत्पुस्तिकापण्डितः।।११४८।।

तद्बुद्धिः परमार्थमार्गचरणाऽनुष्ठातृका तावता
कालेनाभवदत्र नो, सुमनसः सम्पूर्णशक्तिस्तथा।
तावत्तु क्षयति स्म तस्य विदुषः प्रालोचने पुस्तकी-
विद्यायाः पुनरेव (बुद्धिजगतो ग्रन्थो महाग्रन्थिकृत्)।।११४९।।

आचार्योत्तमवासुदेवसुधियो गेहं नवद्वीपगे
श्रीविद्यानगराख्यकेऽच्छमनसः स्थाने तथाऽऽसीत्प्रियम्।
नामाऽमुष्य पितुर्महेश्वर इति श्रीशारदोपाधिकं,
शास्त्रज्ञश्च विशारदो वरहृदासीत्कर्मनिष्ठो द्विजः।।११५०।।

आसीदत्र तथाह्यधीतममुना गौराङ्गमातामह-
श्रीनीलाम्बरचक्रवर्तिसुधिया साकञ्च सौहार्दतः।
विख्यातो ननु पण्डितोऽतिसुयशा विद्वांश्च वाचस्पति-
र्भ्राता श्रीमधुसूदनः परमथाऽऽसीत्सार्वभौमश्रियः।।११५१।।

अस्य तथैकाऽऽसीद् भगिनी वै, सार्धमभूद्यस्यास्तु विवाहः।
पण्डितगोपीनाथसुनाम्ना (नामगतं माधुर्यमभीष्टम्)।।११५२।।

बाल्यादेव तु सार्वभौमसुमनोबुद्धिस्तथाऽत्यन्तकं
तीव्राऽऽसी,त्स तथैकवारमकरोद् यं पाठशालागतः।
पाठं स्वश्रवणे, द्वितीयगतितोऽभ्यासं विधातुं पुन-
स्तस्यावश्यकताऽस्य नाभव-(दहो! बुद्धेर्नृणामन्तरम्)।।११५३।।

जानाति स्म नहि प्रमादकरणं स्वाध्यायकार्ये त्वयं,
कस्याः शिक्षितमेव विस्मरणकं वाचोऽपि नैतेन तु।
सूत्रं कण्ठगतं स यच्च यमपि श्लोकं चकारैकदा,
मन्ये तत्स्मरणं बभूव विदुषोऽद्धा लौहलेखासमम्।।११५४।।

विद्यार्थिस्थितिको यदाऽमलनवद्वीपे स कुर्वन्नभूत्-
सद्विद्याध्ययनं, प्रधानमभवत्पीठं नवद्वीपकम्।
विद्यायाः स्थितमेकमत्र परमद्धा संस्कृतायास्तदा
(विद्या संस्कृतधारयैव वपते सत्प्रीतिमुक्तिं नृणाम्)।।११५५।।

छात्रा गौडविहारकोत्कलपदादिभ्यः समागत्य च
प्रान्तेभ्योऽमरसंस्कृताध्ययनकं कुर्वन्ति तत्र स्म तु।
काव्यं व्याकरणञ्च दर्शनमलङ्कारस्तथा ज्यौतिषं
वेदान्तोऽखिलशास्त्रकं समुचितं द्वीपे स्म चाध्याप्यते।।११५६।।

नव्यन्यायदिशस्तथेयदधिकं नासीत्प्रचारः परं
तावत्काल,मथात्र वा कथयितुं शक्यं तथैवंविधम्।
आसीदेव न तावदत्र तु नवन्यायो हि गौडावनौ,
न्यायाधीतिकृते स्म यान्ति मिथिलां गौडाखिलच्छात्रकाः।।११५७।।

तत्काले मिथिलैव मैथिलपुरी केन्द्रं प्रधानं नव-
न्यायस्य प्रथिता बभूव, सुहृदस्ते मैथिलाः पण्डिताः।
न्यायाधीतिकृते च योऽपि निकटे तेषान्तु सामान्यतः
प्राप्तः, प्रीतिपुरस्तमेव सुहृदाऽद्धा न्यायमध्यापयन्।।११५८।।

न्यायग्रन्थमदुर्न तं परममी नेतुं स्वसङ्गेऽस्य वै,
वङ्गच्छात्रनिरीक्षणं त्वतिशयं तद्ग्रन्थचौर्ये पुनः।
कुर्वन्ति स्म विशेषतो,ऽद्यसदृशं नासीत्तु काले तदा
देशे मुद्रणयन्त्रमत्र (गुरुतः श्रुत्वैव विद्याऽयते)।।११५९।।

ग्रन्थाः पण्डितपार्श्वमेव लिखिता हस्तैर्भवन्ति स्म वै,
तेषामक्षरधीमतां द्विजसतां सर्वस्वमासीत्तु तत्।
नादुः कर्तुमपीह तत्प्रतिलिपिं ते सर्वसाधारणाऽ-
नुज्ञां, ते तु विधाय कस्यचिदलं वर्षैः परीक्षां यदा।।११६०।।

तं योग्यं त्वधिकारिणं बुबुधिरे, कर्तुं ददुस्तन्महत्-
काठिन्येन च पुस्तकप्रतिलिपिं, तत्पुस्तकाभावतः।
द्वीपे कापि नवे तथाहि निहिता संपाठशालेव न
न्यायस्यात्र बभूव (मानवकृते सत्पुस्तकं निर्जरम्)।।११६१।।

भट्टाचार्यकरामभद्रविदुषा न्यायस्य चैका नव-
द्वीपेऽल्पा ननु चालिता प्रथमतः संपाठशाला,ऽपि सः।
आसीद्वै मिथिलाविदेहनगरान्न्यायं पठित्वाऽऽगतः
(सीतोत्पत्तिधरा मिमेल मिथिला भूमेर्निमिन्यायतः)।।११६२।।

तत्पुस्तकाभाववशात्परन्तु
स्वच्छात्रसन्देहनिवारणं सः।
नासीत्क्षमः साधु तथा विधातुं
(हि पुस्तकं तथ्यमतिप्रदीपम्)।।११६३।।

स्वभ्रात्रा मधुसूदनेन सहितोऽयं वासुदेवोऽपि वै
विद्यार्थी पठति स्म रामसुधियस्तत्पाठशालान्तरे।
शङ्कां यां कुरुते कुशाग्रमतिकोऽसौ वासुदेवो निज-
न्यायाध्यापकसम्मुखे, न नियतं लब्ध्वा तदीयोत्तरम्।।११६४।।

सन्तुष्टो भवति स्म नो, स च गुरुर्बोधत्यमुष्योग्रक-
प्रत्युत्पन्नमतिं, तथैकदिवसे प्रोचे रहोऽमुं पुनः।
'भ्रातस्त्वं ननु वस्तुतोऽसि भवितुं योग्योऽत्र नैयायिको,
बुद्धिस्तेऽतिशयैव चास्ति निशिता (सांख्येन बुद्धिर्महत्)।।११६५।।

शङ्कानां तव साधु-साधु च समाधानेऽसमर्थस्त्वहं,
मुख्यं कारणमस्य चेदमधुना न्यायस्य नो पण्डितः।
अस्मद्वङ्गभुवीह कोऽपि, पठितुं न्यायं ततः साम्प्रतं
गन्तव्या मिथिलापुरी भवति नो (न्यायोत्तमा मैथिलाः)।।११६६।।

अद्यत्वे मिथिलैव भारतभुवि न्यायस्य संमन्यते
मुख्यं केन्द्रमथापि मैथिलबुधाः कस्यापि चाध्यापने।
प्रत्याख्यानममी तु नो विदधते, तत्सन्निधौ योऽपि वै
याति त्वध्ययनेच्छया, मुदितया तं पाठयन्ति ध्रुवम्।।११६७।।

सङ्गे तु पुस्तकममी न ददत्यनुज्ञां
कस्यापि नेतुमिति सम्प्रति तद्दशायाम्।
यावद्वयं स्वभुवि पाठयितुं समर्था-
स्तावत्तु पुस्तकमृते ननु पाठयामः' ।।११६८।।

आत्मन्यायगुरोर्मुखात्सुमनसः श्रुत्वा तथैवं वच-
स्तद्दुःखं बहु वासुदेवसुमतेर्विद्यार्थिनो मानिनः।
जातं, तस्य दया गुरोर्विवशतां तामाकलय्याऽऽगता
(बाल्यादेव भवन्ति भावुकहृदः केऽपि क्षितौ मानवाः)।।११६९।।

तत्कालं ननु तेन चाध्यवसितं—न्यायस्य वङ्गावनौ
ग्रन्थाभावमयं विधास्यति परं दूरं त्वहं निश्चयी।
तद्बुद्धिस्मृतिशक्तिधारणबले त्वासीदमुष्याद्भुते
विश्वासो निजके (तथाद्भुतहृदः संकल्प एवाऽद्भुतः)।।११७०।।

विश्वासस्य तथादृढस्य सुमनास्तस्यैव वश्यङ्गतः
स प्राप्तो मिथिलां, तथाहि विंधिवन्न्यायस्य तत्राकरोत्।
स्थाने पाठसमाप्ति,मात्मगुरुतो शुश्राव वङ्गे च यत्-
तत्कात्स्न्र्येन गतं तथाह्यवितथं, तेनानुभूतं स्वयम्।।११७१।।

ग्रन्थानां नयनं त्वितः स्वविषये न्यायस्य, साधारणं
कार्यं नो, तदसौ चकार तु महाप्रामाणिकं चैककम्।
न्यायग्रन्थमथाद्भुतस्मृतिबलात्कण्ठस्थमाद्यन्तकं
(संसारी विषयं स्मृतौ हि धरते, प्रेमी निमायिप्रियम्)।।११७२।।

एवं कागदपुस्तकं तु न तथाऽऽनेतुं स सङ्गेऽशकद्-
धृत्पृष्ठे विमले स्वके परमहो! बुद्ध्या लिखित्वा, स्मृतेः।
साहाय्येन, निजे विलक्षणमतिः सङ्गे विनीयाऽऽगतो
न्यायस्याखिलपुस्तकं (दृढमनाः किं किं न कौ साधयेत्)।।११७३।।

न्यायस्यागत एव पण्डितवरः स्वां पाठशालां नव-
द्वीपे स्थापितवानयं, भवतु, यो ग्रन्थं त्वियन्तं तथा।
दीर्घं चाक्षरशो यथाविधि गुरुं प्रामाणिकं कण्ठगं
कृत्वा चात्मधराविशेषमतिमद्विद्यार्थिनां श्रेयसे।।११७४।।

आनेतुं भवतु क्षमः, स पुरुषोऽत्यन्तं कियान् बुद्धिमान्
विद्यायाः कियदुच्चकोटिरसवान् शास्त्रे कथं प्रीतिमान्।
स्वक्षेत्रस्य च भक्तिमान्ननु कियान् साधुक्रियावान्महान्,
स्थानेऽदस्त्वनुमातुमत्र भविता शक्तः स्वयं भावकः।।११७५।।

तस्याध्यापनदक्षता सरलता गम्भीरता प्राज्ञता
सच्छात्रप्रियता ससार सरलं ख्यातिर्विदूरस्थलम्।
अल्पैरेव दिनैर्गभीरविदुषोऽद्धा सार्वभौमश्रियो
(लोके कर्मठताऽत्र कर्मणि सतामादर्शतुल्यप्रभा)।।११७६।।

प्रान्तेभ्यो बहवोऽस्य सन्निधिमहो! तन्न्यायपाठेच्छुकाः
छात्रा न्यायतृषां स्वकीयमनसां शान्तामकुर्वन् स्वतः।
आगत्यात्र तदीयसुन्दरमृदुस्वध्यापनात्संश्रुतैः
पाठैः (शास्त्रतृषः शमो न सुकरो, न्याये नवे किं पुनः?)।।११७७।।

अस्य च्छात्रगणा बभूवुरवनिख्यातास्तु नैयायिका,
ग्रन्था न्यायपथे नवे च रचिताः प्रामाणिका यैस्तथा।
मन्यन्तेऽधिकमेव, दीधितिनवज्योतिःप्रणेता रघु-
र्नाथोऽस्यैव च सार्वभौमसुधियस्त्वासीत्सुशिष्यप्रधीः।।११७८।।

आसीत्संस्कृतकस्य चोत्कलभुवो रुद्रप्रतापो महा-
राजश्चादरमानदानमतिमान् प्रेमी तथात्यन्तकम्।
भट्टाचार्यकसार्वभौमसुधियो वैदुष्यशंसामसौ
श्रुत्वा पाठयितुं समाह्वयदिमं स्वे पाठविद्यागृहे।।११७९।।

तत्कर्तुं त्ववहेलनं सहृदयः सम्मानयुक्तस्य तद्-
राजामन्त्रणकस्य नाशकदसौ श्रीसार्वभौमः सुधीः।
स स्वच्छात्रसमूहकेन सहितः पुर्यां महाराजकं
विद्यागेहमवाप्तवान् (नियमतः सत्स्थानयोः सङ्गतिः)।।११८०।।

नानाशास्त्रकशिक्षां तत्रैव प्रददानः।
छात्राणामयमस्थाद् (विद्वत्ता कृतिमत्ता)।।११८१।।

एतस्यैव तथान्तरेऽस्य सहसा नैयायिकस्यैकदा
जातं श्रीप्रभुदर्शनं, निजगृहं चोत्थाप्य नीत्वाऽऽगतः।

तं मूर्च्छास्थितिमेव, तत्र सुहृदस्ते सङ्गिनोऽपि प्रभो-
श्चत्वारश्च समागताः सुमनसो नित्यादयः पृष्ठतः।।११८२।।

बाह्यज्ञानमभून्महाप्रभुसतो यामे तृतीये यदा,
यातः सागरतीरमेष सुमनाः स्नानाय गौरस्तदा।
भोक्तुं तन्निषसाद सम्प्रति गृहिश्रीसार्वभौमाऽऽग्रहात्-
(स्वीकार्यं हि निवेदनं गृहपतेः सद्भिस्तथाऽऽभ्यागतैः)।।११८३।।

एतस्याद्भुतरूपसुन्दरमयं लावण्यतेजस्विकं
संदृश्याननमण्डलं प्रभुसतो वै सार्वभौमः स्वतः।
तं गौराङ्गनिमायिनं प्रति यथा स्माद्धा समाकृष्यते
(प्रेमी सत्पुरुषं हि चुम्बकमयस्तुल्यं समाकर्षति)।।११८४।।

श्रीचैतन्यमहाप्रभोः सुमनसः संदर्शनादेव स
त्वेतावन्तमहो! महान्तमधुना शास्त्राभिमानं निजम्।
व्यस्मार्षी,न्मनसैव तच्चरणयोर्भक्तिञ्च कुर्वन्नभूत्-
(प्रेमोद्दीपनहेतुतादृशमहासाधुप्रभावार्हता)।।११८५।।

श्रीगौराङ्गमहाप्रभुं गृहपतिर्बुद्ध्वैव संन्यासिनं
भट्टाचार्यकसार्वभौममतिमान् सम्पूर्णभक्त्या समम्।
गेहे भोजितवान्निजे, प्रभुपदे गार्हस्थ्यधर्माध्वना
चान्ते स प्रणनाम पूज्यमपरं संबुद्ध्य संन्यासिनम्।।११८६।।

संन्यासी निखिलन्तु पश्यति जगन्नारायणस्याकृतिं,
कस्याप्यन्यपदार्थकस्य च पृथङ्नारायणात्तद्दृशौ।
सत्तैवास्ति न, लौकिका ननु 'नमो नारायणायोम'तः
श्रद्धाभक्तियुता नमन्ति च जनाः प्रोच्यैव संन्यासिनम्।।११८७।।

संन्यासी च तदुत्तरे कथयते 'नारायण' त्वीदृशं,
बुद्ध्वाऽर्थादमुमत्र स प्रणमति त्वद्धा हि नारायणम्।
तद्दृष्टावपि चात्र नामकजनो भिन्नो न नारायणात्-,
त'न्नारायण' सोऽपि जल्पति यतिर्नूनञ्च संन्यासिकः।।११८८।।

अर्थात्त्वमपि वै नारायणसमः।
(नारं नरभरस्तत्स्थानमयनम्)।।११८९।।

गौरश्रीलमहाप्रभुं स्म नमति श्रीसार्वभौमोऽपि स
प्रोच्यैवात्र निमायिनं ननु 'नमो नारायणायेमि'ति।
ऊचे किन्तु तदुत्तरे प्रभुरहो! 'प्रीतिः प्रगाढाऽस्तु तन्-
माधुर्यप्रियतानिधानभगवच्छ्रीकृष्णपादाब्जयोः'।।११६०।।

आशीर्वादमिमं निशम्य मुदितः श्रीसार्वभौमोऽधिकं,
चित्ते चिन्तयते तथैव, भगवद्भक्तस्त्वयं वैष्णवः।
संन्यासी पुनरस्ति कोऽपि सुमनाः स्पष्टं निमाय्याकृति,-
र्भट्टाचार्यहृदीह तत्परिचयं प्राप्तुं तदिच्छोद्गता।।११६१।।

तद्वार्ताञ्च महाप्रभुं कथमहोऽप्रक्ष्य,त्त्वयं पण्डितः
शास्त्रज्ञो ननु संश्च किं सहृदयोऽप्रक्ष्यत्तु संन्यासिनम्।
तत्पूर्वाश्रमवासनामपदके, श्रीसाधुसंन्यासिना
तत्पूर्वाश्रमबद्धजल्पनमलं सद्भिर्निषिद्धं मतम्।।११६२।।

गोपीनाथमतः स्म पृच्छति निजाऽऽवुत्तं त्वपृष्ट्वा प्रभुं
'वेत्त्याचार्य! भवानमुष्य किमपि श्रद्धेयसंन्यासिनः।
सत्पूर्वाश्रमवृत्त'मीषदधुनाऽऽचार्यो हसित्वाऽवदन्-
'नाभ्यज्ञास्त भवानिमं? (नवशशी संबध्यते शम्भुना)।।११६३।।

श्रीश्रीलनीलाम्बरचक्रवर्ति-
श्रीपुत्रिकानामशचीसुजातः।
अयं निमायी तरुणस्तु पुत्रः,
श्रीमज्जगन्नाथपुरन्दरस्य'।।११६४।।

लब्ध्वाऽयं मुदितोऽधिकं परिचयं श्रीसार्वभौमः प्रभो-
रासीदस्य पितुर्निमायिकसहाध्यायी स नीलाम्बरः।
सार्धं श्रीलपुरन्दरः पठितवानैतेन किञ्चिद्दिनं,
(दैवादेव महात्मनां सुमनसां योगोऽवनौ पूर्वतः)।।११६५।।

आसीत्पण्डितसार्वभौमपितरि प्राज्ञे च नीलाम्बरे
सौहार्दातिशयप्रगाढसखिता, तस्मात्तु संबन्धतः।
प्राबोधन्ननु सार्वभौमजनको मान्यं स्वकीयं जग-
न्नाथं मिश्रकुलं पुरन्दरपदं (मान्यो हि सख्याऽऽदृतः)।।११६६।।

यावत्सम्प्रति सार्वभौममतिमान् श्रीकृष्णसत्प्रेमिणं
संबुध्यैव विरक्तमेतमपरं त्वेकञ्च संन्यासिनम्।
आत्मन्येव स भक्तिमत्र कुरुते,ऽतो गोपिकानाथतो
भावेऽभूत्परिवर्तनं परिचयं प्राप्यैव गौरप्रभोः।।११९७।।

ताटस्थ्येन तथा स यावदधुना, सद्गेहिनैकेन वा
यच्छिष्टाचरणन्तु कार्यममलं संन्यासिनं प्रत्यलम्।
तादृक् चाचरति स्म, सम्प्रति मनाग् जातं ममत्वं यथा,
भक्तिः सापि च गेहिनः परिणता वात्सल्यभावे, प्रभौ।।११९८।।

आत्मीयत्वमसौ मनाक्प्रकटयन् श्रीसार्वभौमोऽवदन्-
'मे ह्यासीद्विदितन्तु किं?, निजगृहस्यैवास्ति चायं यतिः।
श्रीनीलाम्बरचक्रवर्तिमतिमत्संबन्धतस्त्वेकतो
मान्योऽर्च्यः स्वत एव चायमथ नस्तत्रापि संन्यासिकः।।११९९।।

पूज्यश्चादरणीयोऽत्यन्तं नस्तु ततोऽयम्।
(संबन्धी मधुवृत्तिः साधुर्भाग्यवतां कौ)।।१२००।।

ऊचे लज्जितभावतः प्रकटयंश्चात्यन्तमेव प्रभु-
र्गौराङ्गो निजनम्रतां 'ननु भवानेदं वचः कीदृशम्।
ब्रूतेऽ,हन्तु भवत्सुतेन सदृशो, वृद्धो भवान् सर्वथा
विद्याज्ञानवयोऽधिकारविषयै-(र्वृद्धत्वमास्थाऽऽस्पदम्)।।१२०१।।

शास्त्राणामलशिक्षणञ्च महतां संन्यासिनां वै भवान्
दत्ते, सम्प्रति वक्तुमेव भवतः शक्नोमि तत्किं पुरः।
शिष्याणां भवतस्त्वहन्तु भवितुं शिष्योऽपि योग्योऽस्मि नो
(सर्वेषां नहि सद्गुरोर्भुवि नृणां शिष्यत्वसत्पात्रता)।।१२०२।।

सम्प्रति मेऽवस्थापि तथाऽल्पा चातिशया, सांसारिकबोधः।
नापि पुनर्मे सम्प्रति किञ्चिन्' (नुर्वयसा बोधेन च सिद्धिः)।।१२०३।।

'द्योतकानि तु स्वभावशीलयोश्च ते वचांसि।
पूज्य एव गेहिनो हि मे भवान् यतिः स्वतस्तु'।।१२०४।।

तद्वद्दृष्टिमधो विधाय शनकैः प्रोचे प्रभुर्जिह्रियद्-
भूयो'ऽहं शिशुरस्मि सम्प्रति तु, किं संन्यासमर्माऽपरम्।

विद्यां?, भावुकतावशात्परमिदं काषायवस्त्रं धृतं,
कर्तव्यन्तु किमस्ति किञ्चिदपि मे ज्ञातं न संन्यासिनः।।१२०५।।

स्थाने लोकसुशिक्षको ननु भवान् तस्माच्च मत्वा गुरुं
चागृह्णां भवतस्तथैव शरणं पादाब्जयोः साम्प्रतम्।
उद्धारन्तु करोतु मे, च कृपया संन्यासिनां शास्तु मे
कर्तव्याखिलकर्म (संसृतितले सूर्याधिकः शिक्षकः)।।१२०६।।

अद्यैव माऽवद् विपदस्त्वियत्या-
रेवं तथाग्रेऽपि ममात्र रक्षाम्।
सदैव कुर्वन् भविता भवान् वै'
(स वासुदेवः स्फुटमस्ति सत्सु)।।२१०७।।

तत्सत्प्रेम च सार्वभौममतिमान् प्रादर्शयन्नब्रवीत्-
'कर्तुं (पश्य) तथैकलः पुनरहो! तद्दर्शनं कर्हिचित्।
मा याहि, प्रियदर्शनं भगवतः कर्तुं च याता यतः
कर्ता वा मम चन्दनेश्वरमतः सङ्गेऽथवाऽन्यं जनम्।।१२०८।।

एकलस्य मन्दिरे तु दर्शनार्थमत्र ते तु।
यानमस्ति नोचितन्तु' (रक्षणं सतः सदाऽस्तु)।।१२०६।।

'गन्तैव नाहमधुना ननु मन्दिरेऽन्त-
र्द्रष्टुं कदापि, भगवद्गरुडस्य चैव।
कर्ता सुदर्शनमहं पुरतोऽस्मि दूरात्'
प्रोचे महाप्रभुरयन्तु विनीतभावात्।।१२१०।।

'नो, दर्शनं कथमहो! गरुडस्य पार्श्वात्
कर्ता?, तु मन्दिरगता निजकाश्च लोकाः।
सर्वेऽत्र, वाञ्छसि यतः कुरु दर्शनं तत्,
तूक्तं मयेदमधुना ह्यवधानहेतोः'।।१२११।।

आवृत्तं स्वमुवाद गौरयतिना वार्ताक्रियानन्तरं
गोपीनाथमयञ्च गेहपतिकः श्रीसार्वभौमः सुधीः।
'आचार्य! प्रियकं महाशय! भवान् कार्यं चकारोत्तमं
गौरेणाधिकमेव वै परिचयं नः कारयित्वाऽमुना।।१२१२।।

शक्तस्त्वत्कृपयैव साम्प्रतमभिज्ञाने त्वमुष्या,तिथे-
र्वस्तुं क्वापि रहःस्थलेऽस्य नियतं कार्यः प्रबन्धोऽधुना।
अस्त्येकान्तमपीह रिक्तमपि मे मातुर्भगिन्याः परं
तद्गेहं, भविताऽस्य कीदृशमहो! तद्वै निमाय्यात्मनः?'।।१२१३।।

'अस्ति तु तत्स्थानं बहु भद्रं, तत्प्रियमेतेषां भवितैव।
आसनकं तत्रैव निवेश्यं तन्निखिलानां' गोपिकवाक्यम्।।१२१४।।

'युक्तं भविताऽद्धा ह्यामामिदमेव।
सर्वान्नयतां द्राक् तत्रैव भवान् वै'।।१२१५।।

संमत्या ननु सार्वभौमसुधियः सार्धं प्रभुं सङ्गिभि-
र्गोपीनाथमहाशयो गृहपतेर्द्राक्सार्वभौमश्रियः।
मातृस्वसृपतेर्निनाय च गृहं भद्रं तथैकान्तकं
(भद्राऽभ्यागतनन्दकं प्रथमतो वासार्थभद्रस्थलम्)।।१२१६।।

स्थानं तथैकान्तमहो! निमायि-
प्रभोः प्रतीतं बहु शोभनं तत्।
तत्रैव तस्थौ निजसङ्गिभिः स
(स्थानं निमायिप्रियमन्यदेव)।।१२१७।।



# श्रीसार्वभौमस्तथा गोपीनाथाचार्यः

४३. गुरुरिति सच्चिन्मुत्स्थितिदीप्तिः।
यत्संयोगात्परमज्ञानं श्रुतमिह समरक्षेत्रे
कालकर्मतमोभी रुद्धं कृष्णसारथेर्जातम्।
तज्ज्ञानं तस्यैव वियोगात्पुनः स्फुटं पार्थात्मनि
यद्विरहाकुलतापरिणामस्तथाप्रभावी भुवने।
मणिरतुलो गुरुरमलज्योतिर्धाता पाता हर्ता
जगतां गुरुरिह कृष्णो वन्द्यः कर्षणान्नशरणानाम्।।

जीवानामिह वै निराश्रयवतां वारान्निधौ मज्जतां
संसारे गुरुदेव एव शरणं संवर्तते केवलम्।
धृत्वा बाहुमयं तथैव भवितुं निःसारणे स्यात्क्षमो
बाह्यं संसृतिसागरा,त्प्रवहतां संक्रन्दतां मज्जताम्।।१२१८।।

स्थानेऽत्रोद्विजतामचेतनहृदां संक्षुभ्यतां प्राणिनां,
जीवोऽस्यालमपारदुर्गमभवाम्भोधेर्विना तत्कृपाम्।
सत्यं पारमनन्तपावनगुरोर्नो यातुमेव क्षमः
(सत्येनैव समस्तजीवजगतीसञ्चालनं जायते)।।१२१९।।

श्रीविश्वम्भर एव सोऽखिलजगद्ब्रह्माण्डकर्ताऽऽत्मनां
जीवानां विविधं स्वरूपमयते धृत्वा गुरुत्वाकृतिः।
तस्यैवामलपादपद्मशरणं जीवो मुमुक्षुर्गतो
द्रागेतं तरति त्वपारमुदधिं (यस्तारकोऽसौ गुरुः)।।१२२०।।

कस्याप्यत्र तु मानवस्य भुवने सामर्थ्यमेवास्ति किं,
निस्तारं प्रभवेद् विधातुमपि यत्त्वेकस्य जीवस्य सः।
कल्याणन्तु गुरुः स एव परमः कर्तुं क्षमः श्रीहरि-
र्जीवानां, भवितुं क्षमो नहि गुरुर्भूमौ मनुष्यस्ततः।।१२२१।।

श्रीनारायण एव सोऽस्ति जगतः सर्वस्य तु श्रीगुरु-
र्जीवं मोचयितुं स एव लषते संसारबन्धात्तु यम्।
प्राप्तस्तस्य गुरुस्वरूपसुहृदा शुद्धात्मनो जायते,
तत्सौहार्दलवप्रतीतिरवनौ कस्यापि तस्येच्छया।।१२२२।।

अन्येषां दृशि बद्धजीवजनतासाधारणानां परं
तद्रूपं भवति प्रतीतमवनौ सामान्यजीवोपमम्।
जीवोऽनुग्रहसंसृतेस्तु भुवि यो, यं वाञ्छति श्रीहरिः
स्वीकर्तुं स्वयमेव स स्वकृपया (लभ्यो,ऽमुना यो वृतः)।।१२२३।।

पूर्णब्रह्मसनातनस्य सुतरां रूपेऽस्य तत्राऽयते
साक्षाद्दर्शनमत्र, तेन भगवान् भक्तो गुरुर्मूलतः।
एकस्यैव पदार्थकस्य भुवने न्यस्तन्तु नामत्रयं
तत्पूतं जनभावनानुसरणा,न्नैतत्त्रयेऽद्धान्तरम्।।१२२४।।

जीवोऽनुग्रहसंसृतेस्त्विमं भावं बोद्धुमथ क्षमः परम्।
अन्येषां वशगं वचो न तज् (जीवानां भुवि कोऽपि सत्प्रियः)।।१२२५।।

आसीद्वै हृदयप्रधानपुरुषो गोपीकनाथप्रधी-
श्चैतस्योपरि वस्तुतो भगवतस्त्वासीद्यथेच्छं कृपा।
आसीच्चात्यधिकं तथाहि हृदयं तत्प्रेमिणः कोमलं,
तस्मिन् भावुकता प्रमाणमधिकं किञ्चित्तथासीत्पुनः।।१२२६।।

आसीत्प्रीतिरहैतुकी सुमनसो गौराङ्गपादाब्जयोः
स्वं नारायणदर्शनं स्म कुरुते श्रीविग्रहे स प्रभोः।
आसीन्नश्वरपाञ्चभौतिकवपुर्नैव प्रभोस्तत्कृते
(भावो यस्य यथाऽत्र, तस्य भुवने वस्तुप्रतीतिस्तथा)।।१२२७।।

तस्मिन् सत्यसनातनस्य परमब्रह्मस्वरूपस्य स
ह्यालोकं सगुणस्य नश्वरपरं पश्यन्नभूद् भावुकः।
पूजार्चां कुरुते स्म तस्य सुहृदस्तेनैव भावेन च
(स्वस्थे चेतसि चिन्मयन्तु निखिलं, सत्स्रोतसः का कथा?)।।१२२८।।

जीवोऽनुग्रहसंसृतेः स्वकोऽसौ श्रीमद्भगवत्प्रभोर्जनः।
आसीत्तस्य च नित्यपार्षदो (गोपीनाथनिजप्रमातृकः)।।१२२९।।

गोपीनाथबुधस्तथैकदिवसे श्रीमज्जगन्नाथजी-
शय्योत्थानकदर्शनं प्रभुमसौ स्वं कारयित्वाऽऽगतः।
स प्रत्यागमनक्षणे गृहमगाच्छ्रीसार्वभौमस्य तत्-
सार्धं दत्तमुकुन्दकेन (सुधियः संबन्धता भाग्यतः)।।१२३०।।

भट्टाचार्यमहाशयो बुधवरोऽयं सार्वभौमो गृही
सत्कारञ्च यथोचितं स्वभगिनीपत्युश्चकार स्वयम्।
तस्मै सत्तुमदात्तथाऽऽसनमसौ सार्धं मुकुन्देन च
(श्रेयः सत्कृतितो गृहस्थजनताऽवाप्नोति सारल्यतः)।।१२३१।।

आचार्ये ननु संस्थिते बभौ वार्ता सम्प्रति तत्र लौकिकी।
आरब्धो विषयो महाप्रभोरन्ते (तन्मधु यत्सतां प्रियम्)।।१२३२।।

'कस्मादेष निमायिपण्डितः संन्यासं जगृहे गुरोस्तथा।
संन्यासाश्रमनाम चास्य किं?' गेही पृच्छति सार्वभौमकः।।१२३३।।

गोपीनाथवचो'ऽस्य नाम भवति "श्रीकृष्णचैतन्य", यः
श्रीमत्केशवभारती च कटवापार्श्वे यतिर्विद्यते।
संन्यासिप्रवरः स एव च महाभागो निमायिप्रभोः
संन्यासाश्रमकस्य तिष्ठति गुरुश्चूडामणिर्न्यासिनाम्'।।१२३४।।

विद्वान् कोऽपि न वर्तते, नहि तथानामी तु संन्यासिकः
प्रायः केशवभारती यतिरयं, यत्सार्वभौमोऽबुधत्।
संन्यासी स तथैवमेव भविता साधारणो, वस्तुतो
विद्वांसं मनुतेऽत्र पण्डितजनो, यस्तत्प्रतिष्ठान्वितः।।१२३५।।

हेयान् किञ्चिदथात्र भारतियतीन् कौ दण्डिसंन्यासिषु
श्लिष्यन्ती,ह न भारतीकगणना तद्दण्डिसंन्यासिषु।
प्रख्यातेषु, सरस्वतीपरिमिलत्तीर्थाश्रमाख्यत्रये
(किं वर्गीकरणप्रमाणमधिकं वर्गोऽपवर्गाश्रमे?)।।१२३६।।

तेषामस्ति तु दण्डधारणकृतेः शास्त्रे विधानं, परं
दण्डोऽर्धो ननु भारतीयतिसतां संन्यासिनां बुध्यते।
एतत्सर्वमसौ विचार्य वदनञ्चाकुञ्च्य गेही मना-
गाचार्यं कथयन्नभू-(त्सुमनसामाः! सौमनस्यं त्वलम्)।।१२३७।।

'नामाऽस्यास्ति तु सुन्दरं बहु, तथा रूपं ह्यतुल्यं पुन-
र्लावण्यं त्वपि विद्यते,ऽपि च तथाऽल्पं शास्त्रविज्ज्ञायते।
ऊच्चब्रह्मकुले बभूव सुमतेर्जन्माऽस्य, भूयः कथं
दीक्षैवं त्वपसम्प्रदाययतितो ह्यग्राहि संन्यासितः?।।१२३८।।

आवेशे पतितः (प्रतीतिमयते-)ऽद्धाऽयं विना चिन्तनं
मुण्डं मुण्डितवान्, यदीह भवतामिच्छाऽखिलानां भवेत्।
योग्यं तत्कमपि प्रतिष्ठितमिहाऽहं दण्डिनं स्वामिन-
ञ्चाहूयाऽस्य तु कारयेयमधुना संस्कारमच्छं पुनः'।।१२३९।।

श्रुत्वेदं वचनं मनाक्प्रकटयन् दुःखं बभाषे तथाऽऽ-
चार्यः 'शास्त्रभरे निरन्तरमहो! शङ्कां सतः कुर्वतः।
तीक्ष्णाऽभूदपि शङ्कितेव भवतो बुद्धिस्तु, दृष्टौ तथा
नैवान्यत्किमपीह तद्घट-पटादिभ्यः परं वस्तुकम्।।१२४०।।

साक्षाद्वै भगवानयं, सुमनसः प्रेमावतारस्य किं
शुद्धस्यास्य च बाह्यकोपकरणापेक्षा, विरागी स्वयम्।
सिद्धत्यागिकृती त्वथाऽयममनाः प्रेमी च संन्यासिको,
नैतस्य त्वनुशंसनस्य भवतोऽपेक्षा भविष्यत्यहो!'।।१२४१।।

'स्थाने भावुकतावचस्तु भवतो मे नैतदेव प्रियं,
दीनानां कथये त्वहं हितवचस्तेषां निमाय्यात्मनाम्।
तेषामस्त्यधुना निमायिकनवावस्थै,व तस्थुः परं
कालं यावदमुञ्च लौकिकसुखेभ्यो वञ्चितास्ते यथा।।१२४२।।

अस्यां दशायां कथमेव कुर्युः
संन्यासधर्मस्य तु पालनं ते।
तथाविधीनां कठिनाऽप्रियाणां?'
जगाद गेही बुधसार्वभौमः।।१२४३।।

'अस्ति नियन्ताऽयं नियमानामप्यु,त संन्यासोऽस्य किमेव?।
एवमसौ चक्रे जनशिक्षाहेतु'मदिक्षद् गोपिकनाथः।।१२४४।।

ऊचे हस'न्निदमभूद्बहु' सार्वभौमो
'यूनोऽस्य साधु रुचिता दृशि लोकशिक्षा।
एवं भवानपि करिष्यति लोकशिक्षा-
हेतुं न भावुक! कदापि महानुभाव!'।।१२४५।।

'कर्ता किमेव जनशिक्षणक मनुष्यो,
लोके त्विदं भगवतो ननु कार्यमेव।
धृत्वा स एव कुरुते विविधञ्च वेषं
सल्लोकशिक्षणकृतिं स्वचराचरात्मा'।।१२४६।।

आहोच्चैः स महाशयो ननु हसञ्छ्रीसार्वभौमो बुधो
'हे बाबा! दयतां, निराश्रयमहो! संन्यासिनं व्योम्नि तम्।
आरोह्यात्र कथन्तु चिन्तयति हे! तत्सर्वनाशाशयं
(सर्वेषान्तु समः स्तरो नृवपुषां, न्यूनोऽधिको वाल्पकम्)।।१२४७।।

उक्तं तूचितमेव (तन्निगदितं) प्राचीनलोकैस्तथाऽऽ-
चार्येषूत्पतनस्य कौ भवति नो शक्तिः, परं पृष्ठतः।
संयोज्याऽस्य तथैव शिष्यनिवहः पक्षौ तु भूयोऽम्बरे
तं चोड्डाययतीह (नित्यशरणं भूरेव भूस्थायिनाम्)।।१२४८।।

प्रतीयते, पक्षकयोजनं वै
संन्यासिनोऽमुष्य तथाहि यूनः।
कर्तुं भवानिच्छति शीघ्रमेव,
ह्यस्तीश्वरोऽयं भवतोऽत्र दृष्टौ?'।।१२४९।।

'आमीश्वरोऽस्तीश्वरकस्त्रिवारं
प्रतिज्ञया वच्मि तथेश्वरोऽस्ति'।
आवेशतश्चाह स गोपिनाथः
'साधारणोऽयं न तथास्ति जीवः'।।१२५०।।

आचार्यस्य निशम्य तादृशमिदञ्चावेशपूर्णं वचः
शिष्याः पण्डितसार्वभौमगृहिणः पार्श्वे निषण्णा हठात्।
सर्वे ते चकिता बभूवुरिव च श्रीसार्वभौमोऽपि तद्-
भूत्वाऽऽचार्यमुखं स्म पश्यति मनाक् प्राज्ञो यथा विस्मितः।।१२५१।।

तत्किञ्चित्क्षणकान्तरेण वदति श्रीसार्वभौमो हसन्
'वक्त्रं वै भवतो गृहस्य, रसनां कस्यापि पार्श्वे नहि।
लब्धुं तद्गमनार्हता, मनसि यच्चायाति निःसारकं,
तत्सर्वन्तु भवांस्तथा प्रलपतु (ध्येया तु वस्तुस्थितिः)।।१२५२।।

सच्छास्त्राध्ययनं कृतं तु भवता त्रिष्वेव सत्त्वात्मनो
जायन्तेऽत्र युगेषु तद्भगवतो लोकेऽवताराः, कलौ।
एवं किन्त्ववतारवृत्तमपरं कुत्रापि न श्रूयते
(काले श्रीपुरुषोत्तमोऽवतरति स्थाने विशेषस्थितौ)।।१२५३।।

विद्यन्ते गणिताः पुनर्भगवतः सर्वेऽवताराः, परं
तेषु क्वापि तथैवमत्र भुवने नो नोऽवतारः श्रुतः।
अंशत्वान्ननु जीवमात्रमखिलं लोकेऽवतारस्तथा
वक्तुं शक्यमथैव तद्भगवतो, ह्युक्तं पुराणेऽथवा-।।१२५४।।

४४. भुवने सत्त्वनिधेरवतारः सत्त्वपुष्टिरनुकम्पा।
रजसः सृष्टिस्तमसः संहृतिरेतज्जगतीरूपम्
तन्मध्ये तत्सुस्थितिहेतोः सत्त्वस्यावश्यकता।
सच्चिदानन्द-परमदशायामपि सत्त्वं-सद्भावः
प्रथमं, यत्स्थितितश्चिद्व्यक्तिस्तत एवानन्दाप्तिः।
व्यक्तं तत्सत्त्वस्यादर्शं स्थापयितुं सत्त्वात्मा
विसृजति सन्मुखकारकपुरुषं, क्षणमवतरति स्वयमिह।।

श्रीमद्भागवतान्तरस्फुरिततत्पद्यानुसारं पुनः
शक्या मन्तुमथात्र तद्भगवतोऽसंख्यावतारास्त्वपि।
ते चावश्यकतास्थितौ प्रतियुगं व्यक्ताः प्रतिप्राणिनां
शक्यन्ते भवितुं (स एव भगवान्, सर्वस्य साधारणः)।।१२५५।।

एतेषां गणना कृता परं त्वंशांशेष्वतारकेष्वपि।
गीतायां कथितं यथोचितं (गीतास्थानमपीडितं श्रुतेः)।।१२५६।।

४५. सत्त्वं निखिलं परमात्मांशः।
यत्कामाज्जगतः संभूतिर्यदनुग्रहतः पुष्टिः
यत्संहरणादुपसंहारस्तन्निखिलं तत्स्फुरणम्।
रजोविभूतिः सत्त्वविद्युतिस्तमोविपक्तिः सृष्टौ
यस्मिन् यस्मिन् वस्तुन्यधिकं, तस्मिंस्तत्तेजोऽलम्।।

ब्रूते यद्यवतारमेतमनया दृष्ट्या तु संन्यासिनं
ह्यापत्तिर्न ममापि कापि तदहो! किन्त्वेष एव स्फुटम्।
साक्षादस्ति सनातनं ननु परब्रह्म, क्व शक्यं त्विदं?
(वस्तु ब्रह्म परं भवेदनुपमं, नो यत्र शङ्काकणः)।।१२५७।।

पूर्णब्रह्म सनातनन्तु भगवाञ्छ्रीकृष्ण एव ध्रुवं,
नो कल्पेष्वपि किं युगेषु भुवने तस्यावतारोऽयते?।

एषोऽसंख्ययुगोर्ध्वमत्र भवति स्थानेऽवतीर्ण,स्ततः
शुद्धं भावुकतामयी तु भवतो वार्ताऽधुना जायते'।।१२५८।।

'शास्त्रालोचनकर्मणा बहु तथ्य,ऽद्धा ज्ञायते' गोपिका-
नाथश्चाह तु 'विस्मृतानि भवता तच्छास्त्रवाक्यान्यपि।
विद्वान्! वेत्ति भवा,न्न कोऽपि नियमो नित्यावतारार्थको,
बोद्धुं किं प्रभवेत्तु शास्त्रमपरं तेषां रहस्यं परम्।।१२५६।।

शास्त्रातीतमिदं रहस्यमपरं, नित्यावतारस्य सत्-
प्रेम्णः कर्ह्यपि जायते नहि तिरोभावः, स वै संसृतौ।
भूत्वा चैकरसस्तु तिष्ठति सदा व्याप्तः, स गुर्वात्मना
स्थाने भाग्यवतस्तु कस्यचिदहो! काले तथा प्राप्यते।।१२६०।।

यस्योपरि तथा तस्येह करुणा।
शक्तोऽस्य स कृपापात्रं तु भवितुम्'।।१२६१।।

हसन्नवोचन्ननु सार्वभौमो
'नित्यावतारो नववस्तु चासौ।
अत्रोद्गतं वै किमिव प्रसङ्गे'
(यथाप्रसङ्गं चलतीह वार्ता)।।१२६२।।

आचार्येण तदोक्तमत्र तु मनाक् क्षोभस्वरेण क्षणे
'वा चैतादृशमेव बीजवपनं तूष्यां भवद्बोधनम्।
गच्छत्येव परिश्रमस्तु कृतिनो व्यर्थं, पुनर्जायते
बीजस्यापि तथाक्षयः' (सहृदयत्रासः कुतर्कात्मनः)।।१२६३।।

ऊचे श्यालकसार्वभौमसुमतिश्चेषद्विनोदस्वरे
'कुर्वे चोर्वरभूमिपादयुगले स्थाने प्रणामं तथा।
तां याचेऽपि पुनर्ममोपरि कृपां कुर्याद्, बहिः किं भवा-
नात्मत्वात्तु भवंश्च याति (सुहृदोर्वादे हि तत्त्वोद्गतिः)।।१२६४।।

ब्रूते किंविधिना वै साक्षादीश्वरमेतम्।
अस्माज्जल्पतु बन्धो।' (बन्धुः सौहृदबन्धः)।।१२६५।।

'लोके जागरणं तथाहि सरलं सुप्तस्य, किन्त्वत्र यः
प्राज्ञः सन् स्वपनस्य जाग्रदपि च व्याजं विधत्ते, तु तम्।

कामं जागरयेच्च को,ऽपि मतिमान् ज्ञात्वा च बुद्ध्वा भवान्
वार्तामज्ञसमः करोति, भवतो बुद्धिं किमत्र ब्रवै।।१२६६।।

नो जानाति भवान्, भवे त्विह "गुरुः साक्षात्परब्रह्म (नुः)
तस्मै श्रीगुरवे नमोऽत्र भणितौ शास्त्रोक्तसूक्तस्रजि।
साक्षाद् ब्रह्म परं गुरुर्निगदितः, किं नास्ति नृणां गुरुः
साक्षाद् ब्रह्म परं? (रविर्दिनकरः स्पष्टं तमोवारकः)।।१२६७।।

श्रीमत्कृष्णपदारविन्दशरणे यस्यानुरागोदयः
सङ्गत्याऽत्र भवेत्तु, भेदमवनौ तस्मिन्न मन्ये तथा।
श्रीकृष्णे कमपीह, यत्किमपि वै भेदप्रतीतिः पुन-
र्लोके सा व्यवहारचालनपरा (ह्यर्थः परो व्याहृतेः)।।१२६८।।

एकोऽस्त्येव तु वस्तुतो ननु गुरुः कृष्णश्च, कृत्वा कृपां
कस्यापि स्वयमेव चात्मपदयोः प्रीतिं प्रदत्तेऽत्र सः।
यावन्नो कुरुते कृपां सुहृदसौ केनापि रूपेण कौ,
तावत्तच्चरणाब्जयोर्नृहृदये प्रेमोद्भवोऽसम्भवः'।।१२६९।।

ऊचे पण्डितवासुदेवमतिमच्छ्रीसार्वभौमो गृही
'हे त्वाचार्य! महाशयेयमभवद् वार्ताऽपि काचिन्न तु।
संबन्धोऽस्य यतस्तु भावजगता, नृणां पृथग्वै पृथक्-
स्वस्य स्वस्य च भावना भवति कौ (भावो हि भेदाश्रयः)।।१२७०।।

शास्त्रेभ्यस्तु परोऽयमस्ति विषयः सत्यं, तथाऽसंभवा
नो काचिद् दृढशुद्धभावपुरतो वार्ता तु शुद्धात्मनाम्।
नो शक्नोति भवान् विधातुमवनावस्य प्रचारं परं,
कर्तुं न प्रभवेत्परञ्च विवशं, मन्तुं स्वभावानुगम्।।१२७१।।

चेत्तस्मिन् गुरुभावनाऽस्ति भवतो भावः परब्रह्मणो
वा संन्यासिनि यूनि, तत्समुचितं, त्वद्वार्तयाऽहन्त्वपि।
अन्यश्चापि भवेत्तथा सहमत,श्चैतत्कृते त्वाग्रहः
श्रद्धालोर्ननु नोचितोऽत्रभवतः (कोऽप्याग्रहो हि ग्रहः)।।१२७२।।

तं संन्यासिनमेव चैकमवनौ बोधामि साधारणं,
कामं सोऽशरणोऽधिकोऽस्ति सरलो,ऽद्धा वर्ततेऽस्योपरि।

साधोः श्रीभगवत्कृपा,ऽत्र वयसि त्वल्पेऽनुरागस्त्वियान्
सर्वश्रीभगवत्पदाब्जशरणे, त्यागस्त्वहोऽलौकिकः ।।१२७३।।

एतावन्नहि सर्वसाधुषु तथा वैराग्यमत्राद्भुतं
तु प्रायो भविता, तथाऽतिशयिते चान्वेषणे मेलिता।
एवं तादृशलक्षकोटिजनतामध्येऽनुरागः पुनः
(श्रीमत्केवलभावभावितमनाः कोऽप्यत्र सन्मानवः) ।।१२७४।।

तस्य त्यागविरक्तिपूतभगवत्प्रेम्णामशङ्कस्त्वहं,
मत्वा किन्तु तमीश्वरं भुवि भवत्तुल्यः प्रचारक्रियाम्।
कुर्यामस्म्यवताररतात्ममहसो लोकेषु, मच्छक्तितो
बाह्योऽयं विषयो' (मनो हि मनुते यत्तत्क्रियावाञ्जनः) ।।१२७५।।

आचार्यगीरल्पदृढस्वरेण
'भद्राऽस्ति वार्ता, स्वयमीक्षिता वै।
कियच्चिरं तिष्ठति चैष भावो,
भवत्सतोऽन्तर्न परेण नेयम्' ।।१२७६।।

ऊचे सम्प्रति च त्विदं प्रकरणं कर्तुं समाप्तं गृही
भागेऽन्यत्र स सार्वभौममतिमान् वार्ताप्रवाहं नयन्।
'यत्किञ्चिन्मम विद्यतेऽत्र तु भवान् ह्यस्त्येव तत्सर्वदा,
मन्तव्यं न तु दूषितं किमपि मे वाक्यं (ह्युदारः प्रियः) ।।१२७७।।

आचार्य! हे! मे भवतस्तु लोके
संबन्ध एवास्ति तथा निसर्गात्।
मुखात्तु वार्ताऽनुचिताऽत्र काचित्
स्यान्निःसृता, क्षाम्यतु तन्मदीयम्' ।।१२७८।।

आचार्योऽकथयत्तथापि स मनाक्कुर्वन्नुपेक्षामिव
'स्थानेऽस्मिन् किमिव क्षमाप्रकरणं, संप्रार्थयिष्ये त्वहम्।
सम्पूर्णं भगवन्तमत्र भवतोऽदोनास्तिकाभोक्तिषु
प्रायुञ्ज्यात्परिवर्तनं, निजकृपापात्रं भवन्तं क्रियात्' ।।१२७९।।

तेनोक्तं गृहिणा हसत्सुमतिना श्रीसार्वभौमेण तत्
'स्थानेऽस्ति प्रचुरं कृपा भगवतोऽनन्ता भवत्येव सा।

स्वल्पांशं तत एव दास्यति भवान् मेऽप्यस्य संबन्धिनः
(संबन्धेन समस्तवस्तुजगती संवर्ततेऽन्योन्यकम्)।।१२८०।।

आमु, श्वस्तं मम पक्षतो यतिमहाराजञ्च संन्यासिनं
गेहे भुक्तिनिमन्त्रणायं वदतु स्वेऽत्रैव, वाञ्छाऽस्ति मे।
तद्भिक्षाविधियोजनस्य गृहिणः कल्यं भवद्बन्धिन'-
(श्चेतश्चिन्तयते यमत्र सुहृदं भूयः समक्षोऽस्तु सः)।।१२८१।।

जाता चैतदनन्तरं कतिपया सामान्यवार्ता तथा
गोपीनाथबुधो मुकुन्दसहितश्चान्ते चचाल प्रभोः।
स्थानाया,ऽरसशुष्कतर्कवचनात्तत्सार्वभौमश्रियोऽ-
त्यन्तं दुःखमभून्मुकुन्दमनसि (स्थानेऽनुभूती रसः)।।१२८२।।

आचार्योऽपि स गोपीनाथोऽल्पं ननु खिन्नः।
आसीदाकृतिभङ्ग्या (दुःखं भावकुसङ्गः)।।१२८३।।

लब्ध्वाऽयं प्रभुसन्निधिं समभवद् वार्ता च गोपीप्रियाऽऽ-
चार्यः पण्डितसार्वभौमगृहिणा या या तु, ताञ्छ्रावयन्।
संक्षेपे, वदति 'प्रभो! च वचसा केनापि दुःखं न मे,
(दुःखं स्वीकृतमस्ति तत्प्रकृतितः संभावकानां सुखम्)।।१२८४।।

मुख्यं सम्प्रति दुःखकारणमिदं—श्रीसार्वभौमः स्वको
लोकः सन्नपि हीदृशं निदधते स्थाने विचारं बुधः।
भव्याऽस्योपरि हे प्रभो! ननु कृपा, निःसार्य तज्जीवनात्
प्रेम्णो नीरसतां तथा सरसतासञ्चारमस्मिन् कुरु'।।१२८५।।

सङ्कोचेन निजां मनाक्प्रकटयन्नूचे प्रभुर्दीनता-
'माचार्याऽद्य भवान्महाशय! वचो ब्रूते त्विदं कीदृशम्।
पूज्यो मान्यवरस्तथास्ति मतिमाञ्श्रीसार्वभौमस्तु मे
सोऽपि स्निह्यति पुत्रवन्मयि पुनः (स्नेहोऽपरो हि द्रवः)।।१२८६।।

तस्मान्मे शुभचिन्तकोऽतिशयितः पुर्यां परः को भवे,-
च्छायामत्र विधृत्य चास्मि पतितस्तस्यैव पादाब्जयोः।
मह्यं यत्त्वपि चिन्तयेत्किमपि स श्रेयो हि तत्रैव मे
(कल्याणं भुवि मङ्गलं हि मतिमत्सच्चित्तवृद्ध्याध्वना)।।१२८७।।

स्यान्मे तस्य मतौ च येन वचसाऽकल्याणसंभावना,
वक्ता तन्मम नूनमेव स, हितं तस्मिन् वचस्येव मे।
शंसामेव ममैष चेद् गुरुजनो भूत्वाऽपि कुर्वन् भवेत्,
कर्तुं स्यामश्शृते क्षमो वयसि किं संन्यासधर्मावनम्।।१२८८।।

मन्तव्या भवता न काचिदपि तद्वार्ता ततो दूषिता,
धत्तां तं प्रति सर्वदैव सुहृदाऽद्धा पूज्यभावं तथा।
पूज्योऽयं मम विद्यते च भवतः सर्वस्य, नः शिक्षक-
श्चाचार्यो हितचिन्तकः प्रवचनः' (साध्नोति विद्वत्प्रियः)।।१२८६।।

आचार्यमेवं ननु बोधयित्वा
विनम्रतापूर्वमसौ निमायी।
विसर्ज्य तञ्च स्वयमेष भक्तैः
कुर्वन्नभूत्कृष्णसुकीर्तनं तत्।।१२६०।।



# सार्वभौमो भक्तोऽभवत्

४६. काम्यं सद्गतिमतिसातत्यम्।
अमितविषयचिन्तननिरताया मत्या नहि विश्रामः
तन्नानास्थितिसंकुलसंसृतिपथिकानां भवयात्रा।
भगवत्कृपया तत्परिवर्तनहेतुकसन्मुखताप्तिः
सदनुग्रहतः परावरेशे मतिरिह संसृतिरपरा।।

पूर्वेषां ननु जन्मनामतिशयो न स्यात्तथासञ्चयः
पापानां, भगवत्कृपाऽस्तु, विधिना केनापि कामं भवेत्।
श्रद्धाभावगुणस्तथाहि हृदये, तत्तादृशःनां नृणा-
मुद्धारे त्वधिकक्षणो लगति नो (काले भवत्युद्धृतिः)।।१२६१।।

सत्येवात्र समागमे ननु सतोऽनेके दुराचारिणो
दुष्कर्माणि तदीयसौहृदवशात्त्यक्त्वा महान्तः पुनः।
जाता भागवतास्तथाहि परमा, लोकेऽस्त्यपारस्तथा
साधूनां महिमैव सङ्गतिदिश,स्तस्माद्धरिस्तूक्तवान्-।।१२६२।।

४७. पुंसां फलति कल्पनातीतं सत्सङ्गतिरिह भुवने।
फलमुखवृत्तिर्जन्तूनामिह नैसर्गिकविधिखेला
मनोवासनेन्द्रियसामर्थ्याद् भेदः फलसंचयने।
बुद्धिमतां सङ्गतिमाध्यमतोऽनन्तभौतिकावेशः
किन्तु कस्यचित्सत्सङ्गतितो निजशरणस्मृतिफलनम्।।

सारांशस्त्वयमेव, सर्वविधिकं सत्सङ्गतो बन्धनं
विच्छिन्नं भवतीति, किन्तु भुवने सर्वस्य नो जायते।
सत्सङ्गाप्तिसुयोगदेशसमयव्यक्तित्वसौभाग्यकं
(सौभाग्यं विविधं, परं नृजगतां तत्स्वप्रियव्यक्तिकम्)।।१२६३।।

यत्सांसारिकबन्धनच्युतिपलं प्राप्तं समीपे तथा
तस्यास्त्यच्युतधर्मिणो भगवतो यस्योपरिष्टात्कृपा।
स्यात्तस्यैव तथाहि साधुसुहृदां प्राप्ता भवे सङ्गतिः
(सङ्गस्तत्कृपयैव साधुसुहृदोर्जिज्ञासुकप्रेमिणोः)।।१२६४।।

विद्वानस्ति च पण्डितो ननु गृही श्रीसार्वभौमस्तथा
शास्त्रज्ञो मतिमत्प्रतिष्ठितयशा वर्णाश्रमास्थायुतः।
शास्त्रोक्तं कुरुतेऽपि वैदिकमसौ कृत्यं यथाशक्तिकं
गेहाभ्यागतसाधुसत्कृतिमलं प्रेम्णा च कुर्वन्नभूत्।।१२६५।।

अन्तश्चैवमनिर्वृतोऽपि मनसस्त्वासीत्प्रभुप्राप्तये
चैतस्यां स तु सर्वथा भगवतः पात्रं कृपायाः स्थितौ।
श्रीमत्साधुसमागमोऽस्य नियतं प्राप्तव्य एवाऽभवत्
(सौभाग्यं फलतीह निश्चितमहो! सत्यां विशेषस्थितौ)।।१२६६

प्रायोऽस्यैव च सार्वभौमसुधियस्तूद्धारहेतोः प्रभु-
स्तद्वृन्दाविपिनं मधुप्रियमहोऽगत्वा पुरीमागतः।
सर्वादौ स्वपदाब्जधूलिविशदं तत्सार्वभौमश्रिय-
श्चक्रेऽसौ गृहमेव चा-(ऽत्र परमं लक्ष्यं सतो निश्चितम्)।।१२६७।।

भक्ताग्रगण्यस्य महाशयस्य
श्रीसार्वभौमस्य पदोस्तु तस्य।
नः कोटि-कोटिः प्रणयप्रणामा
(नम्याः कृपापात्रजनाः प्रभूणाम्)।।१२६८।।

च स्वीकृत्य निमन्त्रणं सुगृहिणः श्रीसार्वभौमस्य तद्-
भिक्षां कर्तुमसौ तथाऽस्य सुमतेः प्राप्तो गृहं श्रीप्रभुः।
श्रद्धापूर्वकमेष कारयति भिक्षां सार्वभौमः स्म तं
तत्संन्यासिकयोग्यसत्कृतिमलञ्चक्रे सदाचारवान्।।१२६९।।

अन्ते स्नेहभरेण च प्रकटयन् वात्सल्यमूचे सुधीः
'स्वामिन्नस्ति तथाऽऽतिथेयगृहिणश्चैका मम प्रार्थना।
अस्तीयं भवतोऽधुना ननु बहु स्तोका त्ववस्था, तथाऽ-
दोऽवस्थाकविरक्तिरत्र भवति प्रायो नहि स्थायिनी।।१३००।।

संसारे ह्यधिकांशतः परमदोऽवस्थायुतत्यागिनां
वैराग्यं समयैस्तथा कतिपयैर्मन्दत्वमेवायते।
त्यागः स्थातुमथ क्षमो न च विना वैराग्य,मेतद्द्वया-
स्तत्प्रायोऽधिकसाधुरत्र पतति श्रेयस्कधर्मान्निजात्।।१३०१।।

तत्कार्येषु तथाविधेषु भवताऽऽसक्तेन भव्यं सदा,
यस्मात्स्यादधिकाधिकं सुमनसः संसारिवस्तु प्रति।
उद्गच्छन्मधुरामलप्रियरतेर्वैराग्यभावः सतः
(सर्वत्यागविरक्तिबुद्धिसुफलं प्रेष्ठानुरागोऽमलः)।।१३०२।।

तद्वेदान्तकदर्शनस्य भवति स्थाने प्रभूतोऽत्र नः
पाठश्चेद्भवतो रुचिस्तदिह चाऽऽगत्य श्रुतौ धीयताम्।
व्यर्थावस्थितितस्तथैव मनसि स्थाने विचारः सता-
मप्युद्गच्छति दूषितः (श्रुतिधृतं ज्ञानं मनो मार्ष्टि नुः)।।१३०३।।

आसक्तः शुभकर्मसु प्रतिपलं कौ स्वात्मशुद्धीच्छया
यस्तिष्ठ,त्युदयेत तस्य हृदि नो दुष्टो विचारस्तथा।
तच्चागम्य भवांस्तु पाठगृहकं वेदान्तसूत्रात्मक-
व्याख्यानश्रवणं करोतु (यतयो वेदान्ततत्त्वप्रियाः)।।१३०४।।

अस्ति तथैव तु धर्मः सर्वनुतः परमोऽयम्।
साधकभूमियतीना'-(मत्र यतिर्व्रतभूमिः)।।१३०५।।

ऊचे बद्धकरो महाप्रभुरयं भावाद्विनीता'दिदं
सौभाग्यन्तु, भवादृशो गुरुजनः कल्याणवृत्तस्य मे।
कुर्वाणः स्वयमेव चिन्तनमहो!, यद्भद्रहेतोर्हृदि
स्याच्चिन्ता गुरुधीमतां, स पतितः स्यादेव नो कर्हिचित्।।१३०६।।

इच्छा मेऽप्यभवद्, भवच्चरणयोरल्पोपदेशं तथा
कुर्यां श्रोतुमथार्थनां, निजमनोभावं न सङ्कोचतः।
व्यक्तं कर्तुमहो! क्षमोऽभवमहं, भावं हृदो मे भवान्
सुस्पष्टं कथनं विनैव बुबुधे (बोद्धा बुधो भावकः)।।१३०७।।

वेदान्तकसूत्रव्याख्यां ध्रुवमेव।
शृण्वन् भविताऽहं कल्याद् भवदास्यात्'।।१३०८।।

हर्षोऽभूदधिको महान् सुमनसः श्रीसार्वभौमस्य तद्-
वाचा श्रीलमहाप्रभो,र्यदि सुधीश्छात्रोऽधिकारी मिलेत्।
योग्याऽध्यापकसद्गुरोस्तु पठितुं, तस्माद्धि तस्याधिको
हर्षः स्यान्न परेण केनचि-(दहो! शिष्याद्गुरुत्वं गुरोः)।।१३०९।।

अत्रान्वेषणकं गुरोश्च हृदयं सद्योग्यशिष्यस्य कौ
कुर्वत्त्वेव निरन्तरं भवति, च प्राप्य स्वयोग्यानुगम्।
तत्सर्वस्वसमर्पणाय सुमतिः संतिष्ठतेऽत्युत्सुकः
(पातुं क्रन्दति केवलं नहि शिशुर्माताऽपि लुभ्यत्यलम्)।।१३१०।।

तच्छारीरकभाष्यकं परदिनाद् वेदान्तसूत्रस्य स
श्रीचैतन्यमहाप्रभुः स्म शृणुते, श्रीसार्वभौमः प्रधीः।
उत्साहेन समं तथैव महतोल्लासेन कुर्वन्नभूत्-
तच्छारीरकभाष्यकप्रवचनं (श्रोता प्रवक्तुः प्रियः)।।१३११।।

पाठं पाठयतश्च तस्य सुधियश्चानन्दहेतोर्मुखं
दीव्यत्तु प्रबभौ, तथा स निजकं सम्पूर्णपाण्डित्यकम्।
पाठं श्रावयति स्म विस्तरयुतं प्रादर्शयन् पण्डितः
(पाण्डित्यग्रहणक्षमोऽपि जनतामध्ये विशेषायते)।।१३१२।।

पाठं मौनमधोमुखः स्म शृणुते चैकाग्रदृष्ट्या प्रभुः
शब्दं नैकमपीह जल्पति तथा मध्ये निमायी यतिः।
एवं सप्त दिनानि संततमसौ शुश्राव पाठं, यदा
भट्टाचार्यमहाशयोऽलभत वै, नायं वदत्येव तु।।१३१३।।

जाने नो, मतिगाऽपि वा भवति नो व्याख्येयमस्य स्फुटं,
गूढोऽत्यन्तमथैव चास्ति विषयः, स्थानेऽस्ति तत्संभवम्।
नो बोद्धुं तदसौ क्षमो ननु भवे,त्पप्रच्छ भौमोऽथ तत्-
'स्वामीजी! घटते भवांस्तु निभृतं शृण्वन् स्थितः केवलम्।।१३१४।।

पाठोऽभूदथ भद्रोऽभद्रो वा, नहि किञ्चित्।
ब्रूतेऽदो निखिलं भोः! संन्यासिंस्तु निमायिन्!'।।१३१५।।

'आज्ञा त्वदायि भवता'ऽऽह विनीतभावात्
'पाठस्य केवलमथ श्रवणस्य मह्यम्।
धृत्वा स्वके शिरसि तद्भवतस्तथाज्ञां
शृण्वन् भवामि वरपाठमहं निमायी'।।१३१६।।

भट्टाचार्यकसार्वभौममतिमान् प्रेम्णा हसित्वा मना-
गूचे'ऽर्थोऽस्ति कथं श्रुतेस्त्वयमहो? पाषाणमूर्तिर्यथा।

शृण्वन्नेव तटस्थतुल्यभवनं मूकश्च भूत्वा तथा,
(श्रोतव्योऽयमथास्ति, गूढभवनाज्जिज्ञासनीयः परम्)।।१३१७।।

आयायान्न मतौ च यत्र ननु या वार्ताऽत्र भूयोऽथ सा
प्रष्टव्या, विषयेऽत्र काचिदधुना जायेत शङ्का पुनः।
तत्पृष्ट्वा करणीयमेव च समाधानन्तु तस्या मया,
निःशङ्को भवनं हि तत्र विषये त्वर्थोऽस्ति पाठश्रुतेः।।१३१८।।

एवञ्च पाठविषयो हृदयङ्गमः स्या-
ज्जायेत तत्र पुनरेव न कापि शङ्का।
आयाति (जल्पतु) मतौ भवतस्तु सर्वं?'
(स्थायित्वमत्र भुवि, यत्तु मतौ गृहीतम्)।।१३१९।।

ईषल्लज्जितभावतः कथयते 'तावत्तु मूर्खोऽस्मि, किं
शक्तः सम्प्रति बोद्धुमेव विषयं दुर्बोधमेतं स्फुटम्।
चेद् बोधेयमपीह चाल्पमधिकं, कस्माद् भवत्सन्निधौ
तच्छङ्काकरणस्य साहसमपि स्थाने विधातुं क्षमः'।।१३२०।।

ऊचे वचः सरलतासहितं स भट्टा-
चार्य'स्त्वदो न वचनं, ह्यनुयोजनीयः।
नायाति योऽत्र विषयः प्रथमं स्वबोधे,
सङ्कोचतस्तु चलिता कथमेव कार्यम्'।।१३२१।।

ईषद्भ्रीवशतो जगाद शनकैर्गौरप्रभुः संकुचन्
'सूत्राणां सरलात्मनां भगवतः श्रीव्यासदेवस्य तु।
शब्दार्थोऽत्र निमायिनो मम मतौ चायाति सौकर्यतो,
भाष्ये तु श्रुत एव सर्वविषयोऽस्तव्यस्तकं जायते।।१३२२।।

एवञ्चात्र मम प्रतीतिमयते—त्वर्थान्तराकल्पनं
शब्दानामधिकं तथाहि भगवच्छ्रीभाष्यकारैः कृतम्।
सर्वत्रैव निजैकदेशिकमते, योऽर्थश्च सूत्रान्तरात्-
स्थाने लक्षित एव नो भवति, तस्यावृत्तिरुच्चैः कृता'।।१३२३।।

एतस्मिञ्छ्रुत एव तत्प्रभुयतेर्वाक्येऽत्र, भौमश्रियः
पाठश्रोतृकसर्वशिष्यविदुषां कर्णौ तथाह्युत्थितौ।

ते चाश्चर्यदृशा प्रभोः प्रति मुखं पश्यन्त एवाऽभवन्,
भट्टाचार्यमहाशयः प्रकटयन्नूचे ततो विस्मयम्।।१३२४।।

'कीदृग्वाक्यमिदं भवान् कथयति, श्रीमच्छ्रुतेर्विद्यते
मुख्यश्च प्रतिपाद्यकश्च विषयो, हीनस्य रूपाद् गुणात्।
ब्रह्माद्वैतसतस्तु सिद्धिकरणं, शारीरके भाष्यके
तस्यैव प्रतिपादनं कृतमहोऽनाम्नस्त्वरूपस्य च' ।।१३२५।।

ऊचे मन्दमतः प्रभु'र्मम मतं तद्ब्रह्मणो वर्णनं
हीनस्याकृतितस्तथाहि गुणतो, नेदं कदापि ब्रुवे-।
नास्त्येव श्रुतिषु स्तुतिर्ननु निराकारस्य तु ब्रह्मणो
(बिम्बेन स्फुटमस्ति तु स्वकिरणै रूपं रवेरावृतम्)।।१३२६।।

रूपं गौणमुपेक्षणीयमथ यच्छ्रीभाष्यकारैः परं
साकारं सगुणं विनिश्चितमलं, मन्येऽहमेतन्नहि।
सिद्धान्तोऽयमभूत्तु विस्तरदृशाऽद्धा चैकपक्षीयकः
(पक्षाभ्यां परमण्डजोऽत्र विहगो,ऽन्यो भूगतस्तद्विना)।।१३२७।।

रूपं त्वेव तथोभयं भगवतः साकारमन्यन्निरा-
कारं निर्गुणमस्ति तस्य सगुणं मुख्यञ्च पूज्यं तथा।
"सर्वं ब्रह्म खलु त्विदं" प्रभृतिकं "तच्चैकमेवाद्वयं"
"नाना किञ्चन नेह नास्ति" नियतं यत्र ब्रुवाणा श्रुतिः।।१३२८।।

सर्वव्यापकरूपकं स्फुटं स्थाने निर्गुणकं निराकृतिम्।
भूयो वर्णयतीह तत्र तत्-(स्पष्टं सर्वविलक्षणं परम्)।।१३२९।।

४८. परमः पुरुषोऽलक्षणलक्ष्यः।
करपदरहितो निखिलग्रहणं कुरुतेऽतुलजवगतितः
पश्यत्यखिलं लोचनशून्यः शृणुते श्रवणविहीनः।
वेद्यं सकलं वेत्ति स्पष्टं तस्य न वेत्ता कश्चित्
आदिरनादिरनन्तः पुरुषः सर्वविलक्षणरूपः।।

"एकः स्यां बहु" "स स्वमैक्षत" तथा प्रत्यक्षरीत्या पुन-
श्चेत्यादि श्रुतिषु स्फुटं भगवतो रूपस्य वै वर्णनम्।
साकारस्य च वर्तते गुणवतो, गौणं भणित्वा तथा
स्थाने तत्त्यजनन्तु केवलमतिश्रीवक्रताद्योतनम्।।१३३०।।

मद्‌बोधे तु पुनश्चकार भगवाञ्छ्रीभाष्यकारस्तथा-
व्याख्यां केवलबुद्धितीक्ष्णकरणाऽभिप्रायतस्त्वेव सः।
लोके यो भवतीह केवलकमस्तिष्कप्रधानो जन,-
स्तेन स्याद्‌विहिता विचारणपराकाष्ठा परं तत्कृते।।१३३१।।

सत्यञ्चाधिकमद्‌भुतन्तु भगवाञ्छ्रीभाष्यकारो निज-
प्रत्युत्पन्नमतेर्ददौ परिचयं (बुद्धिप्रभावो महान्)।
लोके योऽत्र विचारमेव मनुते सर्वप्रधानं, स च
स्यादस्मादधिकं विचारमवनौ नो कर्तुमेव क्षमः।।१३३२।।

भक्ताः परं ये हृदयप्रधाना-
श्च भावुका वै सरसस्वभावाः।
अनेन चार्थान्तरकल्पनात्म-
व्याख्याऽध्वना स्यान्न तदीयतोषः'।।१३३३।।

'भ्रातोऽदः स्वगृहस्य नैव वचनं, श्रीभाष्यकारैः कृतं
तात्पर्यं स्फुटमात्मनो भगवतः श्रीव्यासदेवस्य तु'।
भट्टाचार्यकसार्वभौममतिमानूचे पुनः सत्वरं
'नो तेन स्वदिशाऽल्पमेव किमपि ह्युक्तं' (यथार्थः सुधीः)।।१३३४।।

चैतन्योऽल्पमतः स्मयन् कथयति 'स्थाने भवत्सम्मुखे
धार्ष्ट्यं वै भविताऽधिकप्रवचनं, किन्तु प्रसङ्गात्पुनः।
वक्तव्यं भवदस्ति चैव, भगवाञ्छ्रीव्यासदेवाशयः
सुव्यक्तस्त्वमुनैव सम्प्रति कृतः, किं वक्तुमेतत्क्षमाः।।१३३५।।

एतत्सूत्रकभाष्यमत्र भगवान् रामानुजोऽद्वैतकं
वैशिष्ट्येन समन्वितं विहितवां,स्तैरेव सूत्रैस्तथा।
तच्छारीरकभाष्यशुद्धविषमं सत्प्रेमभावात्मनां
चक्रे द्वैतमतार्पणन्तु भगवानाचार्यकश्रीमधुः।।१३३६।।

सर्वेऽमी ननु सन्ति पूज्यचरणा मान्या महान्तस्तथा
सत्कार्याः पुरुषा,स्त्वमीषु वचनं बोधेय कस्यानृतम्।
एतत्त्वेव हि युज्यते कथयितुं, व्याख्या कृतैवोचितं
तच्चैतैस्त्रिभिरेव साधुपुरुषैः स्वाद्‌दृष्टिकोणात्स्वकात्।।१३३७।।

कोऽप्येकः प्रतिपादितश्च विषयः सर्वैरमीभि,स्तथा
व्याख्याऽऽसु, त्वियमेव चात्र भवितुं कौ सर्वमान्या क्षमा।
मन्ये नाहमिदं, तु सन्ति निखिलास्ताश्चैकदेशीयकाः
(किं स्याद् व्यञ्जयितुं क्षमाऽपरिमितब्रह्माण्डदीपं क्षमा?)।।१३३८।।

प्राधीताखिलशास्त्र! चिन्तयतु सद्विद्वन्! भवानेव हे!
यश्चाष्टादश कोमलात्ममतिमद्धेतोः पुराणानि च।
सर्वेषां श्रुतियोग्यपञ्चममहो! वेदं महाभारतं
निर्मायापि न शान्तिमत्र लभते स्म ब्रह्मसूत्रं तथा।।१३३९।।

लाभायैव तु येन सर्वसुहृदा सम्पूर्णशान्तेः पुनः
कृत्वा चाखिलवेदशास्त्रजगतां सारस्य सत्संग्रहम्।
श्रीमद्भागवते प्रकृष्टचरितं श्लोकोत्तमं निर्मितं,
तत्कृत्वैव निमायिना त्वधिगताऽनन्ताऽऽत्मशान्तिर्हृदि।।१३४०।।

श्रीमद्भागवते स एव किं ब्रूते व्यासमुनिः सदाशयः।
स्पष्टं सूत्रविधातृमानसं (ह्यात्मा तुष्यति तत्त्वसंस्मृतेः)।।१३४१।।

४६. परमानन्दः सुहृदखिलानां मित्रमहोभाग्यानाम्।
नन्दयशोदागोपकुलानां व्रजधरणीजनतानाम्
वृन्दाकाननगोवर्धनगिरितृणपादपवल्लीनाम्।
कालिन्दीजलनागकुलानां गोचारकबालानाम्
नवनीताम्बरहरणक्रीडाप्रियवनिताबालानाम्।
गोकुलनन्दग्रामपराणां भानुसुताशरणानाम्
मुरलीमेलितवदनालोकनमसमोर्ध्वं सौभाग्यम्।।

भाग्यस्य व्रजवासिनां सुकृतिनां नन्दादिगोपात्मनां
श्लाघायां भविता क्षमो जगति को, यन्मित्रमस्ति स्वयम्।
पूर्णब्रह्म सनातनञ्च परमानन्दस्वरूपं स्फुटं
(भावस्थानदशासु चात्र समये व्यक्तिः परस्यात्मनः) ।।१३४२।।

उद्गारस्य तथाविधस्य गमकः श्रीव्यासदेवः पुनः
कुर्यादाग्रहमस्य चात्र वचसो, न ब्रह्मणो विद्यते।
तादृग्रूपमथैव निर्गुणनिराकारं यथार्थं, तथा
मिथ्या कल्पितमस्ति शेषमखिलं (दृश्यं हि सर्वं मृषा) ।।१३४३।।

तर्हीदं वचनं मतौ किमपि वै नायाति, निर्दिश्य यः
श्रीकृष्णन्तु सनातनञ्च परमब्रह्मा,धिकं शंसनम्।
सौभाग्यस्य करोति गोपजनताऽसद्‌ग्रामिकाणा,मयं
कर्त्तैवं तु हठं, तथैष विषयः किञ्चिद् विचार्योऽस्ति नः'।।१३४४।।

भूत्वा चेषदहो! निरुत्तर इव श्रीसार्वभौमः क्षणं
संचिन्त्याऽऽह पुन'स्तदा तु भगवच्छ्रीशङ्करस्य स्फुटम्।
सिद्धान्तस्य तथाखिलस्य भवति द्राक्खण्डनं हेलया
(सच्चिज्ज्ञानमयः शिवः स्वयमितः श्रीशङ्कराचार्यकः) ।।१३४५।।

स्वग्रन्थेषु तथाखिलेषु कृतवांस्तद्ब्रह्मणश्चैव स
स्पष्टं तु प्रतिपादनं बहुविधं तन्निर्विशेषात्मनः।
मिथ्या दृश्यमिदं निवेद्य च जगद्वै नामरूपात्मकं,
मन्तुं ब्रह्म तथा स्वमेव मतवान्' (सर्वं मनोमान्यता) ।।१३४६।।

ईषच्छ्रीघ्रमथ प्रभुः कथयते 'का खण्डनस्यास्ति वा
वार्ताऽस्मि,न्ननु विद्यतेऽत्र भगवद्दत्तैव बुद्धिस्त्वपि।
लोके सर्वमिदन्तु बौद्धिकचमत्कारोऽस्ति शब्दात्मकं
(शब्दब्रह्म पदे, श्रुतौ तु परमं, भावे ततोऽपि प्रियम्) ।।१३४७।।

सिद्धान्तं प्रतिपाद्य चात्र भगवाञ्छ्रीशङ्करोऽद्वैतकं
कृत्वा दर्शितवांस्तथाऽस्त्यवितथं नूनं विचारान्तकम्।
सत्यं, तर्कविचारशक्तिरमुना संप्रापिता कौ परा -
काष्ठां (लोकमतिस्तु याति दिशया, भ्रान्ताऽथवा सा भवेत्) ।।१३४८।।

"अस्ति ब्रह्म तु जीव एव" विदुषोऽयं तस्य मस्तिष्कक-
श्रीसर्वोच्चविचारतर्कजगतश्चैकस्तु भावः परम्।
सर्वोत्कर्षमय,स्तु तस्य हृदयं जिज्ञासनीयं मनाक्,
किं तत्रास्ति वचो यथार्थमपरं (ग्राह्यो यथार्थः सतः) ।।१३४९।।

सिद्धान्तस्य तथास्य चैव भुवने यो यावदायु"स्त्वहं
ब्रह्माऽऽस्मी"ति बभौ प्रचारकरणे प्राज्ञो ह्यभेदस्थितेः।
एकान्ते सुरसिन्धुपावनतटे तस्यैव साधोर्मुखा-
दुद्गारः स्वयमेव योऽसरदहो ! वाष्पं तथा मुञ्चतः।।१३५०।।

ध्यानं तु देयमथ तत्प्रति चापि सद्भिः,
पश्यन्तु सम्प्रति, कियत्करुणस्वरेण।
मुञ्चन्नथाश्रु ननु गद्गदकण्ठतः स्वा-
मभ्यर्थनां स कुरुते प्रभु सम्मुखस्थः-।।१३५१।।

५०. नाथ ! स्मः सर्वे भवतोंऽशाः।
प्रकृतिस्तव निर्देशाज्जगतीं तनुते प्रतिपलमखिलम्
त्वत्सद्रूपां चेतयसे तां चिद्रूपस्त्वं सर्वाम्।
आनन्दस्त्वं ताभ्यां परमः सर्वान्तोऽभिप्रेतः
हे स्वामिंस्तव कृपयैव स्यात्स व्यक्तस्त्वस्माकम्।।

हे नाथ ! त्वयि, संसृतौ मयि तथा भेदस्तु कामं न वै,
स्वामिंस्तर्ह्यपि चास्मि ते, मम नहि त्वञ्चासि, सत्यं त्विदम्।
भेदो नाऽस्तु तथाहि वास्तविकतश्चाब्धौ तरङ्गे पुनः
सामुद्रं तु तरङ्गमेव मनुते, तारङ्गमब्धिं नहि।।१३५२।।

एतद्वै पुरुषस्य तस्य महतो वाक्यं, त्रिकालेऽपि यः
किञ्चिन्नो मनुते जग,न्मम तथाऽहं, जन्म मृत्युः पुनः।
यद्दृष्टौ ननु कल्पनैव निखिलं स्पष्टा, तथासीदिदं
मस्तिष्कस्य वचस्तु तस्य (विदुषो मस्तिष्कमर्थोन्मुखम्)।।१३५३।।

शुद्धस्य तस्य हृदयस्य तथोर्ध्वभावः
साऽभ्यर्थना तु सरसस्य च निश्छलस्य।
(सद्भावमात्ररुचितं हृदयं प्रमातुः)
श्रीव्यासदेवमुनिना तु तदैव चोक्तम्-।।१३५४।।

*"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।*
*कुर्वन्त्यहैतुकीं भक्ति-मित्थंभूतगुणो हरिः"।।*

५१. भजते भुवि निर्ग्रन्थो मुनिरपि भजनोचितगुणवन्तम्।
भजनं सेवनमिह निखिलानां जीवानां स्वप्रकृतिः
तद्भजनं भौतिकभोगार्थं ममताऽहंताजगताम्।

आत्मारामाः संसृतिमौना हेतुरहितहरिभक्तिम्
विदधति, यस्मात्साधून् भक्तान् प्रेम्णा भजते भगवान्।।

श्रुत्वा वचः प्रभुमुखात्तदिदं स्वकीयं
वैलक्ष्यमत्र ननु लोपयितुं स भौमः।
'आमा'मुवाच 'कुरुतेऽस्य भवान् कमर्थं
श्लोकस्य, मामपि निशामय भो निमायिन्!'।।१३५५।।

ऊचे दीनतया समं सहृदयस्त्वत्यन्तमेव प्रभु-
'र्व्याख्यातुं किमहं पुरोऽत्र भवतः श्लोकन्तु कामं क्षमः ?।
कर्मेदं भवतस्त्वथैव, कृपयाऽद्धा श्रावय त्वत्र मां
व्याख्यामस्य विधाय, मेऽत्र भविता (प्रक्ष्यामि) बोधे न यत्'।।१३५६।।

किञ्चित्तूत्तरदानकर्मणि तथाऽऽसीत्सार्वभौमोऽक्षमो
यावत्सम्प्रति, तत्प्रति प्रभुमुखं चैकाग्रभावात्पुनः।
पश्यंस्तस्य वचांसि स स्म शृणुते, प्राप्तस्त्वमुष्यात्मनः
पाण्डित्यस्य प्रदर्शनकृतेः कालो मनाक्साम्प्रतम्।।१३५७।।

हर्षेणातिशयेन तत्स विविधाः शङ्कास्तथोत्थापयन्
शास्त्रीयञ्च तथा प्रमाणमपरं स्थाने ददानो बुधः।
एकस्यैव लघोरमुष्य नवधा श्लोकस्य चक्रे द्रुतं
व्याख्या,मर्थमुवाद तन्नवविधं कृत्वा पृथग्वै पृथक्।।१३५८।।

समापयन् सम्प्रति सार्वभौमो
व्याख्यां निजां, गौरमुखं ददर्श।
श्रोतुं स्वपाण्डित्यतथाप्रशंसां
समुत्सुको-(ऽत्यन्तरुचिः स्वशंसा) ।।१३५९।।

कुर्वंस्तत्प्रचुरप्रशंसनमसावूचे 'तु धन्यं' प्रभुः
'पाण्डित्यं भवतो यथा श्रुतिकृता चासीत्प्रशंसा मया।
अत्रागत्य तथाहि तत्परिचयः प्रत्यक्षमेवार्जितो,
व्याख्यां कर्तुमथैव तु प्रभुरियत्पाण्डित्यपूर्णां भवान्।।१३६०।।

कार्यं त्वत्परपण्डितस्य नहि, यत्सारल्यतश्चेयतः
स्यादर्थान्तरकल्पनेन नवधा वक्तुं क्षमोऽर्थान् विना।

किन्त्वेतन्नवसंख्यकार्थकपृथक् त्वन्येऽपि चार्थास्तथा
सुस्पष्टं भवितुं क्षमा बहुविधैः श्लोकस्य चास्यैव तु'।।१३६१।।

आश्चर्यं सह संभ्रमेण निदिशन्नत्यन्तमेवाऽवदद्-
भट्टाचार्यकसार्वभौमविबुधः 'किं तूक्तवान् ? मे पृथक्।
अर्थेभ्यस्त्वितरेऽपि चास्य भवितुं श्लोकस्य चार्थाः क्षमा,-
श्चेच्छक्नोतु भवान् विधातुमधुना तच्छ्रावयत्वल्पकम्!'।।१३६२।।

सारल्येन जगाद चैव महता गौरो विनीतस्वरे
'किं कर्तुं प्रभवेयमस्मि भवतां स्थाने, गुरूणां मुखात्।
व्याख्यामुष्य तथैवमेव किमपि त्वल्पाधिकं मे श्रुता,
ताभ्यो यत्किमपीह चाल्पमधिकं मेऽस्ति स्मृतौ साम्प्रतम्।।१३६३।।

तच्छ्रावयामि भवतामधुना निदेशा'-
दुक्त्वा महाप्रभुरिदं कृतवानिदानीम्।
अष्टादशात्मकतयोपरि दत्तपद्य-
व्याख्यां (तथाहि गुरवे द्विगुणन्तु दद्यात्)।।१३६४।।

तत्पाण्डित्यसमन्वितां प्रभुमुखाद् व्याख्यां निशम्येदृशीं
भट्टाचार्यकसार्वभौमसुधियस्त्वाश्चर्यसीमा नहि।
व्यस्मार्षीत्स निजात्मतां, ननु यथा स्वप्ने विलोक्याद्भुतां
कश्चिद्वै घटनां, सविस्मयमहो ! पश्यत्यलं तत्प्रति।।१३६५।।

पश्यंस्तद्विधमेव स प्रभुमुखं श्रीसार्वभौमो बभौ,
सम्प्रत्यस्य महाप्रभोस्तु महिमा तस्य प्रतीतोऽभवत्।
भक्तिर्जागरिता च तस्य हृदये लीना,ऽस्य मन्येऽधुना
श्लोकस्यास्य तथाऽस्फुटां कृतवती व्याख्यैव भक्तिं स्फुटाम्।।१३६६।।

सम्मानस्य निजस्य सम्प्रति पदख्यातिप्रतिष्ठाश्रियां
विस्मृत्य त्वभिमानमेष पदयोः सारल्यतः श्रीप्रभोः।
एकाल्पार्भकसन्निभोऽत्र पतितो धृत्वाऽरुणे तत्पदे
शोणस्थूलदशाङ्गुलैः स्वकरयोरस्तौद्रुदन् 'पाहि माम्'-।।१३६७।।

५२. भगवन् ! मे स्ववलम्बं वितरतु।
संसृतिकूपेऽगाधे पतितो मोहान्धे ह्यतिसक्तः

स्वोद्धारोपायं नहि जाने पश्याम्युद्धर्तारम्।
गोविन्द ! श्रीदामोदर ! हे ! माधव ! नाथ ! प्रियतम !
द्रुतमवलम्बं स्वकरकृपाया यच्छतु सर्वसमर्थ ! तु।।

एतत्संसृतिरूपसागरमहाघोरात्मजीवान्तरे
नानासंकटपीडितस्य विषयासक्तस्य च क्लिश्यतः।
साहाय्यं करयोर्निजस्य, मम वै दत्वाऽधमस्यात्मनो,
हे ! नाथोद्धर मां, त्वदीयशरणे प्राप्तोऽस्मि विश्वम्भर !'।।१३६८।।

एवं स स्तुतिकं प्रभोस्तु विविधं कुर्वन्नभूत्पण्डित -
स्तस्मिन्नेव तथाक्षणे प्रभुतनौ स्थाने त्वमुष्याऽद्भुतम्।
श्रीमत्षड्भुजमूर्तिदर्शनमभूत्तद्दर्शनात्तस्य तत्-
प्राचीनाखिलपापजातमभवन्नष्टं प्रतीत्यन्धकम्।।१३६९।।

स चाद्य घोरतार्किकान्मतिप्रधानपण्डितात्।
अभूत्परञ्च भक्तिमांस्तथाग्रगण्यवैष्णवः।।१३७०।।

प्रेम्णोत्थाप्य तमालिलिङ्ग सुमतिं प्रेमावतारप्रभु,-
श्चैवालिङ्गनके प्रभोरधिगते भूयोऽपतन्मूर्च्छितः।
आसीद्दृश्यमिदं तथैव करुणापूर्णन्तु भूरि क्षणं
(भक्तिप्रेमयुतो ह्युदेति समये कारुण्यभावो हृदः) ।।१३७१।।

शिष्यास्ते महतः कुतूहलादाश्चर्यात्सुमतेस्तथाखिलाः।
ईक्षन्ते स्म तदीयदृश्यकं (संसारोऽखिलविस्मयाकरः)।।१३७२।।



# भगवत्प्रसादे सार्वभौमस्य विश्वासः

५३. श्वासः सामान्यो, विश्वासः परमतिपुण्यवतामिह।
अन्योन्यं विश्वासादेव प्रचलति लौकिकवृत्तिः
भयलोभापेतो विश्वस्तः सामान्येतरलोकः।
महाप्रसादे, भगवति, नाम्नि, ब्रह्मणि, भागवते भुवि
इह बहुपुण्यवशादुदयति हृदि विश्वासस्त्वसमोर्ध्वः।।

अप्रेमाऽस्ति तु मुख्यकारणमहो ! लोकात्मनां सर्वदाऽ-
विश्वासस्य, तथाहि यत्र हृदये न प्रेम तत्र ध्रुवम्।
विश्वासोऽपि न, यत्र संसृतितले प्रेमाऽस्ति तत्रैव वै
विश्वासोऽपि विराजते-(ऽपरगुणो विश्वास एवात्मनः) ।।१३७३।।

सम्पूर्णस्य तथाऽस्य दृश्यजगतस्त्वस्तित्वमस्ति ध्रुवं
विश्वासोपरि चैव नोऽत्र मनसो ह्यद्वैतवेदान्ततः।
विश्वासो भविताऽत्र नश्च मनसो लुप्तो यदाऽदोजगत्-
सत्यत्वात्तु, तदा तथाहि नियतं भाव्येव नेदं जगत्।।१३७४।।

वेदान्तिनश्च कथयन्ति – विधेहि तत् त्वं
विश्वासमस्य वचसः सततन्तु सत्यम्।
'आनन्दचिन्मयशिवोऽस्मि शिवोऽस्मि सोऽहं'
(यच्चिन्तनं मनसि तन्मयमेव सर्वम्) ।।१३७५।।

वृत्तिर्नस्तु बहिर्मुखी, तनुमतां नोऽस्तीन्द्रियाणां यतो
द्वारं बाह्यमुखं तथास्ति, तु वयं तद् बाह्यवस्तुष्वलम्।
विश्वासं विदधाम, किन्तु ननु यल्लीनं रहस्यं पुन-
स्तेष्वन्तो भवतीति, तन्नहि वयं बोद्धुं भवामः क्षमाः।।१३७६।।

अन्तर्लीनरहस्यमत्र भुवि तद् येनैव बुद्धं परं
सर्वस्मान्ननु बन्धनात्स सुकृती मुक्तोऽभवद् वस्तुतः।
संसारे भगवत्प्रसादमिषतो लोकाः कियन्तो निजां
पूर्णां भौतिकवासनां विदधते (सद्वासनार्थं नृता) ।।१३७७।।

कौ ह्येवंविधपापकर्मसु जना धृत्वा तु नामाश्रयं
मग्नाश्चात्र भवन्ति, वास्तविकतो नाम्नः प्रसादस्य च।

माहात्म्यं विदितं तथा भगवतस्तेषां न, तस्मात्तु ते
श्रीहीरं ददते पुनर्विनिमये काचस्य कौ दीव्यतः।।१३७८।।

शक्तं सर्वाविधाऽघकस्य भगवन्नामास्ति संनाशने,
तद्विक्रेतृकरेऽत्र हेमरजतक्षुद्रात्मखण्डोपरि।
खण्डान्येव वसन्ति तानि, भगवन्नाम्नस्तथाऽकृत्रिमात्-
सुस्वादोर्मधुरात्फलादतिशयात्तिष्ठन्ति ते वञ्चिताः।।१३७९।।

विश्वासेन महाप्रसादमपरं यश्चैकदाऽऽपाऽवनौ
तज्जिह्वा पुनरम्लमिष्टविषयं कौ भेदभावं तथा।
विस्मर्ता, भगवत्सुनामरसनं विश्वासनिष्ठायुतं
यश्चक्रेऽत्र सकृन्-(नरत्वपरमस्थानं हि नारायणः) ।।१३८०।।

तस्य पुनर्नहि वाञ्छा कस्यचिदत्र भुवि स्यात्।
स्थातुमथ प्रभुरेव (श्रीरपि तं समुपास्ते) ।।१३८१।।

श्रेष्ठो गुरुरेकः सत्साधुमहात्मा।
आह प्रभुदत्तं त्वाख्यानकमेकम्।।१३८२।।

'एकासीत्परमं हि सौम्यहृदया स्त्री, सा कदाचित्त्वपि
श्रीनामग्रहणं मुखाद् भगवतश्चक्रे न, वै जीवने।
नो कर्मापि कदापि दूषितमसौ किञ्चिच्चकारावनौ,
तद्द्वारा भवति स्म कष्टमिह नो कस्यापि जन्तोस्त्वपि।।१३८३।।

एकमहद्गुरुभक्ताऽऽस्याच्छ्रुतमह्नि कदाचित्।
पद्यमथ त्वनयेदं (कर्ह्यपि भद्रमवश्यम्) ।।१३८४।।

५४. प्रणतिः पुरुषाणां परमार्थो, यदि कृष्णस्य क्रियते।
अहंकृतिस्त्वभिमानो मूलं सर्वासामिह विपदाम्
कर्ता भोक्ता प्रेरयिता प्रभुरिति निश्चयनं शान्तिः।
रचयति रक्षति संहरतेऽखिलमनिशं स स्वेच्छातः
श्रीकृष्णप्रणयार्पितजीवो भवजीवादतिरिक्तः।।

श्रद्धाभक्तियुतं प्रणामकरोद् यः कृष्णपादाब्जयो-
रेकं वारमपीह, तस्य तु फलं कौ तावदेवाऽयते।
यावत्त्वत्र दशाश्वमेधकरणात्प्राप्नोति ना याज्ञिको,
भेदः किन्त्वनयोर्द्वयोर्ननु फले चैको महान् जायते।।१३८५।।

संसारं पुनरेति तत्क्रतुकरः, कृष्णप्रणामी परं
भूयः संसृतिचक्रके भ्रमति नो, मुक्तस्तु चक्रादतः।
सोऽजस्रं प्रभुपादपद्मयुगले स्थाने लुठंस्तिष्ठति
(स्थानं तद्वरमत्र, यत्र ललितः कृष्णो मनःकर्षणः) ।।१३८६।।

भावेऽस्य श्रुत एव सौम्यहृदया श्लोकस्य सा स्त्री क्षणा-
ज्जाताऽद्धा विकला, मुदा पुलकिता सम्पूर्णतन्वा तथा।
दृग्भ्यामश्रु ससार, गद्गदगलादूचे स्खलद्वाचि सा
पश्चात्तापयुतस्वरे त्वतिशये (तापोऽपि पश्चा,त्तपः) ।।१३८७।।

'हा ! नाकारि दिनं मयैकमपि पादाब्जे प्रणामः प्रभो-
र्यावत्सम्प्रति' सा यदैव तदियच्चोक्त्वा विधातुं नतिम्।
अग्रेऽयात्तु तदैव नश्वरमिदं त्यक्त्वा शरीरं हरे-
र्धामाऽनन्तमगात्' (प्रभुं प्रति सृतिः सद्यःफला ह्यात्मना)।। ।।१३८८।।

विश्वासो ननु नाम श्रद्धाऽस्यैव तथा वा।
विश्वासादत एव प्राप्तिः स्यात्प्रभुमूर्तेः।।१३८९।।

५५. तदिदं कवीरवचनम्।
गायंस्तिष्ठति सततं प्रभुपदमिह, तस्मादपि दूरम्
यो न स्मरति मनोरसनाभ्यां, तस्य कथं तत्प्राप्तिः।
यो विश्वासान्मनसा वचसा स्मरति प्रेम्णा दयितम्
सततं तस्य स्वजनो बन्धुः सुहृच्चराचरजगतः।।

भट्टाचार्यकसार्वभौमसुमतेः श्रद्धा प्रभोः पादयो-
र्निष्पेदे ननु पूर्णतो,ऽस्ति वचनं शास्त्रस्य य,च्चेतसि।
उत्पत्त्या भगवत्सुभक्तिसरितः सर्वे तथासद्गुणा -
श्चागत्य स्वत एव तत्र तु विनाऽऽह्वानं वसन्ति ध्रुवम् ।।१३९०।।

छायाऽस्ति प्रियसद्गुणस्तु भगवद्भक्तेः, परत्र स्थले
छाया स्थातुमथ क्षमा नहि तनुं त्यक्त्वाऽत्र जाते तथा।
विश्वासे क्वचिदेव तादृशि, पुनः सर्वेषु सत्कर्मसु
श्रद्धा स्यात्स्वत एव (भावजगतो विश्वास एवाश्रयः) ।।१३९१।।

यातोऽसावरुणोदयस्य समये श्रीमज्जगन्नाथजी-
देवस्यात्र महाप्रभुश्च शयनोत्थानेक्षणायैकदा।

सम्पन्ने प्रभुदर्शनेऽस्य च ददौ मालाप्रसादान्नके
श्रीमन्मन्दिरपूजकः (किमपि नो नाथप्रसादात्परम्) ।।१३६२।।

तं जग्राह महाप्रसादमुभयौ हस्तौ प्रसार्य प्रभुः
स प्रेमी महताऽऽदरेण, चलितो बद्ध्वा स्ववस्त्रे तथा।
भट्टाचार्यकसार्वभौमगृहिणो गेहोन्मुखः, सूचना-
दानादेव विना गृहान्तरमगान् (न प्रेम्णि बाधा क्वचित्) ।।१३६३।।

तस्मिन्नेव तथा क्षणे गृहपतिः श्रीसार्वभौमो बुधो
निद्रातश्च विबुध्य तत्र भगवन्नामानि तूच्चारयन्।
निर्यास्यन् परमेव सम्प्रति तथाऽऽसीदास्तरात्पण्डितः,
प्राप्तस्तावदसौ महाप्रभु-(रहो ! सौभाग्यमाकस्मिकम्) ।।१३६४।।

अस्तव्यस्त इव द्रुतं द्रुतमसौ श्रीसार्वभौमः प्रभुं
शय्यातः प्रियमुत्थितो गृहपतिर्दृष्ट्वैव तत्पादयोः।
साष्टाङ्गं नमनञ्चकार, च ददौ साधूत्तमायासितुं
तस्मै सुन्दरमासनं (गृहमितस्यादौ भवत्यासनम्) ।।१३६५।।

उद्घाट्य स्वपटात्स्थितः प्रभुरयं चैवासने दत्तवान्
प्रेमी श्रीभगवत्प्रसादमपरश्रीसार्वभौमाय सः।
'दत्तेऽद्यैष महाप्रसादमपरः कृत्वा कृपामात्मनो
हस्तेन प्रभु'रस्ति तस्य न मुदः सीमा विचिन्त्येदकम्।।१३६६।।

तं जग्राह महाप्रसादमधुना दीनो यथाऽभ्यागतः
प्राप्तं चैव करे निवृत्तिभवनाच्छौचक्रियादेर्विना।
व्युष्टेनैव तथा मुखेन स पुनः स्वादन् प्रसादं बभौ,
गायन् पद्मपुराणपद्यमभवद् गृह्णन् प्रसादं मुदा –।।१३६७।।

५६. प्रसादविषये का प्रत्याशा ?
उक्तं हरिणा स्पष्टं स्वयमिह पद्मपुराणाख्याने
'नहि करणीयः प्रियप्रसादास्वादे कालविचारः।
शुष्कः पर्युषितस्त्वथवा स्याद् दूरदेशतो नीतः
नारायणपूजनप्रसादः, प्राप्त एव भोक्तव्यः।
देशकालनियमस्तद्रसने करणीयो नहि सुजनैः
प्रसादमन्नं भुङ्क्तां क्षिप्रं' यत्प्रसादे प्रसादः।।

विश्वासेन तथा प्रसादमधुना चानन्दपूर्वं पुन-
र्भुञ्जानं ननु सार्वभौमसुमतिं दृष्ट्वा, न सीमाऽभवत्।
आनन्दस्य महाप्रभो,रयमतोऽनृत्यच्च धृत्वा करं
भट्टाचार्यमहाशयस्य (सुहृदां सौहार्दलब्धिर्निधिः) ।।१३६८।।

भट्टाचार्यमहाशयोऽपि च यथोन्मत्तोऽस्वतन्त्रस्तथा
संनृत्यन् प्रभुणा सहाऽस्ति, गृहिणः स्त्री सार्वभौमस्य च।
शिष्यास्तत्र सुतो विलोक्य तददोदृश्यं त्वपूर्वं पुन-
र्दृष्ट्वा कारणमस्य किञ्चिदपि नो बोद्धुं तदाऽशक्नुवन्।।१३६६।।

कुर्वन्नस्ति च सार्वभौमसुमतेरालिङ्गनं श्रीप्रभु-
र्वारम्वारमथाऽऽह गद्गदगलो'ऽभूत्सार्वभौमोऽद्य वै।
धन्यः, स्वे भगवांश्चकार शरणे श्रीवासुदेवोऽद्य तु
स्पष्टं पण्डितवासुदेवगृहिणं (गेहेऽपि धन्यः कृती) ।।१४००।।

भट्टाचार्यमहाशस्य निखिलं सांसारिकं बन्धनं
छिन्नं जातमथाद्य, पण्डितगृही चिक्राय भौमोऽद्य माम्।
शौचाचारविदस्तथेदृशगुरोः प्राज्ञस्य जातो यदा
विश्वासोऽत्र महाप्रसादमधिकः स्थाने प्रतीयान् दृढ़ः।।१४०१।।

मन्येऽहं तदितोऽधिको ननु भवेऽद्धा सार्वभौमात्परो
भक्तो नो भवितैव कोऽपि, विहितो धन्योऽधुनाऽहं यतिः।
भट्टाचार्यमहोदयेन, सफलं जातं ममाद्य स्फुटं
श्रीपुर्यागमनं' (पुरीतनुगतिर्धन्यायते कस्यचित्)।।१४०२।।

श्रुत्वैतादृशकं वचः प्रभुमुखाज्जातो मनाग् लज्जितो
भट्टाचार्यकसार्वभौमसुमतिः, सम्पूर्णदेहे निजे।
वारम्वारमथ प्रभोः पदरजः संलेपयन् भाषते
'स्थाने सर्वमिदं प्रभोः पदकृपा (श्रीपादभावो महान्) ।।१४०३।।

कृत्वैवाधमके कृपां मयि भवान् संसारवारान्निधौ
मज्जन्तं तु विगृह्य पाणिमपरो निर्मोचयामास माम्।
सम्प्रत्यत्र निमायिनस्तु भवतो दासानुदासोऽस्म्यहं
ह्यादेशो भविता यथाऽपि च यदा तस्यैव कर्ताऽर्चनम्'।।१४०४।।

भट्टाचार्यमुखात्तथेदृशवचः श्रुत्वा मनाङ् निर्दिशन्
लज्जाभावमथ प्रभुर्ननु ततो यातो निमायी यतिः।
अश्रौषीच्च यदा तथाप्रियमिदं वृत्तं बुधो गोपिका-
नाथस्तर्हि बभूव सोऽतिमुदितो (मोदः प्रियाऽभ्युन्नतिः) ।।१४०५।।

सन्ध्यायां प्रभुदर्शनाय सुमतिः श्रीसार्वभौमस्तथाऽऽ-
यात,स्तत्र समागतोऽपि समये तत्रैव गोपीबुधः।
गोपीनाथसुधीः स्मयन् कथयते पूर्वं प्रणम्य प्रभुं
'भट्टाचार्य-महाशय! स्मरतु भोः! (काम्या तदीया स्मृतिः) ।।१४०६।।

मद्वचनं ननु सत्यं निर्गतमत्र न पूर्णम् ?।
सम्प्रति जल्पतु गन्ता कुत्र पलाय्य पुरीतः?'।।१४०७।।

धृत्वा तत्र शिरः क्षितौ सहृदयः कुर्वन् प्रणामं तथा
गोपीनाथबुधस्य पण्डितवरः श्रीसार्वभोमोऽभणत्।
'एतत्सर्वमहो ! भवच्चरणयोः स्पष्टं कृपा, मत्समे
वा संसारिणि मानवे किमपरां कर्ता प्रभुः स्वां कृपाम् ?।।१४०८।।

अनुग्रहाद्वै भवतस्तथैव मे
प्रभोः पदाब्जाप्तिरिह क्षमाऽभवत्'।
तथा प्रयाते वचनक्रमे प्रिये
श्रीसार्वभौमः स्वगृहं समागतः।।१४०९।।



# सार्वभौमस्य भक्तिभावः

५७. शशिनं नौमि स्फुटचैतन्यम्।
स्पष्टं शशिनि व्योमस्थितिमति, शशवत्त्वान्न स्फुटमिह
रश्मिशैत्यमिश्रितचेतनता तस्य प्रसरति भुवने।
तर्ककर्कशाशयसार्वभौमभट्टाचार्यं कृतवान्
अमलमधुरभूस्फुटचैतन्यश्चैतन्यः सद्भक्तम्।।

एकस्मिन् दिवसेऽस्य दर्शनमनाः स्थानं जगाम प्रभो-
र्भट्टाचार्यमहाशयः, प्रभुरदात्प्रेम्णाऽधिकेनाऽऽसनम्।
आसत्तुं सुहृदोऽस्य, तद्वचनतस्तत्रोपवेशादनु
ब्रूते बद्धकरो महाशयसुधीः (स्थाने विसर्गो हृदः) ।।१४१०।।

'एकस्य स्मरणं विधाय वचसः प्रेमिन् ! प्रभो ! स्वोपरि
ग्लानिर्मे बहु जायते च महती, सामान्यसंन्यासिनम्।
बुद्ध्वा त्वामपरं स्वशास्त्रनिवहज्ञानाभिमाने पुन-
श्चक्रेऽहं ह्युपदेशदानपरकं मिथ्याभिमानं त्वयि।।१४११।।

दुःखं तेन तथाधिकं भवति मे चक्रेऽपि चालोचनां
गोपीनाथबुधेन सार्धमपरां कट्वीं तवाऽज्ञानतः।
गुर्वी तन्निजपूर्वकृत्यविषये लज्जाऽधुनाऽऽयाति मे'
(लज्जा सत्त्वगुणोदिता निजकृते ज्ञाते कुकृत्ये सतः) ।।१४१२।।

'आचार्या'ऽऽह महाप्रभुस्त्वतिशयस्नेहं तथाऽऽदर्शयन्
'वार्ता सम्प्रति कीदृशीं नु कुरुतेऽपेतः स्मृतेर्वा भवान्।
जाने यावदहन्तु वास्तविकतो, नोक्तं तु किञ्चिद् वचः
सम्बन्धेऽनुचितं च मे न भवताऽशिष्टं कृतं कर्हिचित्।।१४१३।।

एतादृग्व्यवहारचिन्तनमहो ! कर्तुं न कश्चित्त्वपि
श्रद्धालोश्च भवादृशः सहृदयाच्छास्त्रज्ञविप्रात्क्षमः।
चेत्किञ्चित्समयाय चैव मनुता,मप्यत्र किञ्चित्कृतं
वृत्तं तेऽनुचितं निमायिसुहृदस्तत्तावदेवाऽभवत्-।।१४१४।।

यावन्मे भवतः प्रगाढमुदितः सत्प्रेमबन्धोऽत्र नाऽऽ-
सी,त्तु प्रेम्णि तथोदितेऽखिलवचो विस्मार्यते पूर्वगम्।

आरब्धं भवतीह नूतनविधं त्वेकं पुनर्जीवनं
जाते प्रेम्णि (पुरातनत्वमयतेऽन्य,त्प्रेम नूत्नायते) ।।१४१५।।

जाते जन्मनि पूर्वसर्वजनिगा वार्ता यथा विस्मृता,
तद्वत्प्रेम्णि पुनस्तु पूर्ववचसो न ध्यानमेवाऽऽयते।
शिष्टाचारभयक्षमास्मयघृणालज्जाऽपराधादिक -
द्वैधीभावविकासिवृत्तिरुदिते न प्रेम्णि तिष्ठत्यलम् ।।१४१६।।

आस्वादनस्य स्थितिरेव शेषा
तु नित्यनूत्नस्य रसस्य तत्र।
संतिष्ठते, किं न तथास्ति सत्यं ?'
(श्रुतौ 'रसो वै स' तथेति सिद्धम्) ।।१४१७।।

किञ्चिच्चापि तथाऽस्य नोत्तरमदाच्छ्रीसार्वभौमः, क्षणं
तस्थौ सम्प्रति मौनमेव, युयुजे किञ्चित्क्षणानन्तरम्।
'उद्गन्तुं भगवत्पदाब्जशरणे हेतुं विना स्यात्प्रभोऽ-
नन्या भक्तिरथ क्षमा, किमिव तत्सर्वोत्तमं साधनम् ?' ।।१४१८।।

'सर्वेषां नहि दीयते ननु समे रोगे समं त्वौषधं,
दृष्ट्वाऽत्र प्रकृतिं तथाहि मतिमान् वैद्यः करोत्यौषधे।
तत्रावश्यकतानुसारमपि वै तस्यानुपाने तथा
याथार्थ्यं परिवर्तनं (नियमतो रोगी न सर्वः समः) ।।१४१९।।

पुष्टिर्भोजनतस्तथाहि वपुषस्तुष्टिः पुनश्चेतसोऽ-
दःकार्यत्रयमत्र संभवति कौ जन्तोर्निवृत्तिः क्षुधः।
सर्वेषां नहि दीयते परमहो ! तत्तुल्यमेवाशनं
पुष्ट्यै क्षुच्छमनाय (पाचनमुखं जन्तोर्हि शस्ताशनम्) ।।१४२०।।

यस्य स्यादनुकूलमत्र भुवि यल्लाभप्रदस्तत्कृते
तस्यैवास्ति तथाहि सेवनविधिः शास्त्रेष्वनेकं ततः।
उक्तं साम्प्रतसाधनं हि भगवत्प्राप्ते,स्तु काले कलौ
श्रीनामस्मरणातिरिक्तमधुना किञ्चित्परं साधनम्- ।।१४२१।।

सम्पन्नं भविता नो सारल्येन, हरेस्तत्।
नामैवोत्तममस्मिन् काले साधनमच्छम्' ।।१४२२।।

'प्रक्रिया ननु भगवतो नामकस्मरणसरणेः
का प्रभो ! वदतु कृपया' (कं विधौ जगति नियते) ।।१४२३।।

श्रीचैतन्यमहाप्रभुः कथयते 'का प्रक्रिया ?' सत्वरं
'नो किञ्चित्त्वपि तन्निमायिभगवन्नाम्नस्तथा प्रक्रिया।
प्राप्तः स्यात्समयो यदापि, विषये यत्रापि, यस्यां स्थिता -
वप्यस्तु स्वमुखाद्भवेत्तु विदधच्छ्रीनामकोच्चारणम् ।।१४२४।।

कुर्याद्वै नियतासु तद्भगवतः संख्यासु नाम्नो जपं,
चात्यन्तं यदपि प्रियं स्वमनसः स्यात्तादृशश्चिन्तनम्।
रूपस्यात्र करोतु, वै भगवतो नाम्नश्च संकीर्तनं
कुर्यात्तस्य गुणानुवादरसनं (सेव्यः प्रियः सर्वतः)।।१४२५।।

लीलानां कथनं कुरु प्रियहरेरन्योन्यमाकर्णनं,
सारांशोऽयमथास्ति, येन विधिना केनापि भूयादपि।
स्वप्राणेन्द्रियदेहचित्तमखिलं कुर्यात्सदा केवलं
प्रेष्ठश्रीभगवत्परायण'-(मलं प्रेष्ठप्रियं जीवनम्)।।१४२६।।

'ध्यानमस्मिन् प्रभो!। तस्य कार्यं कथम् ?'।।१४२७।।

'वृत्तिः स्वस्य तथाहि बाह्यविषयं प्रत्युन्मुखीर्वारय,
श्रीरूपञ्च यदापि तद्भगवतः कर्माणि कौ कुर्वताम्।
अस्माकं स्मृतिदृष्टितो ननु भवेत्कुत्राप्यदृश्यं द्रुतं
कृत्वोर्ध्वं नयनं तथोपरि दृशोरुत्थाप्य वै तारके - ।।१४२८।।

ध्यानं करणीयं तादृक्प्रियमूर्तेः'।
(आत्मप्रियरूपं चेतोहरमद्धा) ।।१४२९।।

संबन्धेऽन्यदपीह तद्भगवतो नाम्नो बहु प्राचलद् -
वार्तैवन्तु, तदन्ततः स जगदानन्दञ्च दामोदरम्।
स्वं गेहं बुधसार्वभौममतिमान्नीत्वा स्वसङ्गे ययौ
(प्रेमी स्वप्रियसङ्गिसौहृदभरव्यक्त्यात्मना प्रीयते) ।।१४३०।।

गत्वा गेहमसौ पुरीश्वरजगन्नाथप्रसादस्य तत्-
सज्जीकृत्य पदार्थजातमधिकं नानाविधं सुन्दरम्।
हस्तैः प्रेषितवांस्तयोः प्रभुकृते स्थाने निमाय्यात्मनोः
(सेवायां परदेशिनो वरवरं वस्तु प्रदत्ते गृही) ।।१४३१।।

सम्प्रति सङ्गे चैव विधाय श्रीप्रभुसेवायामिह दातुम्।
तेन निजश्रद्धाञ्जलिरूपं दत्तमपि श्लोकद्वयमच्छम्।।१४३२।।

५८. यामि प्रियशरणं चैतन्यम्।
ज्ञानविरक्तिसमन्वितकेवलभक्तियोगशिक्षार्थम्
कौ श्रीकृष्णचैतन्यनामाऽऽविर्भूतोऽमलपुरुषः।
गौरनिमायिप्रेमाकारः कृपाम्बुधी रसहृदयः
असमोर्ध्वप्रियभक्तिप्रकृतिर्मानवताऽलङ्कारः।।

५९. चित्तं कुत्र लीयतां गाढम् ?
कर्मासक्तो बहुविधभौतिकसंग्रहमनिशं कुरुते
ज्ञानपवित्रः 'सोऽहं' 'सोऽहं' नीरसतामिह तनुते।
इह कर्मणि लोके नहि नृणां कर्मविमुक्तिः क्वचिदपि
यदि तज्ज्ञानं नृत्वे सत्यपि नोद्भूतं, तदपार्थम्।
एतत्सम्यक्समाधानमिह परमात्मामलभक्तिः
तद्भजनं कर्मत्वशोधनं तत्स्वत एव ज्ञानम्।
तत्सुखसुखिता भक्त्युत्तमता, सरितः सागरलयनम्
कुरुते प्रकटं कृत्वा लोके, लीयतामदःपादे।।

आस्तां तौ ननु पूर्णतः परिचितावानन्ददामोदरौ
श्रीगौरप्रकृते,र्महाप्रभुरयं स्वं श्रोतुमेव स्तुतिम्।
(तौ वित्तः स्म) नहि क्षमः, श्रवणतः स्थाने मुदः स स्तुतेः
रुष्टः प्रत्युत जायते स्तुतिकरे (प्रेमी तदीयस्पृहः) ।।१४३३।।

तस्मात्तौ प्रथमं त्विमौ लिलिखतुः श्लोकावुभौ सुन्दरौ
भित्तौ तत्र बहि,स्ततः प्रभुकरेऽदत्तां प्रसादैः समम्।
गत्वाऽन्तः कविसार्वभौमघटितश्लोकात्मकं पत्रकं
(नानाभोगपदार्थपूजनपरं प्रस्तूयते स्तोत्रकम्) ।।१४३४।।

खण्डं खण्डमथ प्रभुस्तु निखिलं कृत्वा पठित्वैव त-
च्चिक्षेप द्रुतकं बहि,स्तदुभयं भक्तैर्लिखित्वा परम्।
आसीत्पूर्वत एव रक्षित,मुभौ कृत्वा मुकुन्दः क्षणात्-
कण्ठस्थौ, मधुरस्वरेण महता श्लोकौ च गायन्नभूत् ।।१४३५।।

भक्तेऽखिले समभवच्च महान् प्रमोदः,
श्लोकाविमौ परिमितैर्दिवसैस्तथैव।
यातौ क्रमेण बहूमूल्यविभूषणत्वं
सम्पूर्णगौरसुहृदां तु निमायिवाचाम्।।१४३६।।

कुर्वन्नभूत्प्रभुसमीपगतः कदाचिद् -
वार्तां स भक्तिविषयां किमपीह भौमः।
वार्ताक्रमे सपदि भागवतस्य चेमं
श्लोकं पठन् समभवच्छ्रुतिसम्मतस्य।।१४३७।।

६०. ब्रह्मा कुर्वन् भगवत्स्तवनं भक्तप्रकृतिं दिशते-।
भुञ्जानो निजकृतपरिणामं तेऽनुग्रहमीक्षमाणः
उरसा वचसा वपुषा नमनं तव कुर्वन् यो जीवति।
इह पितृसम्पत्स्वामी पुत्रो यथा भवति तत्कृपया
तथा स पुरुषो भगवन् ! भजते दायं 'मुक्तिपदे' स्वम्।।

विहाय मुक्तिं स पपाठ भक्तिं
भौमोऽत्र तच्छ्लोकचतुर्थपादे।
तत्राशयोऽमुष्य - तथाऽधिकारी
प्रभोर्नरोऽसौ भवतीह भक्तेः ।।१४३८।।

'भट्टाचार्य ! महाशय ! ' त्वकथयत्स्थाने हसञ्छ्रीप्रभुः
'श्लोके भागवते तथाऽत्र भगवच्छ्रीव्यासदेवस्य वै।
नास्त्यावश्यकता पुनर्निजमनोऽभिप्रेतकार्थाय ते
पाठे संपरिवर्तनस्य (सुहृदां व्यासो हि साक्षी हृदाम्) ।।१४३९।।

मुक्तेरेव तथाहि (बोधति भवान्) संजायते श्रेष्ठताऽ -
स्माच्छ्लोका,त्परमस्ति नेदृशवचः, श्रेष्ठन्तु मुक्तेरपि।
(श्रीव्यासः स्वयमेव चाह) भगवत्पादाब्जयोः सेवनं,
श्लोकेऽस्मिन् कथितं यथा (प्रियमलं मुक्तेर्हि सेवासुखम्) ।।१४४०।।

६१. भगवत्सेवा जनतासेवा।
इह मुक्तिः परमः पुरुषार्थो यद्यपि निश्चितमखिलैः
सकलचराचरसेवामधिकं स्वीकुर्वन्ति तु सन्तः।

शिशुलालनकर्तरि तज्जननी तुष्यत्यन्तश्चेतसि
दृश्यमिदं भगवत्संतानं लीलाललितविलासम्
एतत्सेवा भगवत्सेवा, विश्वात्मा तत्तुष्यति।
सालोक्यादिं कैवल्यं त्वपि नेच्छति सेवारसिकः
जनताजनार्दनकेवलसेवार्थं जन्मेच्छति बहुशः।।

अर्थाद्भक्तजनः करोति भगवत्सेवापुरः श्रेयस-
स्तूपेक्षां, प्रतिपादकोऽथ भगवाञ्छ्रीव्यासदेवोऽस्य सः।
सिद्धान्तस्य, समस्तसाधकसतां नाम स्थितेः किं वदे -
न्मुक्तिं ? (यद्यपि मुक्तिरस्ति परमा, सेवाऽपरोऽर्थः परम्) ।।१४४१।।

पाठश्चैवमथास्ति मुक्तिपदमाः ! श्लोकेऽत्र, मुक्तिः पदे-
(-स्याऽर्थो) मुक्तिपदः स यस्य तु, तथाकृष्णस्य स प्राप्यते।
अर्थात्पूर्वपदेऽस्ति यस्य सुहृदो मुक्तिः, पदार्थात्तथाऽ -
-ग्रे चार्थान्नवमात्पदार्थदशमश्रीकृष्णकस्यायते।।१४४२।।

श्रीमति शास्त्रे भागवते ते । ते दश चोक्ताः सन्ति पदार्थाः।।१४४३।।

६२. श्रीमद्भागवतं दशलक्षणमत एवेदं परमम्।
इह सर्गः प्रतिसर्गः स्थानं पोषणमूतिश्चाग्रे
मन्वन्तरमीशोपाख्यानं निरोधमुक्त्याधाराः।
नवलक्षणमिह दशमविशुद्ध्यै वर्णयन्ति सत्कवयः
सन्तोऽञ्जसा श्रुतेनार्थेन प्रेष्ठं कृष्णं ब्रुवते।।

सारांशोऽस्ति तु देवतादिविषयै'स्त्वं त्वेव सर्वाश्रय'-
श्चोक्त्वेदं कृतमस्तु वर्णनमलं तस्या,थवोक्ताः कथाः।
श्रीमद्भागवताम्बरीषभरतह्लादध्रुवादेस्तथाऽ-
न्ते तात्पर्यमिदं तदीयशरणप्राप्तिं विना नो शिवम्।।१४४४।।

रीत्या वा कथयेत्कयापि, नियतं सर्वत्र तस्यैव कौ
पादाब्जे दशमस्य चाश्रयसतः श्रीकृष्णसच्चिन्मुदः।
प्रीत्युत्पत्तिनिमित्तमेव रचनां श्रीव्यासदेवोऽकृत
श्रीमद्भागवतस्य (भागवतमाः ! श्रीकृष्णचन्द्रात्मकम्) ।।१४४५।।

स एव तन्मुक्तिपदन्तु कृष्णः
शक्नोति चाद्धा भवितुं यथार्थम्।
तात्पर्यमस्तीह न वस्तुतत्त्वात्-
सालोक्यसार्ष्टिप्रभृतौ हि मुक्तौ' ।।१४४६।।

'व्याख्याया भवतः प्रभोऽभवदलं तोषस्तथाऽस्यास्तु मेऽ-
-त्र स्यान्मुक्तिपदस्य चैष नियतं शब्दस्य भावः, परम्।
सर्वे मुक्तिपदस्य तु प्रचलितेऽर्थेऽर्थं करिष्यन्ति वै,
पाठो भक्तिपदस्य चैव मम तच्छ्लोकेऽत्र भाति प्रियः'।।१४४७।।

'एतत्त्वीदृशमेव सम्प्रति मया' प्रोचे हसित्वा प्रभुः
'कृत्वाऽर्थान्तरकल्पनं ननु कृतोऽर्थः पदानां तथा।
सत्पुंसस्तव वाग्विनोदमनसा, सांसारिकाद्वस्तुत-
स्त्वर्थो मुक्तिपदस्य मुक्तभवनं ह्येवाऽखिलाद्बन्धनात्।।१४४८।।

मुक्ते संसृतिबन्धना,त्प्रभुपदात्तस्याऽतिरिक्तः परः
कश्चिन्नाश्रय एव, नश्यतु तथा सांसारिकं बन्धनम्।
कामं तस्य पदे विलोटतु पुनस्तस्यैव भूत्वाऽथवा
तस्मिन्नेव तु लीयतां मिलतु वा, सर्वं तथैकं वचः।।१४४९।।

मुख्यं तच्चरणाश्रयग्रहणकं त्वेवास्ति, तत्तादृशे
शब्दार्थान्तरकल्पने धृतमहो ! किं वर्तते प्रेमिणाम्।
कुर्वन् भाति तु पक्षपातिपुरुषः सिद्ध्यै स्वपक्षस्य का-
वत्रार्थान्तरकल्पनं ननु तथा (पक्षी न सन्मानवः) ।।१४५०।।

योऽत्र प्रेम विधातुमिच्छति श्रीकृष्णस्य पदैव केवलम्।
किं पक्षग्रहणे तदाशयः ?' (सत्पक्षो भगवत्प्रियो जनः) ।।१४५१।।

प्रभोर्निशम्येह तथोपदेशं
बभूव शान्तिर्महती बुधस्य।
प्रभुं प्रणम्य स्वगृहञ्च भौमो
यातः स (शान्तिर्महतो हि सङ्गात्) ।।१४५२।।



# दक्षिणयात्राया विचारः

६३. कथयति भौमः प्रतापरुद्रम्।
'कति विहितं स्तवनं नहि, काकुः कति नहि रचिता भूयः
धृत्वा पादौ रुदितं नहि कति विकलान्तर्वचनाऽऽस्यैः।
प्राणत्यागादिकभयदर्शनमपि नोपस्थापितमिह ?
राजंस्तदपि स कृष्णनिमायिप्रेमी यातो गौरः।
दण्डपुरस्कृतविषये लोकप्रकृतिविषमतास्थितिरिह
भवतोऽनुग्रहनिग्रहभावौ तुल्यौ प्रकृतिवराणाम्'।।

सत्यं हि प्रकृतिर्भवेऽस्ति महतामत्यन्तमेवाद्भुता,
चेष्टा कर्म तथाखिला व्यवहृतिश्चैषान्तु लोकोत्तरा।
सर्वेषां विषमात्मनां ननु समावेशो गुणानां पुन-
श्चैतेषु ध्रुवमाप्यते (भुवि नृणां धर्मैर्महत्ताऽद्भुतैः) ।।१४५३।।

एषां प्रेममयं तथाहि हृदयं संजायतेऽत्यन्तकं,
संसारे महतां कृपाऽभवदहो ! यस्योपरि त्वेकदा।
येनापि क्षणमात्रमत्र महतामाप्तो हि तोषो भवे,
स्थानं तस्य कृते महन्मनसि संजातं तथाऽऽजीवनम्।।१४५४।।

६४. महतां लक्षणमुक्तं किञ्चित्।
आमरणान्तः प्रणयो, भूयः कोपास्तत्क्षणभिदुराः
इह निःसङ्गाश्च परित्यागा महात्मनां जायन्ते।
कामोऽलोकप्रेमावस्था क्रोधोऽपरशुद्ध्यर्थः
अनासक्तितोऽखिलसद्ग्रहणं लोभो, महतापि भुवि।।

दृष्ट्वोक्तं भवभूतिना तु कविना सम्पूर्णमेतद्वच -
स्तल्लोकोत्तरसच्चरित्रमहतां भूपावनानां सताम्।
चेतः कोमलमत्र चापि कुसुमाद्, वज्रात्कठोरं त्वपि
त्वत्यच्छं नवनीतवद् द्रवति तद्दुःखात्परेषां परम्।।१४५५।।

एतादृङ्महतां तथानुकरणं कर्तुं लषत्यत्र यः,
पृष्ठे धावितुमीहतेऽत्र ननु यो लोकोत्तरप्राणिनाम्।

योऽ वाञ्छत्यनुवृत्तिकं व्यवहृतेः, सद्धन्यवादस्य सोऽ-
वश्यं पात्रमहो !, भवन्ति विरलास्त्वेव क्षितौ तादृशाः।।१४५६।।

स्वेच्छाचारिमहानुभावमहतां स्वच्छन्दगत्यात्मना-
मेतेषामनुवृत्तिकार्यमथवा वार्ता न साधारणी।
संसारेऽनुसृतिस्थितिस्तु, पुरतोऽमी निश्चयस्यात्मनः
कस्याप्यत्र तथाऽऽग्रहस्य सुहृदश्च प्रार्थनायाः पुनः - ।।१४५७।।

चिन्तामेव न कुर्वते,ऽभवदहो!यो निश्चयः सोऽभवद्
भेदोऽयं प्रकृतौ महानरसतः सामान्यलोकस्य च।
माहात्म्यं त्विदमेव संसृतितले तेषा,मनेनैव ते
वन्द्याः संभवितुं क्षमास्तु जगतां (वैशिष्ट्यमेवाऽर्च्यते) ।।१४५८।।

आसीत्कोमलकोमलन्तु हृदयं सत्प्रेमपूर्णं यथा
श्रीचैतन्यमहाप्रभोः सुमनसस्तस्याभवन्निश्चयः।
सन्देहाद्रहितो दृढश्च विषये स्थाने तथैवाऽटलः,
संकल्पस्य पुरो निजस्य कुरुते कस्यापि चिन्तां न सः।।१४५९।।

माघे मासि सिते प्रभुश्च कटवातो न्यासदीक्षां पुराऽ-
-द्वैताचार्यगृहं स शान्तिपुरके नीत्वाऽऽगतोऽभूत्तथा।
स्थित्वाऽष्टौ दश वा दिनानि सुमनास्तस्मिंश्च भूयो भवान्
प्रस्थानन्तु पुरीकृते स्म कुरुते (न स्थायिवासो यतिः) ।।१४६०।।

मार्गे सर्वपवित्रतीर्थनिकरं कुर्वन्नसौ पावनं
श्रीनीलाचलमागतः सहृदयो मासि प्रभुः फाल्गुने।
तस्मिन् फाल्गुनचैत्रयोश्च सहितो भक्तैर्निजैर्मासयो-
र्गेहे पण्डितसार्वभौमसुधियोऽवात्सीत्तु मातृष्वसुः ।।१४६१।।

तावत्कालममुष्य यावदभवत्पुर्यां प्रभोर्नेयती
ख्यातिश्चातिशया, तथास्ति विपुलं श्रीनाथनीलाचलम्।
तीर्थक्षेत्रमहो ! तथाहि शतशस्तस्मिंस्तु नित्यप्रति
स्थाने साधुमहानुभावपुरुषाश्चायान्ति यान्ति स्वतः।।१४६२।।

चिन्तां कस्य करोति तत्र भुवि कः, प्राज्ञः प्रकाण्डो यदा
भट्टाचार्यकसार्वभौमसदृशः श्रीमन्निमायिप्रभोः।

पादाब्जे शरणागतोऽभव,दतः किञ्चित्तु किञ्चित्त्वभू-
ल्लोकानां प्रभुसम्मुखे प्रवणता (ख्यातिर्हि सभ्यैः सताम्) ।।१४६३।।

कुर्वन्तस्त्वभवन् प्रभोश्च विषये तेऽन्योन्यमालोचना-
प्रत्यालोचनमत्र, संसृतिनृणामस्ति स्वभावस्तु, यत्-।
यावत्संभवकं भवे,न्न ददते कस्यापि वृद्धिक्षणं,
निन्दां तस्य विधाय, चाप्रियकृतेस्तं रोषयित्वाऽथवा ।।१४६४।।

दत्वा जागतिकप्रलोभनमलं कुर्वन्ति यत्नं तथा
नीचैरेव तु पातनस्य बहुशो लोका यथाशक्तिकम्।
यावत्ते न भवन्ति चात्र विवशाः सम्पूर्णरीत्या पुन-
स्तावन्मानमथार्चनं जगति वा कुर्वन्ति नो कस्यचित्।।१४६५।।

तस्यासह्यकतेजसस्तु सहने लोकेऽसमर्था यदा
जायन्ते, ननु भूयतेऽस्य विवशैः कर्तुं प्रतिष्ठां तदा।
तैरन्ते, च पुनस्तु तेऽस्य सुहृदो न स्थातुमेव क्षमाः
शंसाऽर्चाकरणाद् विना (हि सुमनःशंसा मनस्तोषिणी) ।।१४६६।।

एकान्ते जनसंसदः पृथगहो ! भक्तैः कयाचित्सहाऽ-
वात्सीदेष विना प्रदर्शनदृशाऽद्धा गोप्यभावात्प्रभुः।
कूटान्तः समयं कियन्तमनलो लीनोऽस्फुटं तु क्षमः
स्थातुं, द्रष्टुममुं शनैर्ननु शनैः स्माऽऽयान्ति लोकाः प्रभुम्।।१४६७।।

चक्रे दक्षिणदेशतीर्थविषये गौरस्तदैव प्रभु-
श्चैतन्यो भ्रमणस्य (तीर्थमखिलं दृश्यं) विचारः स्वतः।
इच्छाऽऽसीन्ननु तस्य, मे कतिपयं संन्यासिधर्माध्वना
कालं, विभ्रमणं विधेयमवनौ (लिङ्गी परिव्राजकः) ।।१४६८।।

आचारोऽस्ति सनातनस्त्वयमहो ! पुण्यस्थले भारते
प्राचीनर्षिमहर्षिसाधुजगता,मेतद् विचिन्त्य प्रभुः।
भक्तेषु प्रकटं चकार सुमना वाञ्छां निमायी निजां,
श्रुत्वा निश्चयमस्य तस्थुरखिलाः स्तब्धास्तथेमं प्रभोः।।१४६९।।

नित्यानन्दसुहृज्जगाद तरसा तेषामनन्यः प्रभो-
'रायातोऽत्र भवांस्तु निश्चयमिमं कृत्वा निमायिप्रभो !।

वस्ताऽहं तु निमायिसौहृदजगन्नाथस्य नीलाचले,
दत्वाऽऽश्वासनमेवमेव निखिले भक्तेऽपि चात्रागतः।।१४७०।।

वार्तां सम्प्रति कीदृशीन्तु कुरुतेऽमूं, कर्म लोकोत्तरं
सर्वं ते भवतीति, वेत्तुमवनौ शक्नोति कश्चिन्नहि।
कर्तुं वाच्छति किं भवां,स्तव मनोभावप्रतीतिक्रिया
लोके मानवबुद्धिदूरविषया (बुद्धेर्निमायी परः)।।१४७१।।

अस्ति भवान् वै सर्वसमर्थो, यन्ननु वाञ्छेत्तन्ननु कुर्यात्।
किन्तु पुरीतुल्योत्तमदेशाद् वाञ्छति कस्माद्दक्षिणयात्राम् ?' ।।१४७२।।

'ज्येष्ठो बन्धुरहो ! महामहिमकश्रीविश्वरूपस्तु मे
यातो दक्षिणदेशदिक्षु, सुहृदः कर्ताऽस्मि चान्वेषणम्।
गत्वा तद्दिशि तस्य मार्गणमलं स्वीकृत्य संन्यासकं
कर्तव्यं मम सर्वमुख्य'मवदत्किञ्चिद् विचिन्त्य प्रभुः।।१४७३।।

किञ्चिद्दुःखविशुष्कहास्यमवदद्दामोदरो वै हसन्
'ज्येष्ठभ्रातृगवेषणार्थमयते, विद्मस्त्विदं शोभनम्।
एतद्वै मिषमात्रमस्ति भवतः, किञ्चिद् यथार्था परं
वार्ताऽन्यैव (निमायिमानवतनुर्नैकत्र संतिष्ठते) ।।१४७४।।

तज्ज्ञायते,ऽस्ति तव दक्षिणदेशमिच्छा
पूतं विधातु,मथ तन्ननु वारयामः?।
चेद् वारयेम तदपी,ह भवान् स्वतन्त्र-
स्त्वीशो,ऽल्पमेव ननु कस्यचनाऽत्र मन्ता ?'।।१४७५।।

तद्दामोदरपण्डितस्य वचनं त्वासीत्सतथ्यं परं,
संन्यासग्रहणद्विमात्रशरदः पश्चाच्छरीरं जहौ।
पूनापत्तनपार्श्वपण्ढरपुरे श्रीविश्वरूपोऽग्रजः
श्रीगौराङ्गसहोदरो (भुवि महान् दीर्घं न तिष्ठत्यलम्) ।।१४७६।।

आसीद्भक्तजने त्विदञ्च विदितं वृत्तं, प्रसिद्धात्मनां
श्रीमद्घोषकवासुदेवमतिमान् कर्ता पदानां तदा।
आसीत्पावनतीर्थपण्ढरपुरे तत्रैव चोपस्थितो,
भक्ताञ्छ्रावितवानपीदमखिलानागत्य वृत्तं तु सः ।।१४७७।।

न शुश्राव महाप्रभुः परमिदं वृत्तं तथाद्यावधिं,
नेदं संभवमस्ति, किञ्चिदपि तु स्याद्,विश्वरूपस्य सः।
कृत्वाऽन्वेषणकोपलक्ष्यमधुना कर्तुं ललाषात्मनः
पूतं दक्षिणदेशमङ्घ्रिरजसा (स्पर्शः सतां पावनः) ।।१४७८।।

एवं निश्चयनं कृतं तदमुना, नित्यो जगाद् 'प्रभो!'
किञ्चिद्रुद्धगलेन 'किञ्चिदपि नो कार्यं विधातुं क्षमाः।
त्वद्वाञ्छाविपरीतमत्र तु वयं, नः प्रार्थनेयं परं,
सङ्गे नस्तु निजे नयेन्ननु परित्यागं विधत्तां न नः' ।।१४७९।।

गम्भीरतासहितमेष जगाद 'सार्धं
शक्नोति कोऽपि चलितुं न मया, प्रयातुम्।
यात्रासु लोकनिकरैः सह न क्षमः स्या,-
मेकाकिनैव तु मया भ्रमिताऽत्र तीर्थे' ।।१४८०।।

ऊचे दीनतयैव चाधिकममुं नित्यो यति'र्हे प्रभो !
हस्तक्षेपमहो ! न कर्मणि तव क्वाप्यत्र कुर्मो वयम्।
तेऽसौविध्यमथाद्य किन्नु भवितुं शक्नोति सङ्गेन नो?,
(यात्रायां सुहृदो भवन्ति सुहृदां सौविध्यमात्रं भवे) ।।१४८१।।

चेत्सर्वानुचितं तथाहि चलनं नीत्वा स्वसङ्गे भवा -
न्नो बोधे,च्चल मां तु नित्यसुहृदं नीत्वैव सङ्गे परम्।
काले दक्षिणसर्वतीर्थवसुधायात्रा कृता वै मया,
दृष्टं मेऽखिलमस्ति मार्गविषयश्रीतीर्थदेवालयाः ।।१४८२।।

मत्सङ्गाद्भविता नो विक्षेपस्तव कश्चित्'।
(विक्षेपो विपरीतान्तर्लक्ष्यप्रकृतेर्नुः) ।।१४८३।।

औदासीन्यमिव प्रभुः प्रकटयन्नूचे मनाक्कृत्रिमं
तद्व्यङ्ग्येन समं 'ममोपरि भवाञ्छ्रीपाद ! भद्रां कृपाम्।
कृत्वा रक्षतु काममेव, सुहृदं नीत्वा भवन्तं पुनः
सङ्गेऽहं कृतवांस्तु तीर्थगमनं (श्रीतीर्थयात्रा तपः) ।।१४८४।।

अग्रे दास्यति यानमेव भवतः स्नेहः प्रगाढो न मे,
यन्मां बोधति सौहृदेन तु भवांस्तन्नास्म्यहं वस्तुतः।

मध्ये मे भवतस्तदस्ति विपुलो भेदो मतानामयं,
ह्युद्विग्नं त्वकृथाश्च शान्तिपुरतोऽद्धाऽत्राऽऽगतावेव माम्।।१४८५।।

चिक्षेप मे ननु भवांस्तु विभिद्य दण्डं
मद्धर्मपातनविधौ तव चैव मोदः।
तत्त्वतस्वसङ्गनयनं मम शक्तिबाह्या
वार्ताऽस्ति ' (शक्तिदिशया करणीयमत्र) ।।१४८६।।

तद्दामोदरपण्डितः 'प्रभो! किञ्चिन्नास्मि वदामि, सङ्गिनम्।
तन्मामेव विधेहि, शेष'माह 'त्वेतत्त्रितयं निवर्तय'।।१४८७।।

ऊचे तञ्च हसन् प्रभु'र्गुरुमहाराज ! त्वदीयं पदो-
र्दूरादेव तु वन्दनं ननु मया कार्यं निमाय्यात्मना।
स्थाने चासमहं कठोरनियमाऽऽसङ्गिस्वभावात्तु ते
द्वीपेऽद्यावधि सर्वथाऽपरिचितो (बोध्यो जनः सङ्गतः) ।।१४८८।।

सामान्येन तु वक्तुमत्र वपुषा चक्रेऽस्मि बाह्यात्मना
संन्यासग्रहणं, परं भगवतो भक्तात्मनां प्रेमिणाम्।
नो सम्प्रत्यपि युज्यते निजहृदा तेषामुपेक्षा मया
(भक्तिप्रेम सदात्मनां भगवति स्थाने नृणां जायते) ।।१४८९।।

संन्यासी नियमांस्तथोपनियमांस्तत्प्रेमपृष्ठे त्वहं
सन्नप्येव च विस्मरन्निव भवे स्थाने भवामि स्वतः।
अस्माद्धर्मविरुद्धकर्म यदहं कुर्वे भवान् बोधते,
संगाढस्थितये कठोरनियमश्रद्बन्धने चैव माम् -।।१४९०।।

संकुर्वन्नुपदेशमत्र सततं बोभूयते सर्वदा,
देहस्यापि तु तिष्ठतीह नहि मे संज्ञा, पुनः पालनम्।
कर्ता केन कठोरकर्कशविधेस्तेऽहं प्रकारेण, तद् -
दृष्ट्वा मे व्यवहारमत्र भविता स्वेच्छं निरुन्धन् सदा ।।१४९१।।

एतदसह्यं मे भविता तत्। सम्प्रति गन्ता त्वेकल एव'।।१४९२।।

बिभ्यन्मन्दमुवाद तच्च जगदानन्दः 'प्रतीतं प्रभो !
त्वद्वार्ताविधिनैव नस्तु यदिदं नेता न कश्चित्त्वपि।
स्वे सङ्गेऽद्य भवान्, यदा प्रकरणं त्वारब्धमेवास्ति तज्-
जिज्ञासाऽस्ति-विधीयते मम परित्यागः कुतो दोषतः?'।।१४९३।।

‘सङ्गेऽन्यं कमपीह नेतुमपि वै शक्तोऽस्मि, नो कर्हिचित्-
कर्ता सङ्गनयाभिनन्दनमथाऽऽनन्दस्य चाहं परम्’।
उच्चैर्जल्पति तत्प्रभुर्ननु हसं‘स्तावत्त्वसौ मोदते,
कुर्वन् स्यां व्यवहारमस्य सुहृदो यावन्मनोवाञ्छया।।१४९४।।

यत्राऽल्पोऽपि यथाऽस्य सौहृदमनोभावे प्रहारोऽभवत्-
फुल्लित्वा ननु कूपकोऽयमयते, मच्छक्तिबाह्यस्थितिः।
एतद्धार्दिकभावपूरणमहो ! संन्यासधर्माऽवनं
नाऽदोमानसतुल्यकव्यवहृतेः स्यां कर्तुमेव क्षमः।।१४९५।।

मां खादन्तमसौ सुखी भवति चात्यन्तं पदार्थं प्रियं
दृष्ट्वा, सुन्दरवस्त्रसज्जितमहो ! द्रष्टुं तथा वाञ्छति।
हृष्टोऽयं भवति प्रिये बहुतरे शय्यान्तरेऽहं शये
(स्नेहो मण्डितमत्र लौकिकसुखैः स्वाधारमाकांक्षति) ।।१४९६।।

संन्यासधर्मस्य विरुद्धमस्मिन्
लोके न संसारिपदार्थजातम्।
भोक्तुं कदापि प्रभुरेव वर्ते,
भद्रस्तथैकोऽस्मि तदस्य सङ्गात्’।।१४९७।।

उक्त्वेयत्त्वभवत्प्रभुः प्रति मुखं पश्यन्मुकुन्दस्य, स
स्थाने मौनमथ स्थितोऽस्ति, च दृशोरासीज्जलं संभृतम्।
तस्याऽऽकण्ठमहो! परं नहि बहिस्तन्निःससाराधुना,
(दुःखार्ताश्रु दृशोर्बहिर्भवति कौ ह्यात्मीयसत्सम्मुखे)।।१४९८।।

तद्बाष्पं स्वत एव तस्य ममतासुस्निग्धदृष्ट्या प्रभो-
र्द्वारा लोचनकोणयोः स्म वहते, कुर्वन्ममत्वस्य तत्।
श्रीगौरो वदति प्रकाशनमसौ ‘ब्रूह्यत्र दोषं निजं
श्रोतुं वाञ्छसि मन्मुखात्त्वमपि किं?’ (द्वारं प्रतीतेः श्रुतिः)।।१४९९।।

पृष्टोऽपि प्रभुणाऽश्रु चैव निभृतं मुञ्चन्मुकुन्दोऽभवत्-
किञ्चिन्नापि ददौ तथोत्तरमसौ वाचो निमायिप्रभोः।
नित्यानन्दमथ प्रभुः कथयते पश्यन् प्रति स्नेहवान्
(सौभाग्यं मतिमद्विवेकिहृदयद्वारा कृपाव्यञ्जनम्)।।१५००।।

'अस्तीह प्रकृतिस्तथाधिकमृदुः सत्यं मुकुन्दस्य, चाऽ-
त्यन्तं कष्टसहिष्णुकः स्वयमसौ द्रष्टुं तु शक्नोति नो।
अन्येषां ननु कष्टमत्र, भवति क्षुब्धस्त्वसौ दैहिकात्-
कष्टान्मे च विशेषतः (सहृदयो योद्धा हृदा ह्यग्रणीः)।। १५०१।।

संन्यासस्य कठोरताऽस्य नियमेऽसह्या मम ज्ञायते,
पद्भ्यामेव तथा मम भ्रमणकं चाल्पाम्बरैर्यापनम्।
भिक्षान्नोदरपूर्तिरादिनियमैः स्नानं त्रिकालं तथा
स्थानं यत्र तु लब्धमत्र शयनं तत्रैव पृथ्वीतले।।१५०२।।

दुःखी तिष्ठति निर्मले स्वहृदयेऽयं, यद्यपीह स्फुटं
किञ्चिन्नापि मुखेन जल्पति, परं गूढं न मे तिष्ठति।
भावोऽमुष्य मनोगतो,ऽस्य मनसो दुःखान्निमाय्यात्मनः
क्लेशो मेऽपि च जायते (रसमितिः साधारणीव्यापृतिः)।।१५०३।।

शक्ष्यामि न स्वनियमानिह हातुमस्मि
स्वं भावमेष मृदु नो सविता कठोरम्।
अस्यास्ति सङ्गनयनं तदसंभवं मे'
(यत्संभवं ननु सताऽत्र तदेव धार्यम्)।।१५०४।।

श्रुत्वेदं निखिलं वचः कथयते नित्योऽल्पखिन्नात्मना
'वाञ्छाया ननु ते विरुद्धकरणे सामर्थ्यमेव प्रभो!।
कस्मिन्नस्ति, परं ममास्ति भवतः पादे तथैकार्थना,
स्वीकर्ता नियतं भवान्' (परमनोग्राही प्रमाताऽपरः)।। १५०५।।

अत्यन्तं ममतां प्रभुः प्रकटयन्नेवाधुना भाषते
'हे श्रीपाद! भवांस्तु कीदृशमिदं ब्रूते वचोऽसाम्प्रतम्।
पूज्यो मान्यवरस्तथा गुरुसमो लोके भवान्मे सदा,
त्वाज्ञायाः प्रभुरस्मि कर्हिचिदहो! कर्तुं तवोल्लङ्घनम्?।।१५०६।।

अहं तु पात्रं तव नृत्यकारक-
स्त्वं सूत्रधारोऽसि, च नर्तयिष्यसे।
यथा स्वकामात्तु, तथैव नर्तिता,
निदेशनं किं? स्फुटमत्र भाषताम्'।।१५०७।।

अत्यन्तं करुणस्वरे कथयति श्रीमन्नितायी 'भवान्
यास्यत्येकल एव सम्प्रति तथायात्रासु, दुःखं त्वितः।

नोऽसह्यं भविता, भवान् कमपि नो चास्मासु सङ्गे स्वके
वाञ्छेन्नेतुमथाऽस्तु (नाधिकहठः शोभावहः प्रेम्ण्यपि)।।१५०८।।

विप्रः सौहृदसद्गुणादिभरितोऽयं कृष्णदासाऽभिधो,
जन्मस्थानममुष्य चास्ति कटवापार्श्वे तथैवात्मनः।
अस्त्येषोऽतिशयं स्वभावसरलः सेवाप्रवीणोऽधिकं,
चैतन्यप्रभुपादपद्मशरणेऽमुष्यानुरागो दृढम्।।१५०९।।

सेवां सर्वविधां प्रभोरयमहो! कर्ता तु सङ्गे स्थितो,
भावावेशगतो यदा ननु भवान्नृत्यं विधाता तदा।
संधर्ताऽम्बरकाणि कः, पथि भवान् द्वाभ्यां कराभ्यां पुनः
संवाद्यैष्यति तालिकां तु सुमनाः कुर्वन् हरेः कीर्तनम्।।१५१०।।

भूयोऽम्बुपात्रकथरीलघुमध्यवस्त्रं
संधारयिष्यति च कोऽ,त्र तदर्थनेयम्।
सङ्गे ददातु चलितुं त्विह कृष्णदासे
नूनं निजानुमतिकं' (विरलः सुयोगः)।।१५११।।

नित्यानन्दतथाऽऽग्रहं प्रभुरपाकर्तुं शशाकाऽन्तिमं
नेमं, स्वानुमतिं स सङ्गचलनेऽदात्कृष्णदासाय, तत्।
संतोषस्त्वभवन्निमायिसुहृदामल्पं तथाल्पं सता,-
मासीत्सर्वजनस्पृहा,ऽल्पसमयं पुर्यां निमायी वसेत्।।१५१२।।

कर्तुं किन्तु तथाग्रहं प्रभुपुरः कस्यापि नो साहसं,
सर्वैश्चिन्तितमत्र, चेद्बुधवरः श्रीसार्वभौमः प्रभोः।
धृत्वा श्रीचरणौ करिष्यति तथायाच्ञामवश्यं तदा
स्थास्यत्येष पुनर्दिनं कतिपयं (बध्नाति शिष्टाग्रहः)।।१५१३।।

नीत्वा सम्प्रति सार्वभौमनिकटे गन्तव्यमस्मात्प्रभुं,
संचिन्त्येदमथैव, नित्ययतिको ब्रूते 'निमायिप्रभो!।
भट्टाचार्यकसार्वभौमसुधियाऽप्येतत्प्रसङ्गे परा-
मर्शं वै करवाम, किं कथयति प्राज्ञः स, पश्येम तत्'।।१५१४।।

श्रुत्वा त्विदं प्रकटयन् प्रभुराह मोदं
'श्रीसार्वभौममपि (साधु वचश्चलन्तु)।।
पृच्छेम चात्र विषये' प्रभुरेतदुक्त्वा
तत्सार्वभौमवसतिं चलितः सभक्तः।।१५१५।।



# दक्षिणयात्रार्थं प्रस्थानम्

६०. शोकः सुहृद्विरहजः परमः।
चैतन्यप्रभुविरहितभट्टाचार्यान्तःस्वारस्यम्-
'कथं न जातः सुतसंतापः, कथं न मम तनुपातः'।
प्रभुनिमायिहितमिलनानन्तरपरिचयतः सत्प्रीतौ
गाढं जातायां तद्विरहं सोढा, भविताऽचेताः।।

चक्रे दक्षिणयाननिश्चयमसौ, किञ्चित्प्रकारं त्वपि
स्यात्तस्मिन् परिवर्तनं न च यतेर्गौरप्रभोर्निश्चये।
प्राप्तो भक्तजनस्तमेव विषयं संचिन्तयन् सप्रभु-
र्भट्टाचार्यकसार्वभौमवसतिं (प्रष्टव्य एवाऽऽश्रयः)।।१५१६।।

दृष्ट्वाऽऽयान्तममुञ्च भक्तसहितं तूत्थाय शीघ्रं प्रभुं
भट्टाचार्यबुधः प्रभोश्चरणयोश्चक्रे गृही वन्दनम्।
भक्तानामभिवादनञ्च कृतवान् प्राज्ञोऽखिलानां तथा
सर्वेभ्यः सुमतिर्यथोचितमथाऽऽसत्तुं प्रदायाऽऽसनम्।।१५१७।।

धूपदीपपूजनादिवस्तुभिश्चकार तत्र।
पूजनं महाप्रभोः स (सत्क्रियाऽऽत्मतोषणाय)।।१५१८।।

यावत्कालमथाल्पमत्र भगवत्संबन्धिवार्ताकथाऽ-
चाली,दन्तपले प्रभुः कथयते 'मे धर्मबन्धुप्रियाः।
एतत्स्थानममी च शान्तिपुरतो नीत्वाऽऽगता मां पुन-
र्भट्टाचार्य! महाशय! प्रियजगन्नाथस्य मे दर्शनम्।।१५१९।।

एषामेव निमायिनान्तु कृपया जातं, तथा श्रूयते,
तीर्थानां भुवि लभ्यते फलमहो कालान्तरे कुत्रचित्।
तु प्राप्तं पुरुषोत्तमाख्यभगवत्संदर्शनानां फलं
मे संकुर्वत एव दर्शन-(मपि स्थानप्रभावः कलौ)।।१५२०।।

त्वद्वत्ख्यातमहानुभावसुधिया प्रेमोद्गतिः, कोटिशः
तीर्थानान्तु फलस्वरूपमयते, त्वत्तुल्यविद्यावतः।
साक्षात्कारसमुद्गतिं भगवतः संदर्शनस्याऽऽत्मनो
मन्येऽहन्तु महाफलं (भुवि पथे पुण्यैर्महत्सङ्गमः)।।१५२१।।

सत्सङ्गाद्भवतो ममातिशयिता जाता मुदश्चाधिकाऽऽ-
नन्देनात्र मम त्वियांस्तु समयः स्थाने व्यतीतः समम्।
ज्ञातं स्याद्भवतश्च संभवतयैको विश्वरूपोऽग्रजो
भ्राता षोडशवर्षमात्रवयसि त्यक्त्वा ममाऽभूद्गृहम्-।।१५२२।।

संन्यासी, प्रगतः स दक्षिणमुखश्चैवं जनाच्छ्रूयते,
वाञ्छा मेऽस्ति, तथाहि दक्षिणदिशो यात्रामहञ्चापि तत्।
कुर्यां तत्पदचिह्नकानुसरणं कृत्वा, भविष्यत्यतो
ह्येका द्व्यर्थकरी क्रियो-(भयकृतिः सम्पादनीया सता)।।१५२३।।

अस्मादेव समस्तदक्षिणधरातीर्थस्य संदर्शनं
व्याजाद् भावि ममा,ऽपि संभवतया श्रीविश्वरूपेण च।
भावी क्वापि समागमोऽग्रजसता न क्वापि तीर्थे, भवान्
दत्तां दक्षिणयानहेत्वनुमतिं' (यानं फलत्याशिषा)।।१५२४।।

श्रुत्वैवेयदचेतनो द्रुम इव च्छिन्नश्च मर्माहतो
भूत्वा मट्टमहाशयस्तु पतितः श्रीसार्वभौमः क्षितौ।
वाष्पं तन्नयनद्वयात्स्म वहते, किञ्चित्क्षणानन्तरं
स्वं संस्तभ्य जगौ स्वरेऽतिकरुणे (कारुण्यमूलो रसः)।।१५२५।।

'जातः सम्प्रति मे प्रभो-(ऽस्मि बुबुधे) सौभाग्यसूर्योदयः,
सञ्जातो वरभाग्यशालिपुरुषः सम्प्रत्यहं निश्चितम्।
सौभाग्यं प्रभुसङ्गतेरविरलं लब्धं भवत्स्थास्यति
स्थाने मे त्वधुनैव (निर्मलमनःसङ्गः क्षितौ दुर्लभः)।।१५२६।।

श्रुत्वेदं वचनं विचित्रमधुना मे किन्तु हृद्वेधकं,
तस्थौ नावधिरेव दुःखजलधे,रत्यन्तदारिद्र्यतः।
राजा कोऽपि गतो यथा,ऽल्पदिवसैर्वै राज्यसिंहासनाद्
भूयो निर्धनदीनहीनपुरुषोऽसौ पातयित्वा कृतः।।१५२७।।

जाता सैव दशा ममाद्य नियतं, त्यक्त्वा प्रभो! मां भवान्
क्वाप्यन्यत्र न यातु, कुत्रचिदहो! चेद्गम्यमेवाऽस्तु तत्।
सङ्गे मामपि वै नयंश्चलतु हे!, सर्वं प्रतिष्ठापदं
त्यक्तुं स्वञ्च कुटुम्बमस्मि भवतो हेतोरहं प्रस्तुतः'।।१५२८।।

ऊचे पण्डितसार्वभौमगृहिणो धैर्यं प्रभुर्बन्धयन्
'भट्टाचार्यमहाशय! प्रिय! यदा विद्वानियान् बुद्धिमान्।
भूत्वैवंविधविस्मृताभवचनं कर्ता भवान्, तत्पुनः
का वार्तेव तु संसृतौ परनृणां (लोके प्रमाणं बुधः)।।१५२६।।

धैर्यं सम्प्रति धत्तां, यात्रायास्तु समाप्तिम्।
कृत्वाऽत्रैव निवृत्याऽऽगन्ताऽहं द्रुतमेव'।। १५३०।।

'यावन्निवर्तनमहो! घटिता किमे,तत्-
को वेत्ति?, जीवनमिदं क्षणभङ्गुरं कौ।
यात्वेकलो नहि विहाय निराश्रितं मां'
(ग्राह्यः सता निजपदाश्रयमागतोऽद्धा)।।१५३१।।

'अत्रैव ह्यनुपस्थितौ मम यतेः स्थास्यन्ति भक्तास्त्वमी,
कुर्वन्तो निखिला भवन्तु मिलिताः श्रीकृष्णसंकीर्तनम्।
आगन्ताऽस्मि निवृत्य चैव तरसा, भूत्वा प्रसन्नो भवान्
दत्तां मेऽनुमतिं' (सतामनुमतिः पित्रोरिवाशंसनम्)।।१५३२।।

वैवश्यं किमपीह तत्प्रकटयन् शोकस्वरेऽसौ जगौ
'कस्मिन्नस्ति तु शक्तिरेव भवतः (त्वं वै स्वतन्त्रेश्वरः)।
आकांक्षाविपरीतवर्तनकृते,र्गन्ता त्ववश्यं भवान्
सत्संकल्पितदेशदक्षिणधराश्रीतीर्थयात्राकृते।।१५३३।।

हार्दिकवाञ्छा किन्तु ममास्ति, स्वीकरणीया मद्गृहिसेवा।
किञ्चिदिह स्थित्वाऽपि च कालं' (सत्प्रियसेवा यच्छति तुष्टिम्)।।१५३४।।

गौराङ्गः स्वपरप्रियस्य च कृपापात्रस्य सद्वत्सलो
भट्टाचार्यकसार्वभौमगृहिणस्त्वस्यानुरोधस्य सः।
शक्तः कर्तुमुपेक्षणं नहि यतिः, स्वीकृत्य सेवामसौ
पुर्यामेव बभौ च पञ्च दिवसांस्तत्सार्वभौमश्रियः।।१५३५।।

भट्टाचार्यगृहे तथैव मुदिताऽर्थं तस्य नित्यप्रति
स्वीकुर्वन्निजभिक्षणं विरमति, श्रीभौमपत्नी तथा।
पक्त्वा भिक्षणमस्य कारितवती सुस्वादु नानाविधं
संन्यस्तस्य पदार्थजातमतिथे-(र्माता यतेः स्त्रीजगत्)।।१५३६।।

यावत्पञ्च दिनानि वै तथा भिक्षां भौमगृहे विधाय सः।
कृत्वा तुष्टमथास्य मानसं, चक्रे दक्षिणयानसज्जताम्।।१५३७।।

उत्थाय प्रभुरेष भक्तसहितः प्राप्तः स नित्यक्रियां
कृत्वाऽऽस्ते च, तदैव सार्धमपरैः शिष्यैश्चतुर्भिर्निजैः।
प्राप्तो भट्टमहाशयः प्रभुयतेः स्थानं, प्रभुस्तैः समं
स्वैर्भक्तैरखिलैर्ययौ प्रियजगन्नाथात्मनो दर्शने।।१५३८।।

गत्वा प्रभुर्दयितमन्दिरमेष भक्ति-
श्रुद्धायुतो भगवतश्चरणौ ननाम
साष्टाङ्ग,मालषितदक्षिणयानहेतो-
राज्ञामयाचत निजं दयितं निमायी।।१५३९।।

आनीय प्रभवे प्रभोर्भगवतो मालाप्रसादान्नके
दत्ते मन्दिरपूजकेन समये तत्रैव, तच्चैव सः।
बुद्ध्वाऽऽदेशमथ प्रभुर्भगवतश्चक्रे प्रसादं निजे
शीर्षे, मन्दिरकप्रदक्षिणविधिं कुर्वन् समं सङ्गिभिः।।१५४०।।

प्राप्तः सागरतीरमेष, कुरुतेऽद्धा सार्वभौमाऽऽग्रहं
वारम्वारमहो! निवर्तनकृते, श्रीसार्वभौमः परम्।
प्रेमी नैव निवर्तते स्म, तु तदाह्यत्यन्तमेव प्रभु-
र्भूत्वा सम्प्रति दुःखितः सहृदयस्तत्राऽऽस्त सत्सन्निधिः।।१५४१।।

बोधयति स्म च नानारूपतया बुधभौमम्।
मौनमसौ तु निषण्णः संशृणुते प्रभुवार्ताम्।।१५४२।।

आप्तोक्तं स रुदन् रुदन् कथयति श्रुत्वाऽखिलं पण्डितो
भट्टाचार्यगृही 'प्रभो! ननु भवान् यात्येव वै दक्षिणाम्।
श्रीविद्यानगराख्यभूपनगरी त्वेकास्ति गोदावरी-
तीरे चाध्वनि, राज्यमुत्कलभुवश्चाधीनमेवास्ति तत्।।१५४३।।

तत्स्थानस्य च राज्यशासनमदःस्थानस्य शास्ता तथा
रामानन्दकराय एव कुरुते, जात्या त्वसौ विद्यते।
कायस्थो,ऽस्ति परं महान् भगवतो भक्तो,ऽस्य नो केवलं
श्लाघ्या वैष्णवता,ऽविशिष्टमनसामद्धाऽनुकार्या त्वपि।।१५४४।।

तस्मै वितीर्य निजदर्शनमेतु नूनं
कुर्वन् कृतार्थमिति, नास्य विधेह्युपेक्षाम्।
सांसारिकं विषयिणं पुरुषन्तु बुद्ध्वा'
(कस्यापि नुर्विषयसेवनबाध्यता कौ)।।१५४५।।

ऊचे गद्गदकण्ठतः प्रभुरथ स्नेहस्वरे 'यत्कृते
भट्टाचार्यमहोदय! त्वियदहो! स्थानं भवन्मानसे।
चाण्डालः कथमेव नाऽस्तु स महाभागोऽत्र कामं पुन-
र्वन्द्यो मेऽस्ति, कृपेयती च भवतो यस्योपरि त्वेष वै-।।१५४६।।

कश्चिद् भागवतोत्तमो भगवतो भक्तस्तथा वैष्णवो
भावी, तस्य विधाय दर्शनमहं कर्ता कृतार्थं स्वकम्।
आत्मानं ध्रुवमेव, सम्प्रति भवान् गेहं गृहस्थो निजं
हे! धीमंस्तु निवर्तता'(मिह हितं सर्वस्य धत्ते गृही)।।१५४७।।

स श्रुत्वैव निवर्तनस्य वचनं वैकल्यमाप्तः पुन-
र्भट्टाचार्यगृही रुदन्ननु रुदन् जग्राह पादौ प्रभोः।
घर्षंश्च स्वशिरस्तयोः कथयते 'न ज्ञायतेऽतः कदा
द्रष्टाऽदोऽरुणपादपल्लवमहं' (न्यासी न पश्यत्यनु)।।१५४८।।

गौरो भट्टबुधस्य दुःखितहृदा चक्रे तथाऽऽलिङ्गनं,
प्रेमालिङ्गनकाप्तिमात्रपतितो भौमो निमायिप्रभोः।
आस्तां पद्मविलोचनेऽपि सजले संन्यासिनोऽस्याधुना।
(सत्संयोगवियोगभावितमना लोकोत्तरोऽपि क्षितौ)।।१५४९।।

त्यक्त्वैवमेव बुधभौममममुं दशाया-
मग्रे चचाल तरसा प्रभुरेष गौरः।
भौमश्च दुःखितमनाः स्वगृहं निवृत्तः
श्रेष्ठी यथा हृतसमग्रनिधिर्विपश्चित्।।१५५०।।

अग्रे श्रीप्रभुरत्र सागरतटे त्वासीत्सरन् सत्वरं,
कुर्वन्नस्ति निवर्तनाग्रहमसौ सत्प्रेमिणां सङ्गिनाम्।
वारम्वारममी निमायिसुहृदः किन्तु न्यवर्तन्त नो
(चैतन्ये सति किं निवृत्तिमयते प्राणेन्द्रियादिव्रजः?)।।१५५१।।

तथैवमेवा'थ निवर्तितारो'
नित्यादिभक्तै'स्तु निवर्तितारः'।
अलालनाथं प्रभुरागतोऽयं
तथाब्रुवद्भिः सह सङ्गिभिस्तैः।।१५५२।।

प्राप्ते भद्रमलालनाथविषयं तद्दर्शनार्थं प्रभौ
तत्राऽऽगत्य च पुञ्जिता बहु जनास्तन्मध्यमेवाधुना।
गोपीनाथमहाशयः प्रभुकृते चत्वारि वासो बहिः
कौपीनानि तथैकमत्र मिलितो नीत्वा च काषायकम्।।१५५३।।

श्रीनाथस्य महाप्रसादमपरं सङ्गे त्वलालस्थले,
दूरं लोकभराच्च सागरतटे नित्यो निनाय प्रभुम्।
आनिन्ये स्नपनञ्च मन्दिरमथाऽमुं कारयित्वा ततो,
भक्तो मन्दिरमेत्य भोजयति तं सर्वः प्रसादान्नकम्।।१५५४।।

गोपीनीतमहाप्रसादरसनं चात्यन्तमेव प्रभुः
स्नेहेनाऽकृत, भोजनं प्रभुयतेस्तद्भोजनानन्तरम्।
सर्वैर्भक्तजनैरपीह विहितं, तत्रैव रात्रिञ्च तां
भक्तैः कीर्तनचिन्तनैर्भगवतः संयापयामास सः।।१५५५।।

प्रातर्नित्यविधेस्ततोऽग्रगमनं कर्तुं निवृत्तः प्रभु-
श्चक्रे तत्र विचारमद्य निखिलान् स्वप्रेमिणः साग्रहम्।
भक्तानाह निवर्तनाय, हृदयं स्मृत्वा वियोगं प्रभोः
सर्वेषां स्फुटति स्म, तत्र रुरुदुः प्रेमाकुलाश्चाखिलाः।।१५५६।।

प्रत्येकं रुदतां स्वभक्तसुहृदामालिङ्गनं तत्प्रभु-
स्तेषां चाकृत, मूर्च्छिताः प्रभुपदे सर्वे लुठन्तोऽभवन्।
त्यक्त्वा क्रन्दत एव तांश्च निखिलांस्त्वग्रे चचाल प्रभु-
(श्चैतन्यं बहु कोमलं परमिदं काले कठोरायते)।।१५५७।।

पृष्ठे क्रामति कृष्णदाससुजनः कृष्णो विगृह्य प्रभो-
र्वस्त्रं तत्र कमण्डलुं च, पुरतो मत्तो गजेन्द्रो यथा।
कृष्णप्रेमविशेषभावभरितोऽयं निर्भयो भावको
याति स्माऽध्वनि कीर्तनं भगवतो नाम्नाञ्च कुर्वन् प्रभुः।।१५५८।।

७१. गायन् याति श्रीचैतन्यः।
कृष्ण! प्रियतम! कुत्रान्वेषणमिह कुर्यां भवजाले
श्रद्धानिष्ठापूर्वकमविरलसंस्मृतिमीहे भवतः।
मधुराकृतिदर्शनविकलात्मा जीवो नाना क्रामति
सिताकृते पिपीलिका पथि वा, क्व भविता नेत्रविषयः?।।



# वासुदेव-कुष्ठिनो ह्युद्धारः

७२. चेतन! तव सर्वं चैतन्यम्।
आविर्भावः कुरुते ख्यातं कुलमण्डलभूभागम्
सङ्गः साधौ सत्सन्तोषं भुवनेऽसाधूद्धारम्
संस्मरणं क्षुच्छमनं,दृष्टिः पुष्टिं, स्पर्शः स्वास्थ्यम्।
उपदेशस्त्विह निजकृतमखिलं लोकपावनं चरितम्
स्वेच्छालिङ्गनमातनुते,तेऽपरप्रेमप्रवाहम्।।

मत्तत्वं ननु जीवनेऽस्तु, भुवने सत्कारदुत्कारयो-
श्चिन्ता माऽस्तु तथाहि संसृतिनृणां, देशे क्वचिन्निश्चिते।
संकल्पो नियते भवेन्न समये यानस्य, न स्यात्तथा
स्थाने क्वापि विशेषके च ममता (शेते ममत्वे जगत्)।।१५५६।।

यात्रायामपरस्तदैव मिलति स्वादस्तु, भावि ध्रुवं
संसारेऽत्र तपोमयं प्रकृतितस्तद्र्यात्रिणो जीवनम्।
भावस्तद् हृदये भवेच्च ममताप्रेम्णोः प्रतिप्राणिनां
(सीम्नि प्रेम ममत्वमस्ति भुवने, कार्ये तु तेऽसीमिते)।।१५६०।।

यात्रैतादृशनुस्तथैव सफला यात्रा परं वस्तुतः
शक्या वक्तु,मथेदृशो नरतनुर्यात्री तु नारायणः।
देशस्तत्पदधूलितः प्रकृतितः संजायते पावनं,
पृथ्वी शुध्यति, सिद्धतीर्थविषयाणां कालिमा नश्यति।।१५६१।।

मार्गोपान्तनिवासिनः सहृदया लोकाः कृतार्थास्तथा
जायन्तेऽत्र, वसुन्धरे! जननि! ते नेयत्सुखं कर्हिचित्।
नानारत्ननिगूहनात्तु मिलितं स्या,द्यत्पदाघातत-
स्त्वेषां सर्वसमर्थसौहृदवतां (सौहार्दलक्ष्या नृता)।।१५६२।।

तीर्थानाञ्च यथावदेव भुवि यत्तीर्थत्वमद्यावधि
त्वक्षुण्णं स्थितमस्ति, कारणमहो! मुख्यं तदीयं त्विदम्।
एतत्तुल्यमहानुभावसुहृदस्त्वागत्य तीर्थेषु यत्-
स्वाङ्घ्रिस्पर्शविधेरघं विदधते तीर्थोषितं भस्मसात्।।१५६३।।

एव यथावद्यन्ननु तीर्थम्। याति पुनस्तां निर्मलतां कौ।।१५६४।।

कुर्वन्नस्ति महाप्रभुः सहृदयश्चैतन्यदेवोऽधुना
यात्रां दक्षिणदिङ्मुखं प्रति, यतो ग्रामात्स यातो यतिः।
तस्मिन्नेव करोति तूच्चभगवन्नामध्वनिं, नाम तच्-
चित्ताकर्षकवाक्सृतं सुमधुरं श्रुत्वा च हृद्ग्राहकम्।।१५६५।।

ग्रामाणां पुरुषाः स्त्रियस्तथाऽऽगत्यागत्य च वृन्द-वृन्दशः।।
चैतन्यं परिवारयन्ति तं, तन्मध्ये तनुते महाप्रभुः।।१५६६।।

६३. (क) ब्रूहि ब्रूहि त्वं रसनातः।
गोविन्द! श्रीकृष्ण! मुरारे! हे दयित! मुकुन्द! हरे!
माधव! केशव!नारायण!हे! विश्वम्भर! दामोदर!।

प्रभुस्वरे तत्र निजस्वरं तत्-
संमेलयित्वा मधु वादयित्वा।
स्वहस्ततालं लघुबालवृन्दं
नृत्यत्तथोच्चैः कथयद् बभासे।।१५६७।।

७३ (ख) ब्रूमो निजरसनातो भवतः पुरतः स्फुटमिह सर्वे
हरि-हरि-सुन्दर! गौर-मनोहर! मधुर-मधुर-रसदातः!।
गोविन्द! श्रीकृष्ण! मुरारे! हे दयित! मुकुन्द!हरे!
माधव!केशव!नारायण! हे! विश्वम्भर! दामोदर!।।

बालैस्तद् वयसाधिकास्त्वपि जना गायन्ति सार्धं तथा
कुर्वन्तो ननु नृत्यमेव बहवोऽभूवंश्च मत्तोपमाः।
एवं येन पथा संसार यतिकस्तत्रैव गौरप्रभुः
स्थाने श्रीहरिनामगुञ्जनमभू-(च्छ्रीनामगुञ्जोऽमृतम्)।।१५६८।।

मार्गस्यैवमसंख्यकस्त्रिपुरुषान् कुर्वन् प्रभुः पावनान्
कूर्मं स्थानमितो निमायियतिकः कूर्माचलं सोऽथवा।
एतत्तीर्थमवस्थितं विलसति त्वान्ध्रप्रदेशस्थिते
गञ्जामे ननु मण्डले (स भगवान् कूर्मो, धराधारकः)।।१५६९।।

पूर्वस्मिन् समये (वदन्ति हि जना) गच्छन् जगन्नाथजी-
तीर्थं, त्वल्पमभूत्स्थिरोऽत्र भगवान् रामानुजाचार्यजी।

पूर्वं तस्य बभूव कूर्मभगवन्मूर्तिः प्रतीतः शिवः
पश्चाद् विष्णुमसौ च कूर्मभगवत्सेवां तु बुद्ध्वाऽकरोत्।।१५७०।।

पश्चान्माध्वमतावलम्बिसुहृदामाप्तं प्रभुत्वे त्विदं
स्थानं साधुमहात्मना,मतिशया देशे प्रतिष्ठा बहु।
तीर्थस्यास्य तु दक्षिणेऽस्ति, सुमनाः प्राप्य प्रभुर्मन्दिरं
कूर्मस्याऽकृत दर्शनं भगवतो,ऽनृत्यन्मुदा विह्वलः।।१५७१।।

दृष्ट्वा नृत्यमलौकिकं बहु नरा नार्यः प्रभोः पुञ्जिता
भूत्वा कूर्मनिवासिनः स्वनयने जातास्तथा सार्थके।
कुर्वन्तोऽस्य च देवदुर्लभमहत्संदर्शनैस्तत्र, तद्
भावावेशगतोऽकृताऽतिसमयं नृत्यं प्रभुः कीर्तनम्।।१५७२।।

कुर्वन्नृत्यमसौ प्रभुर्ननु यदा भूयः क्षणानन्तरं
तत्रैवाऽऽस्त, ततस्तु दर्शकजनादेकश्च कूर्माभिधः।
आयातः प्रभुसन्निधौ ननु सदाचारी द्विजो वैष्णवो,
नत्वाऽमुं स निवेदनं विहितवान् बद्धस्वहस्ताञ्जलिः।।१५७३।।

'संजाताः पुरवासिनोऽद्य भगवन्! सर्वे कृतार्था वयं
श्रद्धेयप्रियदर्शनैस्तु भवत,स्तीर्थं तथैवंविधम्।
आयान्तीह यदा कदैव पुरुषास्तुल्या महान्तस्त्वया
कर्तुं पावनमात्मपादरजसा (तीर्थं सतोऽवस्थितिः)।।१५७४।।

सत्कल्याणनिमित्तमेव महतां त्वत्तुल्यसाध्वात्मनां
लोकस्यात्र निमायिसौहृदवतां देशाटनं जायते।
यात्राया भवतस्तु मुख्यमवनौ लक्ष्यं निमाय्यात्मनः
सद्गार्हस्थ्यगृहाऽमलत्वकरणं (सल्लब्धिरात्मद्युतिः)।।१५७५।।

अस्मि ब्राह्मणबन्धुरेव विषयेऽत्यन्तं तथाऽकिञ्चनो
दीनोऽहं ननु निर्धनोऽत्र, भगवन्! चेन्मद्गृहं पावनम्।
कुर्यादात्मपदाब्जरेणुनिकरै,र्भूयात्ततोऽनुग्रहोऽ-
त्यन्तं सद्गृहिणो ममोपरि (महत्प्राप्तिर्हि सत्सत्त्वता)।।१५७६।।

कुर्वन् प्रणामं शिरसाऽर्थयामि
त्वत्पादयोर्नाथ! निमायिसाधो!।

एतां मदीयां तु भवानवश्यं
गृह्णातु याच्ञां' (पवतेऽखिलं सत्)।।१५७७।।

ऊचे 'विप्रवर!' प्रभुः प्रकटयन्मोदं 'भवान् कीदृशीं
वार्तामत्र करोति, तु द्विजपतिः साक्षान्मुखं श्रीहरेः।
आतिथ्यग्रहणे त्वहं विनयिनः सद्वैष्णवस्यात्मनोऽ-
होभाग्यन्तु भवादृशो द्विजपतेर्मन्ये (क्वचित्सत्कृती)।।१५७८।।

लोके योऽस्ति निमायिनो भगवतो भक्तश्च सत्साधुषु
श्रद्धावांश्च सुखप्रतीतिरतिथेः सेवासु येषां हृदि।
तादृग्भक्तगृहप्रसादमधुराहाराशनाज्जायते
धन्यः पुण्ययुतस्तथातिथिरपि (क्वाप्यत्र योगः सतोः)।।१५७९।।

आतिथ्यतस्तादृशतः कृतार्था-
वातिथ्यकर्ता भवतोऽतिथिश्च।
द्वावेव, तस्माद् भवतस्त्ववश्यं
सतो गृहातिथ्यरसं ग्रहीष्ये'।।१५८०।।

आनन्देन निमन्त्रणस्य मुखतः श्रुत्वा प्रभोः स्वीकृतिं
विप्रोऽभूद् विकलो यथा स, समये तत्रैव गेहं निजम्।
अस्तव्यस्तदशो गतः प्रभुकृते चोक्त्वा निजब्राह्मणीं
नाना वस्तु तथोत्तमोत्तममहो! निर्मापयामास सः।।१५८१।।

साध्वी सत्त्वगुणान्वया निजपतिप्राणा सती ब्राह्मणी
निर्माय क्षणतस्तु वस्तु विविधं चक्रेऽनुरोधं, प्रभोः।
आहूयाऽऽनयनाय सा निजपतौ,दृष्ट्वाऽखिलं प्रस्तुतं
भोज्यं वस्तु, गृही द्रुतं प्रभुमसावाहूय चानीतवान्।।१५८२।।

गेहञ्चागत एव स प्रभुपदे प्राक्षालयत्त्वात्मनः
पाणिभ्यां, स्वयमेष तत्पदजलं संपीतवान्, स्वं तथा।
पश्चात्पायितवान् कुटुम्बमखिलं, तच्चोपवेश्य प्रभुं
स्थाने भद्रवरासने भगवतो भोगप्रसादं गृही।।१५८३।।

आनीय प्रभुसम्मुखे निहितवानानीय, चालोक्य तत्-
प्रेमाक्तं विविधञ्च सुन्दरमहो! सुस्वादु भोज्यान्नकम्।

दृष्ट्वा तस्य तथोपरीह तुलसीविष्णुप्रियामञ्जरीं
प्रीतोऽत्यन्तमसौ प्रसादमघसत्स्मृत्या प्रभुः श्रीहरेः।।१५८४।।

भुक्ते श्रीप्रभुणा निमायियतिना विप्रः प्रसादे गृही
विश्रामाय चकार सम्प्रति परस्थाने व्यवस्थां प्रभोः।
अन्नं तत्प्रभुभुक्तशेषमपरं बुद्ध्वा प्रसादं द्विजो
जग्राह स्वकुटुम्बवृन्दसहितः (श्रद्धा चिनोति प्रियम्)।।१५८५।।

विश्रामञ्च परत्र सोऽतिथियतिर्भागेऽस्ति कुर्वन् प्रभुः,
कूर्मस्तत्पदसेवनं द्विजगृही तत्रैत्य कुर्वन्नभूत्।
मन्दं मन्द,मुवाद सेवनमसौ कुर्वन् प्रभोः पादयो-
'र्गार्हस्थ्यस्य परं तथाधिकमिदं जालं प्रभो! दूषितम्।।१५८६।।

स्थित्वाऽस्मिन् भवितुं न वै भगवतः सच्चिन्तनं शक्यते,
तूद्विग्नः परमेव साम्प्रतमदोमायार्णवादस्म्यहम्।
उद्धारन्तु यथापि बोधतु तथा कुर्यात्पुनर्देहि मे
स्वे पादे शरणं, भवच्चरणयोरेषैव नम्रार्थना'।।१५८७।।

ऊचे 'विप्रवर!' प्रभुः प्रकटयन् सत्प्रेम विप्रं प्रति
त्वं गेहस्य समस्तकर्म भगवत्सेवां तु बुद्ध्वैव कौ।
कुर्वन्नेधि,च कृष्णकीर्तनमहं स्थित्वैव गेहे कुरु
ह्यन्येषामपि चास्य बोधनमथ (व्यक्तिप्रधाना स्थितिः)।।१५८८।।

यावत्समाप्य नहि दक्षिणदेशयात्रा-
मायामि सम्प्रति निवृत्य पुरीमहं वै।
संकीर्तनं भगवतो विदधत्तु नाम्नां
स्थित्वाऽत्र चैव भव तावदहो! प्रचारम्'।।१५८९।।

सन्तोषः किमपि प्रभोस्तु वचनैस्तैर्ब्राह्मणस्याभवत्
कर्तुं तत्क्षणमेव तेन भगवच्छ्रीनामसंकीर्तनम्।
संकल्पो विहितो,ऽवसच्च निशि वै तस्यां प्रभुस्तन्महा-
भागब्राह्मणकूर्मसात्त्विकगृहे (सत्त्वात्मनः सत्स्थलम्)।।१५९०।।

प्रातोऽग्रे गमनाय नित्यविधितो भूत्वा निवृत्तः प्रभुः
प्रस्थानं कृतवान्, ययौ द्विजपतिर्ग्रामात्तु यावद् बहिः।

तेनैव प्रभुणा च सात्त्विकगृही कूर्मो विदूरं, यदा
चक्रे तस्य निवर्तनाग्रहमहो! भूयस्तु भूयः प्रभुः।।१५६१।।

ततोऽधिकं स दुःखितात्मना रुदन् गृहं प्रति।
निवर्तते स्म (साधुहृद्वियोग एव दुःखकम्)।।१५६२।।

ग्रामेऽत्रैव तथैकवैष्णवजनोऽभूद् वासुदेवाभिधः,
प्रीतिः साधुमहात्मलोकपदयोरासीच्च तस्याधिकम्।
यत्राप्यागमनस्य साधुसुहृदः कस्यापि वृत्तं पपौ,
तेषां पादनमस्कृतिं स्म कुरुते दूरात्तु तत्राऽऽगतः।।१५६३।।

आसीद् भागवतस्य वैष्णवहृदः प्रारब्धकर्माध्वना
सम्पूर्णे वपुषि त्वमुष्य गलितं कुष्ठं विरुढं परम्।
तस्मादस्य मनागपि स्म भवति क्लेशप्रतीतिर्नहि
(क्लेशो भौतिकवस्तुनीह ममताऽऽसक्त्योर्विपाको भुवि)।।१५६४।।

स प्रारब्धककर्मणामिदमहो! भोगं तु मत्वाऽऽत्मनः
सेहे भक्तमनाः प्रसन्नमनसा, तस्याङ्गके चाखिले।
संजातोऽस्ति तथा व्रणः पुनरहो! कीटाश्च तेषूद्गताः,
कीटानामपसारणस्य कुरुते नो वासुदेवः श्रमम्।।१५६५।।

नैतत्त्वेव, परं स्वतो हि भुवि यो निःसृत्य कीटोऽपत-
त्तं तूत्थाप्य यथावदेव स पुनर्देहव्रणेष्वात्मनः।
स्थानेऽधत्त, पुचक्रियाञ्च विदधद् ब्रूते 'क्षितौ कुत्र त्वं
भ्रातर्यास्यसि, कस्यचिन्ननु पदस्याधस्तु पिष्टो भवेः।।१५६६।।

तत्त्वत्रैव वसाऽत्र खादितुमथाऽऽहारोऽपि भावी मिलन्'
संसारी व्यवहारमीदृशमहो! दृष्ट्वाऽस्य लोकोऽहसत्।
तं मत्तञ्च बभाण, किन्तु सुहृदो नास्यास्ति संसारिणां
चिन्तैव (प्रभुलक्ष्यपावनहृदो निर्देशको हि प्रभुः)।।१५६७।।

कर्तुं प्रसन्नमलषत्तु निजप्रियं स
स्थानेऽत्र जल्पति जनो यदि, तत्स जल्पेत्।
लोकोऽखिलोऽत्र भुवि तद्दृशि वातुलोऽस्ति,
प्रायोऽखिलस्य दृशि वातुल एव सोऽयम्।।१५६८।।

प्रातस्तेन तथा श्रुतं–द्विजपतेः कूर्मस्य गेहेऽद्भुत-
स्तेजस्वी परमो हि नूतनवयाः सद्रूपलावण्यवान्।
संन्यासी त्वपरो विरक्तभगवद्भक्तोऽस्ति चात्राऽऽगत-
(श्चक्रेऽस्मिन् भ्रमतः स्वतः स विभवः स्याद्वै समक्षः प्रियः)।।१५९९।।

तच्छ्रीदर्शनमात्रतस्तु हृदये पूतस्य भावस्य वै
संचारो भवति, स्वतो हरि-हरि-ह्वानं तथा कुर्वती।
जिह्वा संभवति, श्रुते त्वियति, सोऽयं वासुदेवः क्षणे
तस्मिन्नेव निमायिदर्शनकृते धावन् प्रभोरागतः।।१६००।।

कूर्मब्राह्मणगेह,मत्र चलितश्चागत्य तत्प्रत्ययो,
यत्त्वल्पक्षणपूर्वमेव नचिराद् यातस्त्वितोऽग्रे प्रभुः।
एतस्मिञ्छ्रुत एव सोऽत्र पतितो भूत्वा क्षितौ मूर्च्छितो
भक्तब्राह्मणकुष्ठिकश्च करुणस्वाने विलापं रुदन्।।१६०१।।

कुर्वाणो दिशति स्म 'हा हतभगस्त्वेतादृशोऽहं गतो,
यत्प्रेमप्रभुदर्शनादपि तथा यातोऽधुना वञ्चितः।
हे! मां रक्ष जगत्पते! निजकृपां कृत्वा जगन्निन्दिते
कङ्कालेऽशरणाश्रय! स्वमधुरालोकैः कृतार्थं कुरु-।।१६०२।।

एतं मामधमं, भवान् घट-घट-ज्ञाता तु, हेऽन्तःस्थित!,
क्षोण्यां सज्जनसाधुभक्तसुमनःसंन्यासिवेषैस्तथा।
कुर्वन् पर्यटनं भवान्ननु जगत्पङ्के विलीनात्मना-
मुद्धारं विदधन्निराश्रितनृणां भ्राम्यत्यनन्तप्रभ!।।१६०३।।

कश्चित्त्वाश्रय एव मे न भगवन्नन्यः, कृतो मत्परि-
त्यागो लोकजनैः कुटुम्बपुरुषैः सोऽहं समाजे तथा।
अस्पृश्यो ननु बुध्यते, नहि मया कश्चित्समं भाषते,
स्थानं केवलमाश्रयस्य भगवत्प्रेमिन्! भवानेव मे।।१६०४।।

धृत्वा दर्शनतो मां कस्माद् वञ्चितमद्धा
यातोऽग्रे' (नु निमायिप्रीतौ वञ्चनमास्ते?)।।१६०५।।

मन्ये सम्प्रति वासुदेवकरुणस्वानं निमायिप्रभु-
र्दूरादेव शृणोति, चैव सहसा प्रेमी निवृत्तः पथः।

प्राप्तः कूर्मगृहं, रुदन्तमथ सोऽयं वासुदेवं महा-
प्रेम्णा चात्महृदा युयोज (सुहृदः सौहार्दमस्त्यद्भुतम्)।।१६०६।।

पश्चाच्चापसरन् द्रुतं, भयवशात्संकम्पमानस्तथा
'स्पर्शं मा कुरु मे भवान्नु भगवन्! हे!' वासुदेवोऽवदत्।
'मद्देहेऽस्ति निमायिभाव! गलितं कुष्ठं, सुवर्णोपमे
नाथ! त्वद्वपुषि प्रियेऽत्र लगिता पूयोऽपवित्रस्त्वयम्।।१६०७।।

पापस्यास्य ततः प्रभो! कुरु नहि स्पर्शं' कदा तु प्रभुः
श्रोताऽऽसी,त्स तु विद्यते सहृदयो भक्तात्मनां वत्सलः।
ऊचेऽसौ प्रियवासुदेवसुहृदः कुर्वन् दृढालिङ्गनं
(भेदो भागवते कथं भगवति स्यात्पुत्रमात्रोर्यथा)।।१६०८।।

'हे! त्वत्समानां भगवत्प्रियाणां
स्पर्शं पवित्रं भुवि वासुदेव!।
कृत्वाऽहमिच्छामि निजं पवित्रं
कर्तुं स्वयं' (प्रेमनिधिः सदात्मा)।।१६०६।।

न ज्ञातं, प्रभुकोपगूहनरसे प्राप्ते तथैव क्षणात्
क्व स्थानेऽखिलदेहकुष्ठमचलत्तद्वासुदेवस्य तत्।
स्वस्थोऽयं सहसा गतोऽखिलतया, सम्पूर्णदेहस्तथा
हेमाभोऽस्य दिदेव (सौहृदरसादन्यो न कश्चिद्रसः)।।१६१०।।

दृष्ट्वैवं स कृपालुतां नयनयोरश्रूणि मुञ्चन् प्रभो-
र्ब्रूते गद्गदकण्ठतः करुणयोक्त्या वासुदेवः द्विजः।
'उद्धारं मम पापिनस्तु सदृशः कृत्वा प्रभो! स्वं भवां-
श्चक्रेऽद्धा पतितात्मपावनमहो! नामैव सत्सार्थकम्।।१६११।।

अस्त्यद्धा पतितात्मपावनकृतिस्तु त्वत्प्रशस्तिः सदा,
मायामोहविलीनबोधरहितः प्राणी त्वहं त्वत्स्तुतिम्।
किं शक्नोमि विकर्तुमेव?, भवतः स्वच्छप्रशस्तिश्रियः
शंसा मानवशक्तिबाह्यविषया (त्वल्पा मनुष्यप्रमा)।।१६१२।।

साक्षादस्ति भवान्नृरूपसुलभो नारायणः, श्रीहरि-
श्चैतन्यप्रतिमो भवान् दिलसति प्रच्छन्नवेषात्मकः।

माहात्म्यं भवतस्त्वपारमपरं, शेषो गुणाऽऽशंसनं
त्वासृष्ट्यन्तमपि ह्यनन्तफणकैः कर्तुं न शक्नोति ते'।।१६१३।।

एवं तस्य तथा त्वियत्कथयतः कण्ठो भृतो,ऽग्रे स नो
किञ्चिद् वक्तुमपि क्षमोऽभवदहो! भूत्वा तथा मूर्च्छितः।
पार्श्वे श्रीप्रभुपादयोश्च पतित,स्तूत्थापयामास तं
संकुर्वन्नुपदेशनं भगवतो नाम्नो निमायिप्रभुः।।१६१४।।

श्रीकृष्णकीर्तनकृतेः करणस्य नित्यं
शिक्षां ददा,वथ तयोर्द्विजयोर्विधाय।
प्रेम्णा तथाहि परिरम्भणमेष भूय-
श्चाग्रे महाप्रभुरतश्चलितो निमायी।।१६१५।।

यन् ग्रामे विविधे प्रभुस्तु चलितस्तीर्थाच्च कूर्माचलात्-
प्राप्तः सम्प्रति सन्निमायियतिकस्तीर्थे नृसिंहाभिधे।
कृत्वा तत्र तथा नृसिंहभगवत्स्तुत्यर्थने कीर्तनं
कुर्वन्नस्ति बहुक्षणं, पथगते लोकेऽखिले पूर्ववत्-।।१६१६।।

संकुर्वन्नुपदेशमेष भगवन्नाम्नः प्रभुः प्राप तच्-
चैतन्यस्त्वधुना च पावनसरिद्गोदावरीतीरकम्।
शोभां प्राकृतिकीं विलोक्य सुहृदः स्थानस्य तस्य प्रभो-
श्चेतोऽनृत्यदमुष्य भानमभवद् वृन्दावनस्य स्फुटम्।।१६१७।।

सस्मारैष 'जगाद भौमसुमतिस्त्वत्रैव गोदातटे
रामानन्दकरायकेण मिलितुं' सोऽत्रत्यशास्ता नृपः।
कस्मात्सम्मिलनं भवेन्नु विधितस्तेनात्र, तच्चिन्तयन्
चैतन्यश्च विचारयन् (परिचयापेक्षा प्रभूणामपि)।।१६१८।।

तत्सर्वथा सम्प्रति चाऽऽप गोदा-
वरीतटं त्वेष निमायिगौरः।
आगत्य चैकत्र तथाऽऽस्त तत्र
(स्थाने विचार्यैव पदं निधेयम्)।।१६१९।।



# राजा रामानन्दरायः

७४. तेभ्यो जगति नमः पुरुषेभ्यः।
सज्जनसङ्गाऽऽसक्तिः परगुणसत्प्रीतिर्गुरुविनतिः
विद्याऽऽसक्तिर्निजयोषिद्रतिरिह जननिन्दाभीतिः।
ईश्वरभक्तिश्चेतोनिग्रहशक्तिः खलसृतिमुक्तिः
यत्रैतद् गुणवृन्दं निवसति, नमति हरिस्तद्गुणिनः।।

सम्पत्तिः प्रभुता च यौवनमिदं नाशस्य हेतुस्त्रिकं
नीतिज्ञैरविवेकितामिलनतो ह्युक्तं सदाचारिभिः।
सत्यं तत्त्रितयं विलभ्य पुरुषो मत्तोऽविवेकी यथाऽ-
सत्सङ्गी भुवि जायते (नृविरलः सोढुं क्षमोऽसन्मदम्।।१६२०।।

विद्यायौवनशक्तिवैभवतपःसंबन्धिनानामदे
लोके शक्तिमदश्च वैभवमदो द्वावेव मुख्यौ मतौ।
शक्तिं प्राप्य न यः प्रमाद्यति तथा लब्ध्वाऽभिमानी धनं
संसारे च न जायते, स मनुजो नास्त्यत्र साधारणः।।१६२२।।

सल्लोकोत्तर एव सोऽस्ति पुरुषः कश्चित्, सुखं ह्यक्षयं
तादृक्सत्पुरुषाङ्घ्रिवन्दनकृतेः प्राप्तं धरायां भवेत्।
आसीत्तादृशवन्दनीयपुरुषेष्वेको महाभक्तिमान्
रामानन्दकराय-भागवत-ना (भावान्महात्मा महान्)।।१६२२।।

रामानन्दपिताऽभवन्नृपभवानन्दः, पुरीतोऽवसत्
स्थाने दूरमलालनाथसविधे क्रोशत्रये श्रीभवः।
कायस्थः करणान्वयोऽभवदसौ जात्या, च गोपीप्रियो
रामानन्द-कला-सुधोक्तनिधयो वाणीप्रियस्तत्सुताः।।१६२३।।

आसीदुत्कलशासकस्य नृपते रुद्रप्रतापस्य स
त्वास्थाने सुजनो महाशय-भवो मुख्याधिकारी तथा।
तत्पुत्रास्त्वपि च त्रयो नृपसभाप्राप्ताधिकारस्थिताः
कुर्वन्ति स्म तु राजकर्म (खगतिः केनापि सूत्रेण नुः)।।१६२४।।

गोपीकः कटकाख्यराजकुलतो मालप्रदेशाधिपः,
कस्मिंश्चिच्च महाप्रतिष्ठितपदे वाणीकनाथस्तथा।

आसीत्संस्थित एव चाधिकरणे, श्रीरामनन्दो नृपोऽ-
भूद्विद्यानगरस्य चोत्कलभुवश्चान्तर्गतस्यापरः।।१६२५।।

नाना भारतवर्षकेऽत्र समयेऽल्पाल्पं स्वतन्त्राणि चाऽऽ-
सन् राज्यानि, च तल्लघुस्वधरणीशास्ता नृपाणां गणः।
धर्मं मुख्यमहो! सनातनदिशा मत्वा प्रजापालनं
चक्रे, क्षत्रियधर्मतोऽपि समरं (धर्माऽवनं क्षत्रता)।।१६२६।।

आसीत्तल्लघुराज्यवृन्दमधिकं तैलङ्गदेशेऽपि, तत्-
कोटाख्यं लघुरूपराज्यमभवद् यद्राजधानी त्वभूत्-।
श्रीविद्यानगरे, च तल्लघुभुवो गोदोत्तरे संस्थितं
भागे राजमहेन्द्रमेव नगरी मान्या प्रधानाऽधुना।।१६२७।।

गोदादक्षिणतीरसंस्थितमदस्तु प्राच्यविद्यापुर-,
ञ्चासीद्राजमहेन्द्रतः प्रचलिताद् दूरं दशक्रोशतः।
बोधन्ते विजयाख्यमेव नगरं सम्प्रत्यनेके जना-
स्तद् विद्यानगरं, भ्रमः परमयं तन्नामसाम्यादहो!।।१६२८।।

विद्मः पूर्वत एव, तूत्कलभुवस्तात्कालिकः शासको
देवश्रीपुरुषोत्तमो ननु महाराजो विजित्याऽऽहवे।
श्रीविद्यानगरस्य शासकमहो! देशं तदीयं निजे
राज्ये मेलयति स्म, भाति नगरं श्रीदेवभावाऽऽभृतम्।।१६२९।।

तद्राज्यशासकगतस्त्विह रायरामा-
नन्दोऽवसत्परमथोत्कलराज्यपक्षात्।
तस्मै तथोत्कलनृपान्ननु राज-रायो-
पाधी निमायिमनसे मिलितावथास्ताम्।।१६३०।।

आसीद्रायमहाशयोऽतिकुशलोऽसौ राज्यकार्ये, क्षण-
स्थानज्ञो विनयी नरो ननु सदाचारी च शूरस्तथा।
अप्यासीन्ननु संस्कृतस्य सुमनाः सन् फारसीपण्डितो
बोद्धा साधु (निमायिसौहृदयुतः सन्मानवः संस्कृतः)।।१६३१।।

एतेन त्वनुशीलितं बहुतरं साहित्यकं संस्कृतं,
सर्वेषु प्रगतिर्बभूव सुहृदः शास्त्रेषु तत्संस्कृते।

विद्याया द्विजसार्वभौमसुधिया व्यासङ्गिहेतोरति-
स्नेहोऽमुष्य समं बभूव (भवति स्नेहः समानात्मनोः)।।१६३२।।

याति स्मोत्कलमेष राजकृतितो रामो यदापि, ध्रुवं
पुर्यां पण्डितसार्वभौमसुहृदं गत्वा तदैवाऽमिलत्।
शास्त्राणां भवति स्म तेन सहितः कुर्वंस्तथाऽऽलोचना,-
मेतं सद्‌धृदयेन च स्म लषति श्रीसार्वभौमोऽपि सः।।१६३३।।

आस्तां तत्कविताप्रिये च हृदये चैव द्वयोरेव, तौ
विद्वांसौ सरसौ तथाहि सरलौ शास्त्राधिकाभ्यासिनौ।
अन्योन्यं समचित्तता सुमनसोर्भूयोऽधिकं तत्तयोः
(सादृश्यं प्रथमं समे हि हृदये, धर्मे द्वितीयं समे)।।१६३४।।

आसीत्सौहृदभावकाव्यरसिको रुद्रप्रतापो महा-
राजोऽप्यत्र, ततः स्म सोऽपि कुरुते भूयोऽधिकं त्वादरम्।
रामानन्दकसार्वभौमसुहृदोरेतद्‌द्वयोरेव खलु-
(लोके सत्पुरुषादरो नरपतिद्वारा प्रमाणं भवन्)।।१६३५।।

प्रतापरुद्रस्य महानृपस्य
स्वके जगन्नाथकवल्लभाख्ये।
सुनाटके रायमहाशयोऽद्धा
शंसां चकार (प्रियता हि शस्या)।।१६३६।।

कायस्थः करणान्वयी पुनरपि श्रीरामरायोऽभव-
त्तस्याऽऽस्तामलस्तथैव शुचिराचारो विचारोऽधिकम्।
देवब्राह्मणपादयोरतिशयां श्रद्धामसौ संदधे
श्रौतस्मार्तविधेश्चकार विधिवच्चैष त्वनुष्ठानकम्।।१६३७।।

कुर्वञ्छासनकर्म धर्मतश्च श्रीकृष्णपदारविन्दयोः।
आसीत्संततमेष योजयन् स्वं चेतो (भवतु स्थिरे रुचिः)।।१६३८।।

प्रातर्नित्यसमानमेष बहुभिर्विप्रैः समं वैदिकै-
रेकस्मिन् दिवसे च पुण्यसरितं स्नानाय गोदावरीम्।
आयातः पतितात्मपावनजलां, स्तोत्रं पठन्तो द्विजाः
सङ्गेऽग्रे स्म चलन्ति वादकजना नानाऽस्य वाद्यस्वरैः।।१६३९।।

प्राप्तस्तादृशवेष्टितो बहुजनैः सोऽयञ्च गोदावरी-
तीरं, चैव तथागते सति तटे, वाद्यानि ते वादका।
रुन्धन्ति स्म निजं निजं, द्विजगणो वस्त्राणि चोत्तार्य तद्-
गोदाशीतलनिर्मलात्मसलिले स्नाति स्म मन्त्रं गिरन्।।१६४०।।

स्तोत्रं च स्नपनक्षणे बहु तथा पठ्यं पठित्वाऽकरोद्-
रामानन्दकरायजी स्नपनकं, देवर्षिपितॄन् पुनः।
सन्तुष्टांश्च विधाय चाभिलषितामेष त्वदाद् दक्षिणां
विप्रेभ्यस्तत एव तु प्रचलितः स्वां राजधानीं प्रति।।१६४१।।

तस्मिन्नेव ददर्श चैष समये चाधो निषण्णं तरो-
र्दूरादेव तथानवीनवयसं संन्यासिनं त्वेकलम्।
काषायाम्बरधारिणं प्रियमहालावण्यरूपान्वितं
चैतन्यप्रतिमं तथैकयुवकं (भाग्यं सुरूपं दृशोः)।।१६४२।।

न ज्ञातं, दृशि किं भृतं तु कुहकं यूनोऽस्य संन्यासिनो,ऽ-
ल्पं दृष्ट्वैव स मन्त्रमुग्ध इव तं रायोऽभवत्तत्क्षणम्।
दृष्टं तेन–तथाङ्गकान्मधुरिमा निःसृत्य संन्यासिनः
स्थानं निर्जनमेतदत्र कुरुते सानन्दमुल्लासदम्।।१६४३।।

गोदाया भवति प्रकाशितमिव स्थानं तदेकान्तकं
शान्तं तस्य निमायिकान्तिकिरणैर्नूत्नस्य संन्यासिनः।
संन्यासी स्वपदाऽऽधृतापरपदश्चैकाग्रभावात्परं
रामानन्दमुखोन्मुखोऽस्ति (नयनं धीरस्य लक्ष्ये सदा)।।१६४४।।

आस्ये चोत्सुकता तथाऽस्य मुदिता चोन्मत्तता भ्राजते
वाञ्छा तन्मयताप्तिहेतुमधिका केनापि सार्धं पुनः।
संन्यासी स्मयते मनाक्, सुमनसो बिम्बाभरक्तावुभा-
वोष्ठावस्य तथा स्वतस्तु चलतः (स्वत्वे हृदः स्पन्दनम्)।।१६४५।।

न ज्ञातं, स्वत एव तौ च लगतः किं भाषितुं साम्प्रतं,
शक्तो रायमहाशयो न सुमनाः संधर्तुमात्मस्थितिम्।
संन्यासी स पपाठ कञ्चन तथा मन्त्रं पुनर्मोहनं,
राजत्वाभिमतिं विहाय यदहो! तस्य प्रभावादसौ।।१६४६।।

यान् यांस्तथैव डयनं प्रति, साध्वजिह्मं
संन्यासिनं प्रति ससार निमायिनं तम्।
दृष्ट्वा निजप्रभुमहो! यतिनन्तु यान्तं
पृष्ठेऽपि तत्परिचराश्चलिताश्च पृष्ठे।।१६४७।।

बुद्धं स्यान्निखिलैस्तु भावकगणैः स्पष्टं, नवीनस्त्वयं
संन्यासी त्वनुरागपारसमणिश्चाऽऽस्ते निमाय्येव नः।
श्रीचैतन्यमहाप्रभुः, स सुमना गोदास्रवन्तीतटे
स्नानादेरिदमेव चास्ति विमृशन् भूत्वा निवृत्तो रहः।।१६४८।।

'रामानन्दमहाशयेन विधितः कस्माद् भवेत्सङ्गमो'
वाद्यानां नदतां रवोऽस्य समये तत्रैव यातः श्रुतौ।
पश्यन् स प्रति तांश्च वादकजनान् जातो निमायिप्रभु-
(र्वस्तु ह्युन्मुखता विशेषमनसः संन्यासिनोऽपि प्रति)।।१६४६।।

दृष्टं तेन च वाद्यवादकपरं भव्यैकपल्यङ्कग-
स्तेजस्वी परमस्तथैकपुरुषश्चायाति, तत्सर्वतः।
संमर्दश्चलति स्वतो बहुनृणां, दृष्ट्वैव तं बुद्धवान्-
रायः स्यादयमेव तत्प्रभुरहो! स्याद्रामनन्दोऽस्ति नो।।१६५०।।

दृष्टं तेन यदा महान् स पुरुषश्चैश्वर्यवान्नो गतः
पल्यङ्के, तु ममैव सम्मुखमितश्चायाति, तत्परम्।
प्रेमोर्मिस्तु तरङ्गिताऽस्य हृदयेऽब्धौ, निश्चयोऽस्याभव-
च्छ्रीरायस्त्वयमेव चास्ति (चिनुते सच्चित्सदर्थं स्वतः)।।१६५१।।

स्वस्यालिङ्गनदानहेतुमधुनाऽस्याभूच्च हृद् व्याकुलं
रामानन्दमहाशयाय, बहुशो जाताऽभिलाषाऽस्य यत्।
'धावित्वा द्रुतमत्र मानवममुं कण्ठे महान्तं लभै'
भावोऽयं निजकोऽमुना कतिपयै रुद्धः परं हेतुभिः।।१६५२।।

भूमिष्ठः स समृद्धिशालिपुरुषो भूत्वा तथैव क्षणे
चक्रे सन्नमनं महाप्रभुपदे, दृष्ट्वा नमन्तञ्च तम्।
संन्यासी पुरुषं यथाऽपरिचितश्चैकस्त्वपृच्छत्तथा
स्नेहेनातिशयेन (नृत्यति हि सद्वृत्त्यैव सत्सौहृदम्)।।१६५३।।

'राजा रामानन्दो रायः। आस्ते संज्ञा किं ते चैव?'।।१६५४।।

अत्यन्तमेव तु जगाद विनीतभावाद्
बद्धस्वपाणियुगलाञ्जलिरेष रायः।
'शूद्राधमं कथयते भगवंस्तु 'रामा-
नन्दं" स्वदीनममुमेव च भक्तिहीनम्'।।१६५५।।

श्रुत्वैवेयदसौ चकार सहसोत्थाय प्रभुः संश्लिषां
रामानन्दमहाशयस्य, महतः स्नेहादवादीत्तथा।
'दत्तो रायमहाशय! प्रसुधिया श्रीसार्वभौमेण मे
श्रीपुर्यां भवतस्तथापरिचयः(स्थाने फलत्याशयः)।।१६५६।।

आज्ञां मूर्ध्नि विधाय सौहृदवतस्तस्यैव चात्राऽऽगतोऽ-
हं विद्यानगरे तथैव भवतः संदर्शने केवलम्।
संयोगो भवता भवेत्तु विधितः कस्मादहं चिन्तयं-
श्चासं, पश्यतु तत्कृपाब्धिभगवद्भक्तात्मनोऽनुग्रहम्।।१६५७।।

दैवादेव च दर्शनन्तु भवतो जातं, कृतार्थोऽधुना
जातोऽहं भवतः सुदर्शनमहैः, सम्पूर्णयात्रा च मे।
सञ्जाता सफला, मम प्रणयिनो जातं तथा सार्थकं
संन्यासग्रहणं (निमायिमनसां दैवं सुहृत्केवलम्)।।१६५८।।

सञ्जातं स्वत एव दर्शनं त्वादृग्भागवतस्य सद्धृदः।
सत्पुंसः परमस्य यन्मम' (श्रीप्रेमा पुरुषोऽत्र सीमितः)।।१६५६।।

रायो बद्धकरो जगाद 'भगवन्'! हे' दीनतापूर्वकं
'मह्यं तादृशकं प्रतीतिमयते–जातोऽद्य पुण्योदयः।
नानानां मम जन्मनां, स्फुटमहो! नारायणात्माऽऽगतो
धृत्वा मेऽत्र तु पावनार्थमपरः संन्यासिवेषं भवान्।।१६६०।।

भट्टाचार्यकसार्वभौमसुधियः संविद्यते पूर्वतो
दीने पूर्णमहैतुकी मयि कृपा, सोऽनुग्रहं सर्वदा।
पुत्रस्येव ममोपरीह च तथा शिष्यस्य संबन्धिनो
भृत्यस्येव तनोति (भाग्यमवनौ संबन्धता सद्धृदा)।।१६६१।।

श्रीभट्टोपरि विद्यते तु भवतोऽसीमा कृपा (ज्ञायते)
स्वीकृत्याग्रहकं हि तस्य भवता तर्ह्येव धन्यः कृतः।
दीनोऽहं निजदर्शनै,रपि रहः शोचन् स संतिष्ठते
कल्याणस्य वचांसि चैव ननु मे (धन्यः, सता चिन्त्यते)।।१६६२।।

तस्यैवाद्य फलस्वरूपमपरं सौभाग्यमाप्तं भव-
त्प्रेमापूर्वसुदर्शनस्य सदृशः स्थानेऽधमस्यापि मे।
जन्माऽभून्मम निम्नजातिकुलके,ऽह्नोरात्रमस्म्यापृतो
लोकैर्निन्दितराजकर्मणि (यतोऽन्तःशोधनं, कर्म तत्)।।१६६३।।

कालोऽत्येति पुनस्तथेन्द्रियजगन्निःसेवने चैव मे,
संश्लेषः परमार्थमार्गविमुखक्षुद्राधमस्यापि च।
दत्तो मे भवता तथाविषयिणो, दीनेष्वियं विद्यते
स्पष्टं वत्सलतैव ते (त्विह कृतिर्दीनानुकम्पाऽपरा)।।१६६४।।

स्वं मत्पौरुषमत्र किञ्चिदपि नो, मत्कोऽधिको भाग्यवान्
संसारे भविताऽद्य, शंसनमितः कुर्यां स्वभाग्यस्य किम्?।
स्वेऽधाषात्त्वियतीं स्मृतिं प्रभुरहोऽमुष्याधमस्यात्मनि-
स्थानेऽद्भ:सुकृतस्य कस्य फलनं बोधै' (क्षणादेव शम्)।।१६६५।।

'अत्राऽऽगतोऽस्मि भवदीयमुखात्तु राय!
श्रीकृष्णपावनकथाश्रवणेच्छयैव।
संश्राव्य तां स्वकृपया कुरु मां कृतार्थं'
(ते भूरिदाः, प्रददते दयितस्य वार्ताम्)।।१६६६।।

'श्रीकृष्णपावनकथां भवपङ्कमग्नोऽ-
हं मायया नियमितो भगवंस्तु जीवः।
किं वक्तुमेव भवतः पुरतस्तु शक्तः?
साक्षाद् भवान् स्वयमिहास्ति हरेः स्वरूपम्'।।१६६७।।

'नो कुर्वीत तु वञ्चनां मम भवान् बुद्ध्वाऽत्र संन्यासिनं,
शुष्कं मद्धृदयं तथाहि सरलं निर्मातुमेवात्र माम्।
स्थाने प्रेषितवान्महाशयसुधीः श्रीसार्वभौमो, मनोऽ-
शुद्धं मे त्वमलं करोतु कथनात्सद्भक्तितत्त्वात्मनः'।।१६६८।।

एवं श्रीप्रभुरामनन्दसुहृदोर्मध्ये चलत्येव तत्-
संवादे सति, वैदिकस्तु समये तत्रैव विप्रोऽपरः।
आगत्यात्र निमन्त्रितं स्म कुरुते भिक्षार्थमस्मत्प्रभुं
(भिक्षार्थं चिनुते निमायिसुहृदं, बोध्यो महान् पुण्यवान्)।।१६६९।।

श्रीमान् रायमहाशयोऽपि बुबुधे चास्मिञ्जनानामिय-
त्संमर्दे त्वमुना तथाऽमलनृणा वार्ताविधानं पुनः।
तादृक् चान्तरिकं न शोभन,मतस्त्वागत्य संदर्शनं
कर्ताऽहञ्च पुन'-(र्निमायिसुहृदः सम्मेलनं दुर्लभम्)।।१६७०।।

उक्त्वैवं प्रभुमेष सम्प्रति निजस्थानं तु गन्तुं नृपो
रायोऽयाचत तन्निदेश,मधिकस्नेहेन तूचे प्रभुः।
'विस्मर्ता नहि, चागमिष्यति भवान्नूनं, मिलित्वा महा-
न्मोदोऽभून्मम सौहृदेन भवता (सौहार्दमात्मीयता)।।१६७१।।

आस्यात्ते प्रबलाऽस्ति भूयसी श्रीमत्कृष्णकथाश्रुतिस्पृहा।
आगन्ता न कथं निजातिथिं?' (सत्प्रेमी चिनुते निमायिनम्)।।१६७२।।

रामानन्दनृपो विनम्य च शिरो मन्दं बभाषे 'ध्रुवं
त्वागन्ता, द्रुतमेव पद्मपदयोः कृत्वा प्रियं दर्शनम्।
कर्ता धन्यमहं निजं, ननु यदाऽपारस्तथाऽनुग्रहो
दीनेऽस्मिन्नधमे प्रभोऽस्ति भवतोदारात्मनाऽयं कृतः।।१६७३।।

त्वत्रोपोष्य तदाऽऽत्मना कतिपयं कालं ददात्वेव मेऽ-
पूर्वं सङ्गतिसत्सुखं,ह्यतिशयः पापी त्वियानस्म्यहम्।
यत्त्वत्केवलदर्शनान्नहि ममोद्धारोऽत्र भावी' त्विय-
च्चोक्त्वा रायमहाशयः प्रभुपदोश्चक्रे प्रणामं, तथा।।१६७४।।

तैः सेवकैः सार्धमसौ चचाल
स्वराजधानीं प्रति चा,त्र यातः
महाप्रभुश्चापि तदीयगेहं
भिक्षार्थमेतेन सह द्विजेन।।१६७५।।



# रायरामानन्दद्वारा साध्यतत्त्वप्रकाशः

७५. उदयन्नेवार्पयति निजेऽब्जे सविताऽनुग्रहदृष्टिम्
प्रियतमयोगव्याकुलमनसां दूरेक्षणमात्रादपि
नयनविकासो हृदयविलासो नैसर्गिकपरिणामः।
परमिह सहृदयवैभवशाली स्वीकृतसुहृदनुरागी
स्वानुग्रहणं वैभवफलमभिभावयति स्वोदयतः।।

सन्ध्याया बहु शोभनोऽस्ति समयः, श्रीसूर्यदेवोऽविश-
द्रक्तेऽस्ताचलगह्वरे च सहितः सर्वैर्निजैरंशुभिः।
कुर्वन्तः करमालिनोऽनुसरणं स्वे स्वे कुलाये तथाऽऽ-
विष्टाः सम्प्रति शेरते भगवतो मौनं विहङ्गास्त्वपि।।१६७६।।

उत्काः स्वप्रियवस्तुलब्धिविषये भूत्वा रतेः साधका-
स्ते देव्या निशया च सन्ति सह ते स्वाराधनातत्पराः।
लोकाः सम्प्रति शेरते प्रकृतितः संसारिण,श्चिन्तने
मग्नाः कामनिबन्धिनां विषयिणो (भेदो रुचेः प्राणिनाम्)।।१६७७।।

ज्योतिस्त्वखण्डमधुना ननु संयमी ना
तद्ध्यायति प्रबलजागरणेन साधुः।
रायप्रतीक्षणमपि प्रभुरेष कुर्वन्-
नेकान्ततोऽस्ति (विविधं रतिभावरूपम्)।।१६७८।।

प्रेम्ण्याकर्षणमस्ति कौ बहु कियत्? तत् प्रेमपात्रे तथा-
दूरे सत्यपि तु स्थितेऽत्र, निकटे तञ्चानयत्यात्मनः।
आकृष्याऽऽनयते बहिःस्थितमपि त्वन्तो,ऽन्तरायांस्तथा
मध्ये चाऽऽपतितान् विभज्य तु पथोऽबाधान् करोत्यप्यहो!।।१६७९।।

आसीद्रायमहाशयस्तु वपुषा वासे चलित्वाऽऽगत-
स्तच्चेतः प्रभुपादपद्मशरणे त्वाबद्धमेवाऽवसत्।
कुर्वन् स्माऽस्ति स राजकर्म विमना देहेन यन्त्रोपमो,-
(ऽविद्या कर्म, ततोऽस्य मृत्युवपुषः स्वस्मिन् स्वतश्चालनम्)।।१६८०।।

तद्देहः स्वयमेव चैव पतिते सायें, स्वचेतोऽर्जने
तामाशां प्रति वै चचाल, स तथामानप्रतिष्ठापदम्।

कृत्वाऽचिन्तनमद्य कस्यचिदपि त्वेतेषु, नीत्वा तथै-
कं साधारणसेवकं चलितवान् दैन्येन वासं प्रभोः।।१६८१।।

दूरादेव विलोक्य स प्रभुपदोश्चक्रे प्रणामं, तथा
चोत्थाप्य स्वगलेऽकरोत्प्रभुरपि प्रेम्णा प्रभूतेन तम्।
तूष्णीकौ तदनन्तरं क्षणमुभावेवात्र तौ तस्थतुः
पश्चादल्पतथाक्षणस्य भणति श्रीमन्निमायिप्रभुः।।१६८२।।

'श्रीमन्! रायमहाशयाल्पमपरां श्रीकृष्णतृष्णाकथां
श्रोतुं त्वन्मुखतो लषामि, दिश मामस्यां मनुष्यस्य किम्।
कर्तव्यं भुवि मुख्यमस्ति, भगवद्भक्तः प्रबुद्धो भवां-
स्तन्मां बोधय साध्यसाधनमहत्तत्त्वं' (मनोज्ञो गुरुः)।।१६८३।।

रामानन्दसुधीर्जगाद सरलं भावाद् विनीताद् 'भवान्
भावान् कारयितुं स्फुटान् स्वमनसो मन्माध्यमेनेच्छति।
वार्तैषाऽस्ति तु शोभना, भवति मेऽन्तःप्रेरणा याऽधुना
तामस्मि प्रकटं करोमि पुरतस्ते,ऽनुग्रहादेव ते।।१६८४।।

सम्प्रति पूर्वं किं कथयानि। तद्दिश' (जिज्ञासामनु वादः)।।१६८५।।

'कर्तव्यं मनुजानां यत्कौ, तत्कथनीयम्'
(बद्धः कर्मणि भोगे, कर्तव्यं चिनुतेऽन्यः)।।१६८६।।

'अस्मि बोधे प्रभो!। श्रीहरिर्गीतवान्-।।१६८७।।

७६. सिद्धिः स्वे कर्मण्यभिरतितः।
कर्मणि लोके कर्मत एव स्यात्सिद्धिर्मनुजानाम्
परमिह सम्यक् सिद्धिः स्वे स्वे कर्मण्यभिरतमनसाम्।
लोकशास्त्रयोरनुकूलं यत् सन्मतमिह कर्मेदम्
निजसंस्कारक्षमताबलतस्तेषु कस्यचिद् भजनम्।
स्वीकरणं, तस्मिन्नभिरमणं, स्वे कर्मण्यभिरतता।
जनकादीनामपि संसिद्धिस्तादृक्स्वीकृतकृतितः।।

७७. पुरुषैराराध्योऽपरपुरुषः।
इह नानासौविध्यसमन्वितनिलये निखिलसदस्याः
यद्यनुकूलं वर्तन्ते तन्निलयस्वामी तुष्यति।

विष्णुप्रीत्या निखिलप्रीतिर्यदसौ व्याप्नोत्यखिलम्
तस्याराधनमौचित्याऽवनमपरात्मा यत्तुष्यति।।

तद्वर्णाश्रमधर्मपालनविधावेव प्रदत्तं बलं
शास्त्रेषु त्वधिकं, निमायिसुहृदः स्थाने हरेः स्थानके।
गीतायान्तु तथाऽऽग्रहोऽस्ति विहितो–वर्णाश्रमाचारतः
कर्तुं कर्म, तथात्मकर्मविधितः सिद्धिं नरो विन्दते'।।१६८८।।

तद्वर्णाश्रमधर्मसाम्प्रतवचः श्रुत्वा प्रसन्नोऽधिकं
जातो रायमहाशयस्य मुखतो विद्वान्निमायिप्रभुः।
ऊचे 'रायमहाशयोक्तमधिकं हीदं वचः सुन्दरं'
गौराङ्गो मुदितः स्मयन् स (मतिमान्मार्गानुसारी यतिः)।।१६८६।।

'संसारे ननु सर्वमानवकृते श्रेयस्करं वस्तुत-
स्तद्वर्णाश्रमधर्मपालनमहो! चात्यन्तमेव स्मृतम्।
तद् विक्रुश्य तथोच्चकैश्च निखिला संबोधयत्याः! स्मृतिः
श्रीवर्णाश्रमधर्ममेव (सुपथाऽऽदर्शौ हि वर्णाश्रमौ)।।१६६०।।

जीवो मानवदेहमत्र लभतेऽमुं पापपुण्योभयो-
र्लोके मिश्रणत,स्ततोहि विषयाऽऽभोगेऽस्ति यद्वासना।
बद्धा, तस्य कृते भुवीह विहितो धर्मार्थकामात्मकः
सद्धर्मः पुरुषार्थकत्रययुतो (धर्माद्धि सत्पौरुषम्)।।१६६१।।

स्वेच्छातो यदि मानवोऽत्र विषयाऽऽभोगे प्रवृत्तो भवेत्-
तद्भावी पतित,स्ततो व्यवहितिर्धर्मस्य चावश्यकी।
स्वःसौख्यं ननु धर्मपूर्वककृतेराप्तं नृणां जायते
(ना कल्याणकरो न दुर्गतिमिति (श्रीमद्वचो) याति कौ)।।१६६२।।

अस्थायि तत्तु कथितं सुरसौख्यमस्मात्
क्षीणे पुनः पतति कौ सुकृती स पुण्ये।
तत्तादृशं दिशतु कञ्चन भो! उपायं,
यत्संभवं न पतनन्तु भवेत्कदाचित्'।।१६६३।।

रामानन्दमहाशयः कथयति श्रुत्वा प्रभोरीदृशीं
वार्ता'मस्य तु विद्यते परमसावेव ह्युपायः प्रभो!।

आसक्तिं न धरेत्तु कर्मसु, परं निष्कामभावाद् भवेत्-
कुर्वन् कर्म, सकामतः कृतमिदं कर्तुस्तु दत्ते फलम्।।१६६४।।

कृतं परं श्रीभगवन्मुदे तन्-
नोत्पादयेद्वै किमपि प्रकारम्।
फलं' (हि धान्यं क्वथितं सुभक्त्या
ज्ञानेन नो रोहति भर्जितं वा)।।१६६५।।

'वार्तेयं भवतेरिताऽतिरुचिरा, निष्कामभावात्तु चेत्
सत्यं कर्म भुवि क्रियेत, नयते तत्तत्त्रिलोकीसुखात्।
अत्यूर्ध्वं प्रति, किन्तु केवलमतोऽस्ति त्वात्मशुद्धिः फलं,
मुख्यं तन्नहि कारणं परमहो! गौणन्तु मुक्तौ स्मृतम्।।१६६६।।

ज्ञानं तस्य फलं नो, चेतःशोधनमात्रम्।

७८. योगी चेतःशुद्ध्यै कुरुते कर्म त्यक्त्वा सङ्गम्।
कश्चित्क्षणमपि कर्मणि लोकेऽकर्मा जातु न तिष्ठति
अकर्मणः खलु सिध्येत्कथमिह तनुयात्राऽपि धरायाम्।
चेतोदर्पणमार्जनमनसा तनुचित्तेन्द्रियमतिभिः
कर्मफलाऽऽसक्तिं त्यक्त्वाऽखिलविहितं कुरुते युक्तः।।

अन्यत्किञ्चिदितोऽपि ह्यूर्ध्वं सङ्केतय माम्'।।१६६७।।

'श्रेष्ठं बोधति नो भवान्ननु यदा निष्कामकर्माऽपि, तत्-
सर्वेषामपि कर्मणां भुवि परित्यागं स्वरूपात्पुनः।
कृत्वा चात्र निरन्तरं भगवतः प्रीतात्मना कुर्वता
स्थातव्यं भजनन्तु (भक्तिरुभयं साध्यं तथा साधनम्)।।१६६८।।

सत्यं, कर्म तथा क्रियेत विधिना केनापि, नो जायते
तैस्तापत्रितयस्य मर्त्यवपुषां लोके निवृत्तिर्नृणाम्।
तापैस्तप्तनृणां तु धर्ममखिलं हित्वाऽत्र मुख्यं ततः
कर्तव्यं प्रभुपादपद्मशरणेऽद्धा यानमेव ब्रुवे।।१६६९।।

७९. अस्मिन् गीतोक्तं खलु साक्ष्यम्।
श्रुतिभिः स्मृतिभिः पुराणपुञ्जैर्यदृषिमुनिवदनेभ्यः
निर्गत,मखिलं तत्सञ्चितमितिहासे पञ्चमवेदे।

व्यासभारते रत्नपञ्चकं तस्यात्मा श्रीगीता
योगेश्वरसाक्षात्कृष्णाननकमलकोशनिर्गलिता।
गीतासारः शरणाऽऽपत्तिर्भगवच्चरणकमलयोः
स्वयमन्तेऽर्जुनमदिशत्स्पष्टं, शरणान्यन्नहि मधुरम्'।।

ऊचे 'रायमहाशय!' प्रभु'रहो!' गौरो हसन् 'ज्ञायते,
किञ्चिन्नापि विपश्चितोऽत्र भवतोऽस्पृष्टं तु शास्त्रं, भवान्।
सच्छास्त्राध्ययनं चकार विधिव,त्सर्वोत्तमोऽयं पुन-
र्धर्मो, यः कथितस्तथाहि शरणापत्ति-प्रियाख्यात्मकः।।१७००।।

किन्त्वद्धा भवतापतप्तमनसोऽयं साधकस्यास्ति, योऽ-
त्यन्ताभावमथैव चेच्छति भवे तापस्य कर्तुं, पुनः।
योऽत्रोच्चस्थितिकस्त्वतोऽपि, न तथा तापस्य संसारिणो
यस्यात्रास्ति तु भानमेव, वद तस्मै कोऽप्युपायोऽपरः'।।१७०१।।

रामानन्दसुधीस्तदा तु किमपि स्थानेऽभवच्चिन्तयन्,
पश्चाच्च क्षणकस्य सोऽस्ति कथयन् 'बोधे, प्रभो! संसृतौ-।
स्थित्वाऽस्यां समभावतः, सदसतोर्ध्यानं तथा कुर्वतो-
ऽजस्रं स्वप्रभुभक्तिमेव वसनं नुर्मुख्यकार्यं तदा'।।१७०२।।

'त्वस्तीदं बहु चैव सुन्दरमहो! यस्यास्ति किन्तु स्पृहा
शुद्धानन्दमयी, द्वयोर्ननु कथं स्याच्चिन्तनं वस्तुनोः।
तेना,स्यां भयकारणं परमथ द्वैधीस्थितिस्त्वेव कौ
(स्वानन्दोऽस्य तिरोहितो ननु तथाऽज्ञानान्न, भीतेर्यथा)।।१७०३।।

सतोऽसतस्त्वस्ति वरो विचारः
सारस्यमस्मिन्न तु लक्ष्यते मे।
गृणातु कञ्चित्सरसं ह्युपायं'
(रसाय जीवो भ्रमतीह लोके)।।१७०४।।

रामानन्दमहाशयः कथयते भक्ताग्रगण्यस्ततः
कृत्वा साम्प्रतगर्जनं 'भगवतो भक्तिर्विशुद्धैव नुः।
सर्वश्रेष्ठमथास्ति मुख्यमवनौ कर्तव्यमत्र प्रभो!,
श्रीमद्भागवते स्तुतौ भगवतः स्पष्टं दिदेशाऽब्जजः-।।१७०५।।

८०. अजित! प्रायस्तैर्विजितोऽप्यसि।
ये ज्ञानार्जनयत्नं हित्वा सन्मुखरितमधुवार्तांम्
भगवन्! भवदीयां कुर्वन्तः कर्णे स्थानस्थितयः।
तनुवाक्चेतोभिः प्रणमन्तस्तां जीवन्ति प्रीताः
निःस्पृहकिङ्करविजितप्रभुरिव मनुते तैर्न जितं स्वम्?'।।

रामानन्दसुहृन्मुखादमुमथ श्लोकं निशम्य प्रभु-
स्त्वत्यन्तं मुदितो बभूव, निदिशन्मोदं जगादात्मनः।
'सत्यं, भौममहाशयः स भवतश्चक्रे यथा शंसनं
शास्त्रज्ञानतते,र्मया ननु तथात्रागत्य लब्धो भवान्।।१७०६।।

सर्वोत्तमं भुवि नृणां पुरुषार्थतत्त्वं
भक्तिक्रिया भगवतस्तु हरेरहेतुः।
तत्स्वीकरोमि ननु पक्षमिमं, तु भक्तिः
कार्याऽत्र केन विधिना, च दिशत्वमुं भोः'।।१७०७।।

'बोधे, प्रेमपुरस्तु भक्तिकरणादेवेष्टसिद्धिर्भवे-
त्साध्या, प्रेममयस्तथास्ति भगवां,स्तस्य स्वरूपं पुनः।
प्रेमैवास्ति, रसार्णवोऽस्ति, विधिना केनापि चाविश्य तत्
स्थाने तत्र रसार्णवे त्वतिशयं कार्योऽवगाहो, यतः-।।१७०८।।

८१. सुकृतैः कोटिजन्मनामपि नहि लभ्या तादृङ्मतिरिह।
भुवि संग्रहवृत्तिर्वस्तूनां, प्रतिजीवानां प्रकृतिः
ध्रुवमिह किं? यत्संग्रहणीयं, विरलमतौ तत्स्फुरणा।
अनुपमसरसमधुरसुन्दरतमसच्चित्प्रेमानन्दे
भगवति (कृष्णे) मतिरतिभक्तिभाविता लौल्येनैव प्राप्या।।

'धन्योऽस्तीह भवांस्तु, सत्यमपरं स्पष्टं 'रसौ वै स' तं
लब्ध्वाऽयं रसरूपमेव हृदि चाऽऽनन्दी भवत्यात्मनि।
एकं शेषमथास्ति किन्तु वचनं, ह्येतद्रसास्वादनं
संबन्धेन विधातुमेव सुकरं केनापि केनापि नो।।१७०९।।

संबन्धतस्तस्य रसस्य कस्मा-
दास्वादनं तत्प्रभुणा विधेयम्?।

ममास्ति वाञ्छा महती च बोद्धुं
त्विमं तथाऽतः कृपया ब्रवीतु'-।।१७१०।।

'बोधे' रायमहाशयः कथयतेऽदोऽ'हं' निशम्य 'प्रभो!
संबन्धस्त्वखिलोत्तमो भगवति स्वे दास्यभावस्थितिः।
यस्मा,त्प्रेम न शक्यते तु भवितुं सद्दास्यभावेऽस्थिते
(दास्यत्वेन भवेन तुष्यति मनो य,न्न प्रभुत्वेन तत्)।।१७११।।

गूढं तिष्ठति तत्र तत्र नियतं शान्ते च सख्ये तथा
वात्सल्ये मधुरे रसे प्रकृतितः सद्दास्यभावोऽखिले।
व्यक्तोऽप्यत्र स जायते नियमतश्चात्यन्तपीडाक्षणे
(ह्यस्तित्वस्य कथं प्रतीतिरिह यद्व्यक्तिर्न काले भवेत्)।।१७१२।।

श्रीनन्दस्य तथात्मजे भगवति स्नेहोऽस्ति वात्सल्यकः
सन्देशं मथुराऽऽगतो भगवतो नन्दादिगोपान् यदा।
किन्तु श्रावितवान् दिनं कतिपयं स्थित्वा व्रजे चोद्धवः,
प्रत्यागन्तुमथोद्यतं तमवदन्नन्दोऽधिकं कातरः-।।१७१३।।

८२. उद्धव! मनसो वृत्तिर्नः स्यात्कृष्णपदाम्बुजशरणा।
भवजीवानां नाना वृत्तिर्देहेन्द्रियचित्तानाम्
किन्तु व्रजधरणीगतजीवाः सन्ति विलक्षणभावाः।
अनुरागस्फुटदीपनविषये व्रजसिकता पर्याप्ता,
वयमिह केवलकृष्णप्राणाः "कृष्णदृष्टिरनुरागिणि"।।

पुत्रस्नेहवतस्तथा भगवति स्वो दास्यभावः पितु-
स्तादृक्पुत्रवियोगदुःखकलने प्रावर्धतैव स्वतः।
गोवत्सानपहृत्य चैवमथ स ब्रह्मा स्वयम्भूर्यदा
यात,स्तादृशमेव वत्सनिकरं निर्माय तल्लीलया।।१७१४।।

श्रीकृष्णो धृतवान् व्रजे च भगवान्, वर्षैकपश्चाद्यदा
वत्सांस्तान्मुमुचेऽब्जजो, ननु तदा ज्ञाता बलेन प्रभोः।
लीलाश्री,श्च निजानुजं प्रति तथा तद्दास्यभावोऽभवद्-
व्यक्तो विस्मयकारणाद् भगवतः स्मृत्वा महत्तां जगौ-।।१७१५।।

८३. "अस्ति प्रायस्तत्प्रभुमाया यन्मुह्यति जगदखिलम्।
मोहयति प्रभुमाया बद्धान् विविधाऽद्भुतवैचित्र्या
सुखयति नानाकौतुकभरिता भर्तुर्लीला मुग्धान्।
प्रभुताबुद्धौ माया, लीला भर्तृत्वप्रतिभायाम्
अहो! प्रभावस्तन्मायाया, मोहितमकरोन्मामपि"।।

राधाया भगवत्यहो! ननु तथाऽऽसीत्कान्तभावश्च, सा
श्रीराधा वृषभानुकीर्तिदुहिता स्वाधीनसद्भर्तृका।
रासे किन्तु यदा बभूव भगवान् सद्यस्तथान्तर्हितो,
व्यक्तस्तद्रुदती जगाद करुणं तद्दास्यभावश्च सा-।।१७१६।।

८४. "सन्निधिमादर्शय कृपणायाः।
वात्सल्ये केवलमौचित्यं पित्रोर्ज्येष्ठगुरूणाम्
भावानामिह मधुरावस्थासीमा त्वत्सुखसुखिता।
त्यजति सखा यदि सख्युः सङ्गं, तत्किं तस्य सखित्वम्?
स्वामिन्! रक्षतु मम दास्यत्वं पुरतः स्फुरणात्सद्यः"।।

कुर्वाणा ननु मानमेव च भवेद्रात्रिंदिवं या प्रिये
कामं, त्वीदृशदास्यभाववचनं तस्या मुखाच्छोभते?।
कुर्यात्किन्तु च किं ? निमायिजगति स्नेहस्य दास्यं परं
स्वामी त्वस्ति, ततः प्रभोऽखिलवरं तं दास्यभावं स्तुयाम्'।।१७१७।।

ऊचे तत्र हसन् प्रभुः सहृदय'श्चाम,स्ति तच्छोभनं,
स्वीकुर्वेऽहमिदं, भविष्यति तथा,ऽस्मिन् दास्यभावे परम्।
सङ्कोचो नियतन्तु तिष्ठति मनाग् भूयोऽपि, तिष्ठत्यलं
ध्यानं सेवकमानसे तु सततं तादृङ्निजस्वामिनः-।।१७१८।।

ऐश्वर्यस्य च गौरवस्य महसो मानस्य, तन्निर्भयो
भूत्वाऽऽनन्दरसस्य पानकरणे दासो मनाग् लज्जते।
सम्बन्धं दिशतां हि कञ्चन तथा, यस्मिंस्तु लेशोऽपि नो
सङ्कोचस्य भवे'-(द्धि शत्रुरपरः सङ्कोच एवाऽऽत्मनः)।।१७१९।।

उल्लासेन तथाधिकेन तु समं रायो जगाद 'प्रभो!
सर्वश्रेष्ठमहो! भणामि हि तदाऽहं सख्यभावं परम्।

सख्यप्रेम्णि तु मानगौरवमहःसम्मानवित्तादिषु
त्वेकस्यापि न तिष्ठतीह मननं (सख्यं समत्वात्मता)।।१७२०।।

संरुष्टाः स्म भवन्ति ते भगवतो गोपालबालाः, पुनः
स्वाः स्वा गा परिवृत्य तेन शिशुनाऽऽनिन्युः, स्म चारुह्य ते।
स्कन्धे तस्य परिभ्रमन्ति, निखिलब्रह्माण्डमात्राश्रयात्
तेषां कापि ततस्त्रपा भगवतो नो वासुदेवादभूत्।।१७२१।।

सख्यप्रेम्णि यथार्थस्त्वास्वादोऽत्र रसस्य'।
(भेदे स्याद्रसता किं?, सख्ये नश्यति भेदः)।।१७२२।।

'सख्यप्रेम्णि किमस्ति वाच्यमवनौ, प्रेमैव सख्यं यथा-
र्थे प्रेमास्ति, तु लब्धमत्र भुवने सर्वस्य नो जायते।
सख्यप्रेम, परस्य तत्र भवति प्रेम्णो ह्यपेक्षात्मनो
(भुङ्क्ते भोजयतीह, तिष्ठति तदा मैत्री तयोश्च द्वयोः)।।१७२३।।

अज्ञानाद्यदि च भ्रमो ननु भवे,त्प्रेमी विधत्ते मया
तावत्प्रेम न, यावदस्मि विदधे तेनात्र, तन्न्यूनता।
आगन्ता स्वत एव वाल्पमधिकं मत्प्रेम्णि, किञ्चित्ततः
प्रेम्णः सम्मिलनं तथा दिशतु मां (जिज्ञासनीयं प्रियम्)।।१७२४।।

तिष्ठेन्निरपेक्षं यत्तुल्यरसञ्च।
सर्वासु दशासु' (व्यक्ती रसवृत्तिः)।।१७२५

शीघ्रं तर्हि तु रामानन्दश्चाह 'निमायिन्!।
वात्सल्ये नहि वार्ता चेयं प्रेम्णि तु सत्यम्।।१७२६।।

८५. माता क्वचन न भवति कुमाता।
किं किं पूतमपूतं कर्म न कुरुते भूमौ तनुजः
पूतकारिसन्निभमिह धत्ते साऽपूतकारिणमपि तु।
नारीत्वे नहि सर्वा जननी,जननीत्वे नहि माता,
मातृत्वे न कुमातृयोगता, कुतनुजयोगविपुलता।।

कामं करोतु, न करोतु हि संततिर्वा
प्रेम, स्थिरं परमिदं तु तथैव तस्याम्।

मातुस्तथाहि वसतीह पितु,स्ततस्तु
व्यासो महर्षिभगवान् भगवान् बभाण-।।१७२७।।

८६. भगवत्प्रसादमलभत गोपी।
ब्रह्मक्रीडा संसृतिरचना प्रतिपलमधिकविचित्रा
अस्यां सुभगाकृतियुतसगुणप्रभुलीलाऽपरमधुरा।
नाभिकमलजो ब्रह्मा चात्मा शम्भुर्लेभे नहि यम्
अङ्गाङ्गी श्रीरपि प्रसादं, प्रभोः स भुवि लीलायाम्
दास्यप्रमुखैर्भक्तिवितानैर्भक्तैः स्वाद्यः सुलभम्।
नन्दाङ्गना यशोदा गोपी भागवते दृष्टान्तः।।

श्रेष्ठं सिध्यति तस्माद् वात्सल्यं ननु भावः।
सर्वास्वेव विधासु' (स्नेहस्थायिरसोऽन्त्यः)।।१७२८।।

अत्यन्तां तु मुदं प्रभुः प्रकटयन्नूचे 'रसानां भवान्
राजा, रायमहाशयास्त्यविदिता ते कापि वार्ता नहि।
वात्सल्यस्य रसस्य भूरि भगवांस्तु व्यासदेवोऽकृत
प्रश्लाघां (मुनिसम्मतोऽस्ति दशमो वात्सल्यभावो रसः)।।१७२९।।

पूर्णा निर्भयता प्रतीतिमयते भूयोऽपि नो मे तथा
वात्सल्येऽत्र रसे, लघुत्वगुरुताभावो मनागंशतः।
तिष्ठत्येव तु तत्र, तादृशमितोऽप्यग्रे च भावं भवान्
कञ्चिद् वक्तुमथ क्षमो ननु भवे,त्तं तर्हि मे भाषताम्।।१७३०।।

यत्रात्यन्ताभावोऽस्त्वेषाम्। संकल्पानां' (प्रेम्ण्यस्त्यन्तः)।।१७३१।।

'अग्रेऽतः कथयानि वै किमपरं' रायो जगाद 'प्रभो!
सत्यं, तत्कथनस्य नास्ति विषयो, भावोऽवशिष्टः परम्।
एकश्चैव, तथान्तिमः कथयितुं शक्यः स एवाऽधुना,
माधुर्यातिशयाकरोऽमलहृदां कान्ताख्यभावोऽस्ति सः।।१७३२।।

अत्रैवाखिलभावश्रीसम्बन्धरसानाम्।
गत्वा पूर्णसमाप्तिः' (कान्ताख्योऽन्तिमभावः)।।१७३३।।

श्रुत्वा रायमहाशयस्य मुखतश्चेदं वचः श्रीप्रभु-
र्गाढालिङ्गनमेष तस्य कृतवान् प्रीतौ तथाविह्वलः।

ब्रूते 'रायमहाशय!' प्रकृतितो गौरः स रुद्धस्वरो
(ह्युद्गारस्थितिरद्भुता सुमनसः कापि प्रमातुः सतः)।।१७३४।।

'धन्यश्चास्ति भवान् कुलञ्च भवतो धन्यं, पुनर्वस्तुतो
वक्तुं ते जननी तथैव जननी शक्या, परं सार्थकम्।
शास्त्रीयावगतिर्निमायिभवतो, निर्दिश्य तावन्महत्-
तूद्धारो भवता कृतो मम रहोज्ञानं (रहस्यं हि शम्)।।१७३५।।

कञ्चन भावं प्रांशुमितोऽपि। वेत्सि यदि त्वं ब्रूहि तु तं माम्'।।१७३६।।

अग्रे त्वितोऽपि च महाप्रभुणा स पृष्टो
रायो ददर्श चकितः प्रभुसम्मुखं सन्।
मन्दं जगाद सुमना बहुकालपश्चाद्
'वेद्मि प्रभो! न च किमप्यधिकं त्वितोऽग्रे'।।१७३७।।

ब्रूते 'रायमहाशया'ऽतिमधुरे गौरो निमायिस्वरे
काचिन्नान्तरिता तथास्ति भवतो वार्ता, तु बुद्ध्वा भवान्।
माऽरक्तं वनवासिशुष्कहृदयं संन्यासिनं त्यागिनं
दातुं वाञ्छति वञ्चनां (हि धरते पात्रे रहस्यं कृती)।।१७३८।।

मत्वा भवानिह तथान्तिमसाध्यतत्त्वाऽ-
योग्यं करोति मम साधुमना उपेक्षाम्।
सर्वं तु वेत्ति, दिशतां कृपयाऽद्य कान्ता-
प्रेम्णस्त्वपि प्रियमदोऽस्तु यदत्र किञ्चित्'।।१७३९।।

गृह्णन् प्रभुपादौ रायश्च बभाषे।
(स्वाद्यं ननु वस्तु श्रव्यं कथमस्तु)।।१७४०।।

८७. 'अनया (राधया-)ऽऽराधितो नूनम्।
रासक्रीडामध्ये सहसा लीने प्रियतमकृष्णे
विकला मधुराऽऽलम्बनमार्गणकर्मणि परितो गोप्यः
विचरन्त्यः, पदचिह्नद्वारा निश्चिन्वन्त्यन्योन्यम्।
''गुप्तं काचिद् विलसति सुभगा, यां दयितो गोविन्दः
रहसि स्थाने प्रीतो निन्ये हित्वा नो गुणहीनाः
सत्यं, भगवान् हरिरिह सम्यक् केवलमनयाऽऽलषितः''।

भावानामिह परमो भावः कान्ताख्यस्त्वतिमधुरः
उक्ता गोप्यो यत्राऽऽदर्शाः सत्प्रेमाश्रयभूताः।
ततोऽपि परमः कश्चिद् भावो, गोपीवचनैर्दत्तः-
यत्सङ्केतो 'राधित-' पदतो भागवते केवलमिह
तत्परमोपनिषद् भावानां "श्रीश्रीराधाभावः"।
चक्रे 'राधा'-शब्दोच्चारणमेकमपि न शुकवक्ता
मूर्च्छामयते तच्छ्रुतिमात्रात्परमहंसराट् स्वयमिति।।

स्पष्टं वक्तुमलं प्रभो! प्रभुरितोऽग्रेऽहं न, गोप्यो यतोऽ-
त्यन्तं त्वेव तथायमस्ति विषयः, श्रीव्यासदेवोऽपि सः।
बुद्ध्वा त्वप्रकटं दधार परमं गुह्यं तथेमं कवि-
श्चक्रे लक्षितमल्पमेव बहु तत्सङ्केततः केवलात्।।१७४१।।

अलमथ चाग्रे किमपि न वक्तुम्।
अधिकमहन्तु प्रभुरिति भावी'।।१७४२।।

श्रुत्वैवेयदसौ प्रभुश्च सहसा तूत्थाय तस्थौ पुनः
प्रोचे रायमहाशयस्य विदधद् गाढं तथालिङ्गनम्।
'धन्यो धन्यतमोऽस्ति, सम्प्रति भवान् प्रेम्णस्तु चक्रे परा-
काष्ठामेव (निमायिसौहृदहृदां सीमा न भावस्थितेः)।।१७४३।।

साधूनां भवता त्ववापितमहोऽद्धा साध्यतत्त्वं परि-
प्रान्तं, काममथ क्षमोऽस्ति ननु कः श्रीराधिकाप्रेमकम्।
लोके शंसितुमत्र, चास्ति मधुरं तस्यास्तथैव स्फुटं
श्रेष्ठं प्रेम तु सर्वतो (हि भवति श्रेष्ठं प्रियप्रीतिदम्)।।१७४४।।

निशामयत्वतः परं तयोर्द्वयोस्तु साम्प्रतम्।
विलासपूर्णगौरवं' (प्रियश्रुतिः श्रुतिप्रिया)।।१७४५।।

श्लोकमियच्छ्रुत्वैव पपाठ श्रीयुतरामानन्दकरायः।
कोकिलवत्कण्ठात्कमनीयात्स्वस्य लयेनैवातिशयेन-।।१७४६।।

८८. कथिता हृदयरोगशमयित्री हरिकैशौरप्रकृतिः।
तृणावर्तबकपूतनाशकटकालियदमनकबालः
सच्चिन्मोदः शरणाप्तव्रजरक्षणकर्ता कृष्णः।

बालसखो गुरुनन्दयशोदावत्सलताऽपरपात्रम्
मधुरोपासनमनसां ललितोचितकमनीयाकृतिकः।
अपि सत्त्वादतिशयितं निर्गुणमतिमधुरं तन्मिलनम्
काङ्क्षन्तीनां ब्रजबालानां पूरयति व्रतममनाः।
दक्षिणधीरललितनेतुः स त्वनुकूलव्यवहारम्
दयिताप्रियमाकलयन् कुञ्जे विहरति मधुरकिशोरः।।

अस्ति पराकाष्ठाऽल'मथोचे 'रासविलासस्य त्वियमेव'।
श्लोकमिमं श्रुत्वा प्रभुरेष प्रीतिमवापात्यन्तमिवात्मा।।१७४७।।

आलिङ्गनं रायमहाशयस्य
प्रभुश्चकाराथ तथाहि गाढम्।
प्रेम्णि प्रमत्तौ तदिमौ च भूत्वा
कौ पेततुः (स्वस्ति महात्मतायाम्)।।१७४८।।



# रायरामानन्दे साधनसम्बन्धिप्रश्नः

८६. गौरः सत्प्रेमामृतरसधिः।
सञ्चार्याऽऽत्मभक्तिपीयूषं रामानन्दपयोदे
तद्द्वारा तद्रसवितरणतः स्वयं याति तन्निधिताम्।
सागरजलतो मेघघटयिता लोकवर्षकस्त्वर्कः
स्वयमर्कः स्वप्रेमरसधितो मेघभक्तकृद्गौरः।।

स्यातां द्वौ ननु वातुलौ, दृशि तथा संसारिवस्तु द्वयोः
स्यान्निःसार,मथोभयोऽस्तु पथिकः स्थाने पथः कस्यचित्।
एकस्यैव, पुनर्द्वयोर्ननु तयोः स्याद्वै रहःसङ्गम,-
स्त्वानन्दस्य पुनश्च तस्य कथनं स्यादेव किं?, वस्तुतः।।१७४६।।

आनन्दं तु तमेव संकथयतेऽद्धाऽवर्णनीयं, पुन-
स्तस्यानन्दरसस्य भोगकरणं सर्वस्य कस्यापि कौ।
भाग्ये नो लिखितं तथाऽस्ति, तु कृपा तस्याऽस्तु यस्योपरि
ह्यानन्दस्य स एव चास्य भवितुं स्थानेऽधिकारी क्षमः।।१७५०।।

रामानन्दमुखान्निशम्य परमं तत्साध्यतत्त्वं प्रभुः
प्रोचे 'रायमहाशयाऽत्र भवतोऽसीमाऽनुकम्पावशात्।
सत्प्रेम्णो विदितं तथाहि परमं तत्साध्यतत्त्वं मया,
तस्य स्यादुपलब्धिरत्र विधिना केनाऽधुना, तद्भण।।१७५१।।

ज्ञानं विना जगति साधनकस्य साध्य-
ज्ञानं निरर्थक,मतो महतो यथाऽस्य।
भावस्य सम्प्रति तथाहि भवेदवाप्ति,-
र्भूयश्च तं हि कृपया दिशतामुपायम्'।।१७५२।।

ऊचे रायमहाशयोऽधिकमतो दैन्येन चा'स्ति प्रभो!
प्रेमिन्! सर्वसमर्थको ननु भवान्, संसारिपङ्कस्थितः।
तत्त्वं तादृशसाध्यसाधनगतं किं बोद्धुमेव क्षमो
जीवोऽहं विषयी वरं (भुवि तथातत्त्वस्य बोद्धाऽपरः)।।१७५३।।

भावान् कारयितुं मयैव तु भवान् स्पष्टं निजान् वाञ्छति
स्थाने, तर्हि विरुद्धमत्र भवतः कः कर्तुमेव क्षमः।

वाञ्छाया, हृदये ततो मम भवान् कुर्वंस्तु यां प्रेरणां
भावी, त्वत्र तदेव चास्मि कथयन् (सत्प्रेरणैव ज्ञता)।।१७५४।।

सामान्यं (विदितं प्रभोऽस्ति भवतः) श्रीराधिकाप्रेम नो,
चानन्दानुभवं करोति पुरुषः सांसारिके यः सुखे।
एतस्य श्रवणस्य नापि भुवने स्थानेऽधिकारी स वै,
तद्गोप्यं कथितं त्विदञ्च परमं (गोप्यं रहस्यं परम्)।।१७५५।।

एतत्तु व्रजगोपिकाः सहृदया ज्ञातुं क्षमाः केवलं,
गोपीनामतिरिक्तमन्यमनसो नास्मिन् प्रवेशो रसे।
कस्यापि, त्वभिलाषिणीन्द्रियगतानन्दस्य नो गोपिका
(गाः संपाति, तथाऽस्य वृत्तिरमला, गोपः स, गोपी परा)।।१७५६।।

श्रीमद्राधिकया समं विदधतः कुञ्जेषु केलिं तथा
श्रीकृष्णस्य निमायिनः सुललिता तु प्रेमलीलैव सा।
तासामस्त्यपरप्रिया, निजकृते किञ्चिन्न वाञ्छन्ति ताः
(स्याद्वाञ्छा स्वगता तदा ननु, यदा स्वत्वं भवेदात्मनः)।।१७५७।।

एतासामखिला स्पृहा सुमनसां चेष्टा तथा भावना,
सम्पूर्णा च पुनः क्रियेन्द्रियमनोवाचां तयोर्जायते।
माधुर्यप्रतिमप्रियादयितयोर्हेतोर्विहारस्य वै
(जायन्ते तनुवृत्तयो ननु मुदे देहे प्रकृत्यात्मनोः)।।१७५८।।

तं योऽनिर्वचनीयमिच्छति रसं भोक्तुं, निजा भावना
सर्वा त्यागमयी च तेन सुहृदा निःस्वार्थरूपाऽवनौ।
कर्तव्या विधिनाऽमुनैव, च विना गोपीकभावग्रहं
तन्मोदामृतपानमेव भुवने कर्तुं न कोऽपि क्षमः।।१७५९।।

नो सांसारिकता निमायिमनसां प्रेम्ण्यस्ति शुद्धात्मनां
गोपीनां, ननु वासनाविरहितं शुद्धं तथा निर्मलम्।
आकाङ्क्षारहितं तदस्ति, कथितः कामो न सांसारिकः
कामो दिव्यविलक्षणस्त्ववितथं स प्रेमभावोऽस्ति वै।।१७६०।।

९०. प्रेम श्रीगोपीरामाणामेव ख्यातः कामः।
परिहेयो जागतिकः कामो यद्वशवर्ती लोकः
अविरुद्धो धर्मादिह कामः पुरुषार्थस्तु तृतीयः।

गोपीनां प्रेमैवाऽऽधातुं वाञ्छन्त्युद्धवमुख्याः
भागवता भक्ता व्रजभूमेः, प्रेमादर्शा गोप्यः।।

इच्छेत्कोपि जपेन वाऽत्र तपसा यज्ञेन यागादिना
वेदाभ्यासदिशा भवेयमवनौ पात्रं प्रवेशस्थितेः।
एतस्मिन् रससागरे, हृदि परं तस्यास्त्यसौ तु भ्रमो
(ह्यम्भोधिं जलराशिरेति सरितोऽद्धा माध्यमेन क्षितौ)।।१७६१।।

पीयूषमहाब्धेः पार्श्वं ननु गन्तुम्।
कौ साधनमास्ते भक्तिः परमेव।।१७६२।।

६१. भगवान् व्यासो भणति स्पष्टम्।
देहासक्तः कर्मशक्तितो भुङ्क्ते भौतिकसौख्यम्
आत्मानन्दं साक्षात्कुरुते विद्याबलतो ज्ञानी।
वासुदेवहरिगोपिकातनयसुखदर्शनसौभाग्यम्
अविरलमिह केवलया भक्त्या प्राप्यं तद्गतमनसाम्।।

उक्तमेवोत्तमम्। गोपिकाप्रेम तत्।।१७६३।।

६२. भक्तिर्भोजयति प्रियमर्थम्।
दास्यभावतो भगवत्सेवनमप्रतिमं कर्तव्यम्
गोपसखायः सख्यभावतः सङ्गसेवनाद् धन्याः।
नन्दयशोदातपःपुण्यता वत्सलतात्मा स्फुटिता
धन्या वत्सविलक्षणभावं दम्पत्योर्हृदि जनयति।
असमोर्ध्वानन्दं श्रीकृष्णं सच्चिद्घनमाधुर्यम्
त्वास्वाद्याखिलरसमव्यवहितमभवन् गोप्योऽनन्याः।।

गोपीप्रेमसमानतां परमहो! शक्नोति कर्तुं तु कः,
श्रीमद्रासविलाससङ्गसमये यद्बाहुदण्डाश्रयम्।
जाता धन्यतमा विगृह्य सरला या गोपिकाः, कोऽपि नो
तासां पादरजो विनैव भवितुं प्रेमाधिकारी क्षमः'।।१७६४।।

चक्रे रायमहाशयस्य बहुशो भूरि प्रशंसां प्रभु-
वार्तैवंविधमेव यावदभवद्रात्रिं भवन्ती द्वयोः।

प्रातर्नित्यमुभौ तु चक्रसदृशौ बुद्ध्वा ह्यभूतां पृथग्-
रात्रिं, तौ च पुनर्निमायिहृदयौ रात्रिं तु मत्वा दिनम्-।।१७६५।।

तस्य प्रेमसरोवरस्य निकटेऽभूतां तथैकत्रिता,-
वेवं यावदहो! दिनं कतिपयं जातो भवंश्च द्वयोः।
सत्सङ्गः प्रियसाध्यसाधनगतः प्रीतात्मनोर्निर्णयः
(श्रीमत्प्रेमपरात्मनोर्हि मिलनं सत्सङ्गवस्तुस्थितिः)।।१७६६।।

एकस्मिन् दिवसे प्रभुः कतिपयं त्वत्यन्तगूढं तथाऽ-
पृच्छद्रायमहाशयं सहृदयं प्रश्नं रहस्यात्मकम्।
येषां प्रेरणयोत्तरं भगवतो रायो यथा ह्युद्गतं
चित्तेऽदात्तु तथा निमायिनि (यथातथ्यं निमायिप्रियम्)।।१७६७।।

'सम्पूर्णविद्यासु परान्तु विद्यां
श्रेष्ठां तथा रायमहाशयाऽद्य।
मां ब्रूहि, विद्यैव यतो वरा स्या-
दन्या न काचि'-(त्परमस्ति गूढम्)।।१७६८।।

रायो लज्जितभावतोऽल्पमवदद् 'ब्रूयामहं किं प्रभो!,
शक्नोतीह परा तथैव भवितुं श्रीकृष्णभक्तिं विना।
विद्या का त्वपरा, परिश्रमविधिस्तस्याः कृते त्वर्थवान्,
सर्वाऽन्यास्ति निरर्थकं (सहृदयैः सेव्यस्तथाह्यर्थवान्)।।१७६९।।

६३. परमं "श्रीकृष्णे"ति रसायनमिह मानवरसनायाः।
भोगार्थं जीवानां सृष्टिर्मोक्षार्थं मनुजानाम्
रसनार्थं रसनाया योगो देहे विहितः स्रष्ट्रा।
भावव्यक्तौ रसनायुक्तिं नानार्थं ना कुरुते
प्रियचित्रस्मृतिकृष्णनाममधुरसने कश्चिद्विरलः'।।

'सर्वोत्तमकीर्तिर्वक्तुं भुवि योग्या।
का वाऽस्ति?' (दुरन्ता कीर्तेरभिलाषा)।।१७७०।।

'कृष्णस्य रतितो लोके परिचयः।
कीर्तिर्हि महतीयं त्वेव भुवने'।।१७७१।।

'भद्रं, केव तथाऽऽस्ते सर्वश्रेष्ठसमृद्धिः?।
बोद्धुं सर्वसमृद्धिस्तुच्छा यत्पुरतोऽस्तु'।।१७७२।।

'श्रीमत्कुञ्जविहारिणो नरहरेः श्रीराधिकावल्लभ-
श्रीकृष्णस्य तथास्ति यस्य हृदयेऽविश्रान्तभक्तिः सतः।
सर्वश्रेष्ठमहो! स एव पुरुषः सम्पत्तिशाली, तथा
तत्तुल्यः पुरुषो न कोऽपि भवितुं शक्नोति लोकत्रये'।।१७७३।।

'ब्रूहि ममेदं, किं ननु दुःखम्?। सर्वविशालं बुद्धिमतो नुः'।।१७७४।।

कुर्वन्नश्रुविमोचनं कथयतेऽसौ रुद्धकण्ठा'त्प्रभो!
यस्मिन्!' रायमहाशयः 'प्रियहरेस्तिष्ठेत्स्मृतिर्न क्षणे।
शुद्धान्तर्हृदये, तथाहि विषयाऽऽभोगस्य वार्ता यदा
चित्तेऽत्र प्रतिभासते,ऽखिलमहादुःखं तदेवास्ति नुः।।१७७५।।

एकमतोऽन्यद् दारुणदुःखम्। श्रीप्रभुभक्ताद्वै विरहाप्तिः।।१७७६।।

६४. प्रतिपलमिह चिन्त्यः प्रभुदयितः।
सा हानिस्तद् विपुलं छिद्रं कर्मण्यस्मिँल्लोके
आन्ध्यं जडता मूढत्वञ्च प्राप्तवतो मनुजत्वम्।
वासुदेवमननातिरिक्तमभियाति क्षणमपि कालः
यदि, नमनीयो निखिलाधारस्तन्मतिमद्भिः सततम्'।।

'मुक्तेषु च सर्वश्रेष्ठं मनुते कम्?।
जीवेषु' (मतोऽत्र श्रेष्ठो ननु मुक्तः)।।१७७७।।

'कृष्णप्रेमनिमित्तमेव सकलाश्चेष्टास्तु यस्य प्रभो!,
कृष्णस्यैव सदैव यश्च मधुरश्रीनामकोच्चारणम्।
कुर्वँल्लब्धुमहो! तमेव भवति स्थाने प्रयत्नं तथा,
सन्मुक्तः पुरुषः स एव निखिलश्रेष्ठः' (प्रियात्मोत्तमः)।।१७७८।।

'गानं ननु सर्वश्रेष्ठं मनुते किम्।
गानं?' (ललितः प्रेयान् रज्यति गानात्)।।१७७९।।

६५. 'गानं प्रियतमनामश्लोकः।
गोविन्द! श्रीकृष्ण! मुरारे! नाथ! हरे! नारायण!
वासुदेव! हे! वृन्दावनचर! मुरलीमनोहरवदन!।

वंशीगानविमोहनवैभव! गोचारक! बालकसख!
मम गाने नहि तादृशमोहनसामर्थ्यं प्रियश्रवण!।।

बोधेऽहं मधुराणामेतन्नामपदानाम्।
गानं त्वेव च सर्वश्रेष्ठं' (रज्यति गाता)।।१७८०।।

'कल्याणनिमित्तं जिज्ञासुजनानाम्।
कार्यं भुवि सर्वश्रेष्ठं मनुते किम्?'।।१७८१।।

'श्रीमद्भक्तमहात्मनामिह सतां पादाब्जयो रेणुभिः
पूतैर्मण्डनकक्रियाऽऽत्मशिरसो,ऽजस्रं श्रुतिभ्यां पुनः।
लोके तन्मुखनिःसृतामृतवचःपानं, मुमुक्षावतां
कल्याणस्य तथा निमित्तमपरं बोधे तदेव त्वहम्'।।१७८२।।

'किं वस्तु च सर्वश्रेष्ठं स्मरणीयम्।
सर्वस्मृतिशालिश्रद्धालुजनानाम्?'।।१७८३।।

९६. 'स्मरणं यत्तापत्रयशमनम्।
श्रीकृष्णस्य स्मृतितोऽध्यात्मिकशुद्ध्या मनःप्रसादः
वासुदेवनारायणचिन्तनमधिदेवप्रह्लादः।
हरेर्मुरारेर्गोविन्दस्य ध्यानाद् भौतिकशान्तिः
सकलचराचरनाथमननतः सौहृदगुणशरणाप्तिः।।

अस्ति तथैवेदं स्मरणीयम्। अध्वनि सर्वश्रेष्ठमहोऽस्मिन्'।।१७८४।।

'ध्यानेषु च सर्वश्रेष्ठं मनुते किम्।
ध्यानं?' (स्थितिमेति ध्यानात्परमां ना)।।१७८५।।

'श्रीवृन्दावनविहारिश्रीकृष्णस्य कमनीया।
स्यादेवाऽऽकृतिरजस्रं ध्याने, श्रेष्ठमलमेतत्'।।१७८६।।

'किं सर्वोत्तमवासस्थानं तादृशमस्मिन्?।
सर्वस्वं भुवि हित्वा कुर्याद्यत्र निवासम्'।।१७८७।।

९७. 'उक्तं व्रजरजसो माहात्म्यम्।
'नाम'-प्रीतिः प्रथमावस्था साधुभागवतमनसाम्
'रूपा'ऽऽलोकनकाङ्क्षा तदुपरि 'लीला'-चिन्तनलयता।

‘धामा’ऽऽश्रयणं तुरीयान्तिमा भक्तिक्रमिकोन्नत्याम्
भुवने ‘व्रजरेणूपगूहनं सर्वस्वं’ केषाञ्चित्।।

वृन्दावने वसनमेव तु जीववास-
स्थानं तथान्तिममलं निखिलञ्च हित्वा।
अन्यत्र नैकपदमत्र तथापि हित्वा
वृन्दावनं क्वचन भागवतेन गम्यम्।।१७८८।।

९८. वृन्दा भक्तिवृत्तिपर्यायः।
कुटिलः कर्कशमाश्रयते भुवि सरलो मधुरं धर्मम्
मधुराकर्षणमिह सामान्या किन्तु स्थितिरखिलानाम्।
सरघा केवलमिह माधुर्ये मक्षीका तूभयत्र।
भक्तिवनश्रीवृन्दाविपिने श्रीमान्निवसति नित्यम्
तन्मधुलोभी भागवतो ना ततो याति नहि पदमपि।।

राधामाधवयोस्तु कुर्वता ध्यानं भव्यमथात्र केवलम्।
श्रीवृन्दावनमात्ममन्दिरं न त्याज्यं’ (भजनीयमच्छलम्)।।१७८९।।

९९. वृन्दाविपिनं राधामुरलीधरसंस्थितिकमनीयम्।
इच्छति सिद्धिं सुकृती लोकः, सा राधानुग्रहतः
मुरलीस्वानो हृदयाकर्षी तद्धारी हृन्मोदः।
उभयोः संस्थितिरिह वृन्दायां, तद्वनसंसेवनतः
आत्मनि परमानन्दः, परमा राधा,ऽऽनन्दः कृष्णः।।

श्रव्येषु च सर्वश्रेष्ठं मनुते किम्?।
श्रव्यं’ (श्रवणैव त्वाद्या ननु भक्तिः)।।१७९०।।

१००. ‘श्रवणप्रियमिति कृष्णश्रवणम्।
गोविन्दो गोवृन्दग्राह्यो, हरिर्हृदा हरणीयः
मुररिपुरुरसा धार्यो, नाथः प्राणैरभिलषणीयः।
वचसा नारायणकीर्तन,मधिचिति वासुदेवधरणम्
कृष्णाकर्णनकर्णाभरणं कृतकृत्यस्य सुकृतिनः।।

श्रव्यस्य सर्वस्य तथैष सारो
येन श्रुतोऽयं विधिना यथावत्।
किञ्चिन्न तस्य श्रवणीयमस्मिन्-
लोके पुनस्तिष्ठति शेषमद्धा'।।१७६१।।

उपासनासु कां भवानुपासनां तथोत्तमाम्।
निबोधतेऽत्र?' (सर्वथा शिवं ददात्युपासना)।।१७६२।।

'शक्या परस्य ननु कस्य विधातुमेवाऽ-
त्रोपासना युगलमूर्तिमृते, तु तत्त्वात्।
वृन्दावनान्तचर एव परो ह्युपास्यः,
शक्तेः पृथग् भवितुमेव न युज्यते सः'।।१७६३।।

'भक्तिमुक्त्योस्तु ते। काऽधिकं रोचते?'।।१७६४।।

'कश्चिद् दार्शनिको विचारपरमो मुक्तेः फलं नीरसं
ह्येवात्र त्वभिनन्दयिष्यति, परं मे तु प्रभोऽहर्निशम्।
स्वप्रेयःप्रभुपादपाद्‌मयुगले सर्वाधिकं रोचते
लोटाऽऽलागनमेव (साधुपुरुषः प्रेमक्षुधापीडितः)।।१७६५।।

गत्वाऽमृताम्बुधिमहं भवितुं नहीहे
त्वद्धाऽमृतं, त्वहममुष्य निषद्य पार्श्वे।
बोधेऽत्र तन्मधुरतारसपानमेव
श्रेष्ठं' (रसोऽस्ति भगवद्रस एव सत्यम्)।।१७६६।।

तादृशकप्रश्नोत्तररीत्यैवान्तमिता रात्रिः सुहृदोः सा।
तौ पुनरन्योन्यं पृथगास्तां (नो दिनकालो रात्रिविविक्तः)।।१७६७।।

आसीद्वृद्धिमथोत्तरोत्तरमहो! रायानुरागः प्रभो-
र्गच्छन्नेव पदाब्जयोः, स्फुटमसौ श्रीकृष्णरूपस्य च।
कुर्वन्नस्ति महाप्रभौ त्वनुभवं, रूपं प्रभोः प्राकृतं
तद्गौरं ननु रायनेत्रपुरतश्चान्तर्हितं सर्वथा।।१७६८।।

रायस्तत्र निजेष्टदेवमधुरश्रीराधिकाकृष्णयो
रूपं पश्यति च स्म, पृच्छति ततः स्थाने प्रभुं त्वेकदा।
'कुर्वेऽहन्तु निजेष्टदेवमिलनं श्रीविग्रहे ते प्रभो!
(ह्यादर्शः परमोऽत्र, यत्र निजकप्रेयान् स्फुटं लक्ष्यते)।।१७६९।।

भानं तथैवमधुना भवदस्ति मे यन्-
नारायणो ननु भवांस्तु तथाहि साक्षात्।
लोकान् भ्रमे भुवि निषेक्तुममुं तु वेषं
छद्मं दधौ' (सहृदयो भवतीह गूढम्)।।१८००।।

'मद्देहे भवतोऽपि भावि सुहृदः स्वेष्टस्य नो दर्शनं,
स्थाने रायमहाशयात्र भविता भूयस्तदा कस्य च?।
यावद्दृश्यपदार्थजातनवनौ सर्वं भवद्दर्शने
भाव्यं त्विष्टमयं' हसन् प्रभुरदाद्रायोत्तरं साम्प्रतम्।।१८०१।।

'श्रीमद्भागवतोक्तितो भगवतो भक्तश्च सर्वोत्तमः
सम्पूर्णे कुरुते चराचरजगज्जीवे प्रभोरेव तु।
सम्यग्दर्शनमत्र, नो भगवतो वस्त्वेव किञ्चित्पृथक्-
तद्दृष्टौ (विविधं स एव भगवान् सद्भावतो द्योतते)।।१८०२।।

१०१. पश्यति भागवतोत्तमपुरुषः सर्वमिदं भगवन्तम्।
दृश्यं नानारूपं पश्यति साधारणतः सर्वः
सूक्ष्मं चिन्तयते परमन्यस्तेभ्योऽन्तःस्थिततत्त्वम्।
चेतनतत्त्वस्थितिजिज्ञासा कोटिषु कस्यचन फलति
आत्मनि सर्वं सर्वत्रात्मा तथा निश्चयी विरलः।।

भवांस्तथा भागवतोऽस्ति सर्व-
श्रेष्ठ,स्तनौ मे, भवतस्तु भूयः।
स्वेष्टस्य संदर्शनमुद्विभाति
त्वाश्चर्यवार्ताऽस्ति ततोऽत्र केव'।।१८०३।।

श्रुत्वा तादृशमुत्तरं कथयते रायो निमायिप्रभो-
'मां नो वञ्चयतां प्रभो! ननु भवान्, रूपं यथार्थं निजम्।
मह्यं दर्शयतु स्फुटं, जगति मां बुद्ध्वा तु शूद्राधमं
कुर्यान्न स्वयथार्थरुपमहसः स्वप्रार्थिनं वञ्चितम्'।।१८०४।।

एतद्रायमहाशयश्च कथयन् पादे प्रभोर्मूर्च्छितः
प्रेमावेशगतः पपात, समये तत्रैव देहे प्रभोः।
तस्याऽभून्मिलितं तु दर्शनमहो! श्रीराधिकाकृष्णयोः
(श्रीकृष्णाद्भुतरूपदर्शनमभूत्पार्थप्रपन्नात्मनः)।।१८०५।।

प्रभोस्तनौ रायमहाशयस्तद्
विलोक्य रूपञ्च तथाऽद्भुतं सः।
कृतार्थमात्मानममन्यताथ
स्वभाग्यशंसामकरोद्यथेष्टम्।।१८०६।।

रामानन्दमहाशयस्य कृतवांश्चैतन्यमाप्तस्य च
प्रोचे 'रायमहाशय!' प्रभुरमुं गौरो दृढालिङ्गनम्।
'एते मे दिवसा गता दश सहानन्दैर्भृशं शृण्वतः
श्रीकृष्णस्य कथां तथाहि भवता (तच्छ्रावको भूरिदः)।।१८०७।।

प्राप्तोऽपूर्वरसः कदाचिदपि मे नासीच्च पूर्वं त्वियान्,
ह्यस्य प्रेमरसस्य कर्तुमभवं किञ्चित्त्वदः स्वादनम्।
अत्यन्तं ननु दुर्लभस्य भवतः शक्तः प्रसादादहं
(सत्यं, दुर्लभवस्तुलब्धिरवनौ सत्साधुसंयोगतः)।।१८०८।।

इच्छा सम्प्रति मेऽस्ति, तु द्रुतमदोऽद्धा राजकार्यं भवान्
हित्वा श्रीलनिमायिपावनपुरीमायातु, सङ्गे स्थितौ।
अस्यानन्दरसस्य तत्र सततं पानं तथावामुभौ
कर्तारौ, भविता ममापि भवतः कल्याणकं सङ्गतः'।।१८०९।।

रायो बद्धकरो विनीतहृदयादत्यन्तमेवावद-
'द्धस्ते सर्वमिदं प्रभो! तु भवत,श्चैतज्जगज्जालतः।
उन्मोच्य, स्वपदाब्जयोर्हि शरणं स्थाने प्रदाता यदा,
तर्ह्येव प्रभुसन्निधौ तु वसतेः प्राप्तः सुयोगो भवेत्।।१८१०।।

सामर्थ्यतो मे बहिरस्ति वार्ता,
कृत्वा भवानेव तथानुकम्पाम्।
तथाहि धन्यं भुवि जीवनन्तु
स्थाने प्रदातुं प्रभुरस्ति मह्यम्'।।१८११।।

कामं, सम्प्रति यातु, दक्षिणात्प्राप्तोऽहं पुनरेकवारम्।
मेलिष्यामि, तदैव सङ्गतो मे याता तु पुरीं निमायिनीम्'।।१८१२।।

कृत्वा शिरोधार्यमथ प्रभोश्चाऽऽ-
देशं निजस्थानमगात्स रायः।
अपि प्रभुश्चाग्रिमतीर्थयात्रा-
विचारमेषोऽकृत तु प्रभाते ।।१८१३।।



# दक्षिणस्य तीर्थानां भ्रमणम्

१०२. कुरुते तीर्थं पुनरिह तीर्थम्।
यस्मिन् स्थाने निवसति तिष्ठति यल्लोकयते ध्यायति
साधुमहात्मा,ऽतीर्थं तदपि ध्रुवमिह भवति सुतीर्थम्।
पूर्वप्रथितं तीर्थं कालात्पातकिनां संसर्गात्
आविल,मन्तःस्फुटगोविन्दः कुरुते विमलं भ्राम्यन्।।

कौ तीर्थभ्रमणं महात्मसुहृदां लोकस्य संसारिणः
कल्याणस्य निमित्तमेव भवति, स्वं नास्ति तेषां तथा।
कर्तव्यं किमपीह, किन्तु गृहिणो भूयोऽपि ते पावनान्
कर्तुं तादृशलोकशिक्षणकृते भक्तान् कृतार्थान् पुनः।।१८१४।।

निष्पापानि विधातुमत्र भुवने तीर्थानि, पूतां धरां
कर्तुं, तीर्थभरे निमायिमतयो दृष्टा भ्रमन्तः सदा।
एवाऽतः स्वपवित्रताऽवनमहो! कुर्वन्ति तीर्थानि कौ
यावत्सम्प्रति पापतापशमने शक्तानि संसारिणाम्।।१८१५।।

प्रातोऽग्रे चलितो महाप्रभुरतो गोदावरीस्नानत-
स्तद्विद्यानगरा,त्स तेषु विदधत्स्नानं तथा दर्शनम्।
श्रीगङ्गाऽमलगौतमी-त्रिपठके पानानृसिंहे त्वहो-
नृसिंहे त्रिपति-त्रिमल्लयुगलेऽद्धा वृद्धकाश्यां तथा।।१८१६।।

स्कन्धक्षेत्रक-मल्लिकार्जुनयुते हस्तित्रिकाले पुनः
काञ्च्योः सिद्धवटे च विष्णुशिवयोः कावेरिकातीरके।
बौद्धस्थान-शियालभैरवयुते तद्वृद्धकोले तथाऽ-
न्ते तीर्थेषु च कुम्भकर्णकपले, कुर्वन् कृतार्थं पुनः।।१८१७।।

प्राप्तोऽयं निजदर्शनैर्जनभरं श्रीरङ्गपर्यन्तकं,
कुर्वञ्छ्रीहरिनामविस्तरणकं सर्वत्र मार्गे प्रभुः।
गच्छन्नस्ति, निमायिनोऽस्य भगवद्भक्ताश्च लक्षाधिका
जाता दर्शनमात्रतस्तु मनुजा (लोकः प्रभावान्महान्)।।१८१८।।

१०३. मार्गे प्रियतमसम्बोधनमिह गायन् गच्छति गौरः।
अनुकरणीयाखिलचरित! प्रिय! गम्भीराऽऽकृतिसुन्दर!
मर्यादापुरुषोत्तम! राम! श्रीराघव! मां रक्षतु।
प्रायःकेवलकीर्तनचरित! ध्येयोदारानुग्रह!
हे लीलापुरुषोत्तम! कृष्ण! श्रीकेशव! मामवतात्।।

तत्संबोधनमुद्गतं प्रभुमुखाच्छ्रुत्वैव नार्यो नराः
संतस्थुः परिवृत्य चैतमभितः, स्थित्वा तथाऽयं पुनः।
तन्मध्ये हि ननर्त, तद्विधमसौ संकीर्तनैश्चात्मनो
नृत्यैर्हृत्प्रियदर्शनैरनुपमं तन्वञ्जनानां सुखम्।।१८१९।।

आषाढ़े प्रविवेश मासि सुमनाः श्रीरङ्गजीक्षेत्रके,
तत्रैकस्य च वैष्णवद्विजपतेरत्यन्तभाग्यात्मनः।
तु श्रीवेङ्कटभट्टनामगृहिणः स्थानेऽनुरोधात्प्रभु-
श्चातुर्मास्यमसौ व्यतीतमकरो(त्साधुर्हि साधोः प्रभा)।।१८२०।।

पुत्रो वेङ्कटभट्टकद्विजपतेर्गोपालभट्टः प्रभो-
र्माधुर्येण निमायिनः सुमनसो रूपस्य मुग्धोऽकरोत्।
अस्मै त्वात्मसमर्पण,ञ्च निखिलाः श्रीकृष्णभक्तास्तथा
जाता वेङ्कटगेहिनो गृहजनाः (सङ्गो यतः सङ्गमः)।।१८२१।।

आनन्दो निखिलानामत्यन्तं प्रभुसङ्गात्।
जातो वेङ्कटगेहे (गेही सिध्यति कश्चित्)।।१८२२।।

सन्ध्यायां भ्रमितुं वने प्रतिदिनं याति स्म गौरप्रभु-
र्यातोऽसौ च तथैकदोपवनके त्वेकत्र, तत्र त्वितः।
पश्यत्येष तथाधिकेन विदधत्प्रेम्णाऽऽसनस्थो द्विजो
गीतापाठमथास्ति गद्गदगलश्चैको (हि तुष्टिः सतः)।।१८२३।।

श्लोकानां कुरुते स्म यद्यपि तथा सोऽशुद्धमुच्चारणं,
ध्याने तादृशतन्मयोऽभवदहो! पाठावधौ किन्तु, यत्।
नासीद्बोधनमेव बाह्यजगतस्तस्याधुना, सोऽब्रवी-
च्छ्लोकान् भावपरायणः, पुलकितः सम्पूर्णदेहो भवन्-।।१८२४।।

आसीच्चास्य सरज्जलं नयनयोः शृण्वन् प्रभुः सन् स्थितः
पाठं तस्य बभूव चातिसमयं, पाठं समाप्योत्थितः।

विप्रो यर्हि, तदा महाप्रभुरतिस्नेहेन तं पृष्टवान्
(सन्मार्गे भ्रमतो भवे स्वयमहो! सज्जायते सम्मुखे)।।१८२५।।

'किं भ्रातस्तव चेदृशस्तु मिलते पाठे तथाऽस्मिन् किमा-
नन्दो?, यद्वशतस्तवाऽद्भुतदशाऽद्धा तादृशी जायते?।
प्रेम्णोऽत्र त्वियदुन्नतस्य विकृतिः कौ भद्रभद्रात्मनां
भक्तानां प्रकटं तनौ भवति न (प्रेम्णो विकारोऽपरः)।।१८२६।।

स्वप्रसन्नतानिमित्तमत्र सत्यसत्यमद्य।
ब्रूहि मां' (निमायिसाधुगोप्यमस्ति वस्तु नेह)।।१८२७।।

तर्ह्युक्तं पुरुषेण तेन 'भगवन्! हे! बुद्धिहीने त्वहं
जातो विप्रकुले तथाह्यपठितेऽद्धा विप्रबन्धुस्तथा।
मूर्खश्चास्मि निरक्षरो,ऽमतिमतो बोधस्ततो विद्यते
शुद्धाशुद्धगतो न किञ्चिदपि मे (कौ बोधवान् बुद्धिमान्)।।१८२८।।

आदिष्टं गुरुणा मम 'प्रतिदिनं पाठं कुरु त्वं हरे-
र्गीताया' भगवंस्तथाहि किमहं, विद्यान्तु गीतार्थकम्।
कुर्वे ध्यानमथाऽस्य केवलमहं पाठावधौ—स्यन्दन-
स्तिष्ठन्नस्ति युतस्तथातिरुचिरः श्वेतैश्चतुर्भिर्हयैः।।१८२९।।

एतस्यास्ति विराजितश्च हनुमानुच्चे ध्वजे विक्रमी,
शस्त्रास्त्रैर्ननु सज्जितोऽर्जुनरथी च स्यन्दनेऽपावृते।
किञ्चिन्म्लानमुखः स्थितोऽस्ति निहिताऽधश्चापगाण्डीवकः
स्थाने श्यामलहेमवस्त्रभगवांस्तत्सारथेरच्युतः-।।१८३०।।

ईषन्मन्दमधुस्मितेन सहितो गीतोपदेशं स्थितः
कुर्वन्नस्ति तथार्जुनस्य ललितः सख्युः प्रपन्नात्मनः।
माधुर्यस्य निमायिनो भगवतोऽमुष्यैव रूपस्य तत्-
कुर्वन् पानमहं स्खलामि निजकं (नान्यत्प्रमातुः स्मृतौ)।।१८३१।।

सा लोकत्रयपावनी भगवतो मूर्तिस्तु मन्नेत्रयो-
र्नृत्यन्ती पुरतः सती भवति वै, मत्तो यथा दर्शनैः।
तस्याश्चैव भवामि, पूर्वमहसत्पाठं निशम्याधिकं
लोको मे, बहवस्तु कुत्सितमपि प्रोचुः, परं साम्प्रतम्-।।१८३२।।

ब्रूते वा नहि, मे न चास्य वचसो बोधस्तु, चक्रे परं
चिन्तां नो हसनस्य कस्यचिदहं, तेनैव भावेन तु।
कुर्वन्नेव तथाहि पाठमभवं, पाठेऽधुनाऽस्मिंश्च मे
ह्यायानस्ति रसस्त्वियान्, भवमहोऽद्धा विस्मरामीव यत्।।१८३३।।

अद्यैवात्र वचोद्वयञ्च मधुरं ह्यागत्य चक्रे भवान्
सार्धं ब्राह्मणबन्धुना ननु मया, लोकोऽन्यथा मे सदा।
कुर्वंस्तिष्ठति हास्यमेव, तु भवान्नारायणो (ज्ञायते)
साक्षादस्ति, समागतोऽत्र मम यः पाठस्य दातुं फलम्।।१८३४।।

कामं वाऽस्तु भवान्न कश्चिदपि किं? कोप्यस्ति लोकोत्तरो
दिव्यः सत्पुरुषस्तु, मेऽस्ति भवतः पादाब्जयोः कोटिशः।
स्थाने तु प्रणतिः' पपात पदयोरुक्त्वा तथा स प्रभो-
(र्लोको लोकविलक्षणो न सुलभ,स्तस्य प्रपन्नोऽपरः)।।१८३५।।

स्नेहेनातिशयेन लागयति च स्मोत्थाप्य तं वक्षसा
ब्रूते 'विप्रवर!' स्वरेण महता मिष्टेन तु श्रीप्रभुः।
'धन्योऽसि त्वमहो! त्वमेव तु परं तत्त्वं यथार्थे हरे-
र्गीतायाश्च निमायिनो बुबुधिषे (कश्चिद्यथार्थाग्रही)।।१८३६।।

शुद्धान्नो मुदितोऽथवा हि भगवान् पाठादशुद्धात्तथाऽ-
सन्तुष्टो भवतीह, सोऽस्ति तु परं भावक्षुधापीडितः।
भावग्राहिविभोस्तथा भगवतः कस्यापि नो विद्यते
वार्ता ह्यन्तरिता घटस्य (भगवान् साक्षी हृदां केवलः)।।१८३७।।

पाठं लक्षगुणं करोतु पुरुषः शुद्धं, च भावस्तथाऽ-
शुद्धो ह्यस्ति, फलन्तु तस्य भवितैवाशुद्धमस्यात्मनः।
भावश्चेदमलोऽस्ति, चाक्षरमहोऽशुद्धं भवेदास्यतः।
कामं तूच्चरितं, फलन्तु भविताऽद्धा शुद्धमेवास्य, तत्।।१८३८।।

अत्यावश्यकताऽस्ति भावजगतः सिद्धान्ततः सर्वतः
शुद्धेरेव, तथास्तु पाठकरणं भावे च शुद्धे सति।
शुद्धं, तर्हि तु चातिशोभनमहो! स्वर्णे सुगन्धागमो,
हानिः कापि न विद्यतेऽमलहृदः पाठे त्वशुद्धेऽपि च-।।१८३९।।

१०४ अस्ति प्रथितं मधुरं सूक्तम्।
'नमो विष्णवे' वैयाकरणो, रामप्रभृतिसमानम्
'विष्णाय नम' इति ब्रूयादन्यः पदसरणेरनभिज्ञः।
वैयाकरणाऽवैयाकरणोभयपरमात्मा विष्णुः
उभयोर्नमनात्तुष्यति सदृशं, भावग्राही जनिदः'।।

विप्रस्य तस्याधिकमेव जाता
प्रसन्नता ताञ्च निशम्य वार्ताम्।
प्रभोर्मुखा,त्तेन तदैव काले
समर्पितः श्रीप्रभवे निजात्मा।।१८४०।।

स श्रीरङ्गक्षेत्रे गौरो यावत्तस्थौ।
तेनैवाऽस्थात्सार्धं तावत्सोऽसौ विप्रः।।१८४१।।



# धनितीर्थरामाय प्रेमदानं तथा वेश्ययोरुद्धारः

१०५. चेतसि सति चन्द्रचूडचरणध्याने प्रभवेत्कामः?
कोदण्डे करकदर्थनं किं कन्दर्प! त्वं कुरुषे?
कोकिल! कोमलकलरवकूजनमिह भविता ते व्यर्थम्।
मुग्धे! मुग्धस्निग्धविदग्धैर्मधुरैरलं कटाक्षैः,
सच्चिन्मधुरिमकेवलभवपदचिन्तनमर्जति चेतसि।।

पीतो येन भवे निमायिभगवत्प्रेमासव,स्तन्मदे
सर्वं यस्य कृते च विस्मृतमिदं वस्त्वस्ति सांसारिकम्।
एतत्तस्य पुरो भवस्य रुचिरं सौख्यप्रदं भासुरं
सर्वं वस्तु तु तुच्छमस्ति (रसधेरन्यत्र कीदृग्रसः)।।१८४२।।

वस्तूनि प्रति तानि स क्षिपति नो दृष्टिं त्वपि, ह्यात्मनः
सर्वस्वार्पणहेतु चात्र विषयी संतिष्ठते मानवः।
येषां संततमुद्यतो भुवि कृते,ऽद्धा पूजनीयः प्रभुः
कामारेरपि तिष्ठतीह हृदये यस्मिन्नसाधारणे।।१८४३।।

क्व स्थानं हृदयेऽत्र विष्णुवसतौ कामाय?, किमेकत्र कौ
शक्तौ स्थातुमहो! रविश्च रजनी, धृत्वा भवान् दीपकम्।
अन्विष्यंस्तिमिरं चलेद्यदि तदा कुत्रापि लब्धं भवे-
त्तच्चिह्नं तत एव चास्ति कथितं सच्चिन्महश्चिन्तकैः-।।१८४४।।

१०६. भेदो भेदहेतुरयमथवा—
जलाहरणकलेवराच्छादनविरुद्धधर्माध्यासात्
व्याख्यातो घटपटयोर्भेदः शास्त्रकारविद्वद्भिः।
तत्कारणमृत्सूत्रपरस्परभेदादपि तौ भिन्नौ
रामः कामस्तद्वद् भिन्नौ विरुद्धधर्माश्रयिणौ।
आनन्दश्चिन्मूर्ती रामो विकिरति सत्यानन्दम्
असदात्मा कामः संतनुते त्वापातरसं विषयम्।
कामावासे रामोऽस्पष्टो, रामनिवासे हृदये
कामासत्ता रजनीरविवत्, तत्सत्ताऽखिलसत्ता।।

यः शैत्येन तथा गतोऽस्तु जडतां, तत्सम्मुखे ह्यापतेत्-
तद्वाञ्छाविपरीतमप्यनलको जाज्वल्यमानस्तदा।
उद्योगे त्वकृतेऽपि तस्य जडता नश्ये,त्पतेत्कर्करं
पाषाणोऽस्थि च यत्तु वस्तु, लवणं तद्वै भवेत्साम्बरे।।१८४५।।

संबन्धं कुरु काममत्र भुवने प्रेम्णा तथा प्रेमिणा
ईर्ष्याद्वेषदिशाऽथवा, तु भवतः श्रेयो ध्रुवं भावि कौ।
अज्ञानादपि पारसेन मणिना लौहं पुनः स्पर्शयेत्-
सन्देहो नहि तस्य हेमभवने (स्पर्शो ह्यमोघः सतः)।।१८४६।।

कुर्वन् सुभ्रमणं यदा प्रभुरयं सर्वेषु तीर्थेषु तत्-
पुण्येषु क्रमशश्च दक्षिणभुवः श्रीरङ्गमायानभूत्।
मार्गेऽस्थात्सुमनास्तदाऽक्षयवटे तीर्थे सुनाम्नि स्थले,
निर्वाहो भवति स्म चाध्वनि सतोऽद्धा भिक्षयैव प्रभोः।।१८४७।।

भिक्षा क्वापि दिने बभूव मिलिता, न क्वापि चापि प्रभोः,
पक्त्वा भोजयति स्म सम्प्रति स भिक्षां कृष्णदासः प्रभुम्।
भिक्षायाः पुनरेकदा क्वचन नो संयोग एवाऽलगत्,
तीर्थे लङ्घनकं त्वपीह विहितं (तीर्थं यतः क्षुन्मृतिः)।।१८४८।।

तज्जग्राह महाप्रभुर्दिने तस्मिन् किञ्चिदपि स्थलेऽत्र नो।
एकस्मिन्नभवत्स निर्जने कुर्वन् कीर्तनमीशसन्निधौ।।१८४९।।

१०७. प्रियतमसंस्मृतिरसनाऽऽसक्तिं यच्छत्वीशाऽऽसत्तिः।
भवति यतस्तिष्ठति लयमतति स्थानेऽस्यासौ पितृवत्
श्रेयोध्याने सतताऽऽसक्तो, भवनाम्ना तत्ख्यातः।
हे भवशिवशङ्कर! करुणालय! मधुरोपासनमनसाम्
मधुरतमश्रीकृष्णानुग्रहलब्धिकृपाकणमस्यतु।।

एवं स्वप्रियकृष्णसंस्मृतिविधौ मग्नः शिवं प्रार्थयन्-
नस्ति श्रीप्रभुगौरसाधुरधुना, मार्गश्रमात्तन्मुखे।
किञ्चिच्छ्रान्तिजलक्षणं स्म भवति स्पष्टं प्रतीतं, परं
तेजो निःसरति स्म चैकमतुलं सर्वाङ्गतस्तस्य तु।।१८५०।।

प्रेमानन्दगतो बभूव निरतः श्रीनामसंकीर्तने
स ह्युच्चस्वरत,स्तदैव सहसाऽऽप्तस्तीर्थरामाऽभिधः।

तत्रैको धनिको महानतिशयो, गर्वो धनस्यात्मन-
स्तस्यासी,न्ननु यौवनं स्म कुरुते कर्तव्यशून्यञ्च तम्।।१८५१।।

तारुण्यस्य मदे तिलाञ्जलिमसौ प्रादात्स्वधर्माय तद्-
ध्येयं खादनपानमत्र रमणं लोके चकारात्मनः।
एतत्त्वेव च जीवनस्य रुचिरस्वादिष्टभोज्याशनैः
कालक्षेपणकं सुखञ्च चरमं हृद्याङ्गनाभिः समम्।।१८५२।।

तस्याऽऽसीद् बहु सुन्दरं धनवतः सङ्गे च वेश्याद्वयं,
नाम्नाऽऽसीत्प्रथमा तयोर्गणिकयोः सत्या च लक्ष्मीः परा।
तद्हासं परिहासमेष विदधत्सार्धञ्च ताभ्यां धनी
प्राप्तोऽमुष्य शिवालयस्य सविधे (देवासुरेशः शिवः)।।१८५३।।

तत्र स्वप्रभया दिशो वितिमिराः कुर्वन्तमेतं तु स
श्रीचैतन्यमलोकयत्सहृदयं प्रेमावतारप्रभुम्।
आसीदस्य निमायिनस्तु वपुषो वर्णः सुवर्णोपमः
(साधुः सौम्यमना यतिः प्रियरतिस्तन्वापि कश्चित्प्रियः)।।१८५४।।

आसीत्पद्मसमप्रफुल्लवदने संन्यासिसाधोर्हठा-
च्चेतःकर्षिबृहत्सुनेत्रयुगलं,बोधे न तस्याऽऽगतम्।
एतावद्वररूपराशिसहितो देहाऽऽस्तृतैकाम्बर-
स्त्वेकाकी पुरुषोऽयमत्र पतितोऽरण्ये कथं विद्यते।।१८५५।।

दूरीकर्तुमथासौ सन्देहं निजमूचे।
मन्दं 'कोऽस्ति?' (विविक्तस्थायी साधुनिमायी)।।१८५६।।

आसीन्मग्नमनाः परं प्रभुरयं संकीर्तनानन्दके,
बोधः कस्यचनाऽस्य किं?, स विदधत्संकीर्तनं पूर्ववत्।
उच्चैरस्ति, ततोऽपि तस्य ववृधे चौत्सुक्यमुच्चैर्मना-
गुक्तं सम्प्रति तेन 'कोऽस्ति च भवान्? कस्माद्रहोऽत्र स्थितः?'।।१८५७।।

चैतन्योऽद्य कृपामयो ननु ददौ 'भ्रात'स्तदीयोत्तरं
'संन्यासी त्वहमस्मि सम्प्रति गृहत्यागी, तथा निर्गतः।
गेहात्स्वप्रियमार्गणे, मम रहस्त्वेवाश्रयोऽस्ति क्षितौ,
बन्धुर्मे च विरक्तिरेव, नियतिः संकीर्तनं केवलम्।।१८५८।।

तस्मादत्र रहोऽहं कुर्वे स्वप्रियनाम्नाम्।
गानं' स त्वियदुक्त्वा कुर्वन् कीर्तनमस्ति।।१८५९।।

लब्ध्वेदं भवितव्यमत्र सुहृदोऽद्धा तीर्थरामेण तत्-
सन्तुष्टेन तथोत्तरं, प्रभुमथ त्यक्त्वा सवेश्येन च।
आसीत्तेन निमायिनं यतिममुं गन्तव्यमन्यत्र, तु
ह्युद्धारः प्रभुतस्तु तस्य यतितो भावी तथासीत्परम्।।१८६०।।

उत्पन्नो ह्यभवत्तदीयमनसि त्वीर्ष्याङ्कुरश्चिन्तयन्
सोऽभू'देष तथाऽद्भुतोऽस्ति पुरुषः कश्चिद्, विधाता ददौ।
अस्मै सुन्दरतां, तथा तरुणता चोत्तिष्ठमाना, पुनः
कस्याप्युच्चकुलस्य चास्ति जनितो (ह्याद्यप्रमा त्वाकृतिः)।।१८६१।।

वैराग्यस्य तथापि चात्र कुरुते त्वेवं वचो, ज्ञायते-
सत्याश्रीसदृशी न कापि ललना लावण्यरूपान्विता।
एतस्मै मिलिते,दृशी त्वनुपमा यद्येकवारन्त्वपि
स्थानेऽनेन च सुन्दरी ननु भवेद्दृष्टा, तदा निश्चितम्।।१८६२।।

संन्यासं वैरागयम्। सर्वं विस्मर्ताऽसौ'।।१८६३।।

तच्चिन्तयन् कथयते निजसङ्गिसख्यौ
'संसारसौख्यमधुना नहि यावदेषः।
कावन्वभू,दथ ततः कुरुते तथैवं
वेदान्तिविज्ञविबुधोपमवृद्धवार्ताम्'।।१८६४।।

अब्रूतां तरसा ह्युभे युगपदेवा'ऽऽर्यात्र कस्याभवद्-
वार्तां संविदध,च्चलत्वपि, तथाऽमूर्व्यक्तयः सन्ति हि।
संसारे ननु कामदेवदमिता, यस्मिन्निनिन्दुस्त्वमूः
स्थाने जन्मनि च क्षणे च ललनारूपं तु तत्रैव सः ।।१८६५।।

कामश्चाकृत देवो द्वार-द्वारनिबद्धान्।
दत्वा खर्परमेतान् हस्ते भिक्षुकरूपान्'।।१८६६।।

'नही,दृशी नास्ति परन्तु वार्ता
ह्याकर्षणं चास्य मुखे विभाति।
प्रतीयते, कोऽपि तथाहि साधु-
वैराग्यवाँ'-(ल्लक्ष्म मुखे विरक्तेः)।।१८६७।।

कुर्वाणा प्रतिवादमत्र वचसस्तस्याधुना भाषते
लक्ष्मी'राम्, मिलनं विना तु निखिलस्त्यागी विरागी पुनः।
लब्धं खादितुमत्र नो तु कथितं- ह्येकादशी मे व्रतं
(भावे हृष्यति सर्व एव भुवने तोषादभावे यतिः)।।१८६८।।

१०८. पुरुषः संन्यासं क्वाऽऽश्रयते।
देहाऽहंता ममतां जनयति, सा पत्नीगृहसंपदि
पत्नी क्षेत्रं स्वात्मोत्पत्ते,गृहसम्पत्सुखहेतुः।
परं, मृतायां पत्न्यां दैवान्नष्टायां सम्पत्तौ
मुण्डितशीर्षो भ्राम्यति तरुणः काषायाम्बरवेषः।।

पार्श्वेऽमुष्य पतेन्ममोपमा काचित्तर्हि कथं हि तिष्ठति?।
त्यागी सन्नवलोकयामि कौ' (स्त्रीरत्ने पुरुषः परीक्ष्यते)।।१८६९।।

उत्तेजनां ननु तयोरुभयोर्ददानः
'पश्यानि तेऽत्र वचनं' स जगाद तीर्थः।
'बध्नासि चेन्निजवशेऽमुमहो! तदा यद्-
दास्यामि काङ्क्षसि तदेव पुरस्कृतौ वाम्'।।१८७०।।

आसीदेव तयोर्द्वयोः स्वगतयोस्तद्रूपलावण्ययो-
गर्व,श्चोद्धतसिंहनीसममुभे संचेलतां ते प्रति।
श्रीचैतन्यमहाप्रभुं, तु सविधेऽसौ तीर्थरामस्तयोः
पश्यन्नस्ति निलीय सर्वविषयं (रागः परीक्ष्यो यतेः)।।१८७१।।

अस्त्यद्धा करवर्तकेन शयितः श्रीकृष्णसंकीर्तनं
कुर्वञ्छ्रीलमहाप्रभुः, परमथाऽऽस्तां कृष्णदासो मनाक्।
गोविन्दश्च तथान्तरे, तु गणिके गत्वा निषण्णेऽत्र ते,
चेष्टेते निजहावभावविधिभिर्भङ्क्तुं त्वनन्यस्थितिम्।।१८७२।।

चैतन्यस्य, निमायिनोऽस्ति न परं बोधोऽपि, कोऽत्राऽऽगतो,
मत्तोऽस्ति स्म मदे निजे स, जगतः संज्ञा न तस्याधुना।
कस्यापि, स्थितयोस्तयोर्ननु यदा तत्र क्षणोऽस्तो महान्,
संहृत्याखिलसाहसं प्रभुयतिं ब्रूतेऽत्र लक्ष्मीस्तदा।।१८७३।।

'साधुकबाबाः! किञ्चिदहं त्वाम्। प्रष्टुमिहेहे' (साधुरिहाऽऽप्तः)।।१८७४।।

चैतन्यः पतितात्मपावनमनाश्चैतत्कृते प्रस्तुत-
स्त्वासीदेव तथास्थितः, स तरसा चोत्थाय तत्राऽऽसितः।
दृष्टिञ्चाथ विकारघातिकरुणायुक्तां ददानस्तयोः
प्रेम्णाऽत्यन्तमधुस्वरेण च जगौ (कारुण्यमूर्तिर्यतिः)।।१८७५।।

'सन्तानस्य च दीनहीनजगतो मातः! किमाज्ञाऽस्य हे!,
कुर्यां पालनमस्मि सम्प्रति तथाऽऽदेशस्य कस्यात्र ते'।
दृष्टौ चास्य निमायिनः सुमनसः शब्देष्वमीषु प्रभो-
रासीत्किं कुहकं (न वेद्मि) चकिते स्थाने स्थिते ते ह्युभे।।१८७६।।

रक्तं तु च्छ्रयतु नो तनौ, ननु तयोर्वाणी च रुद्धा तथा
धैर्यं चापसृतं, तदीयहृदये ज्वालामसूताऽपराम्।
पश्चात्तापहुताशनो, द्रुतमुभे चोत्थाय तस्मात्स्थिते
त्वात्मग्लानिनिपीडिते (स्वहृदयग्लानिः परा शोधिका)।।१८७७।।

शृण्वन्नस्ति वचांसि तानि सुहृदोऽद्धा तीर्थरामः, श्रुते-
रासीद्धैर्यममुष्य खण्डितमहो! संकीर्तनस्य प्रभोः।
शेषं सम्प्रति धैर्यमस्य घटनैषाऽसम्भवाऽनाशयद्
(धैर्यं तिष्ठति वर्धते ह्यवितथं साधोरसाधोरसत्?)।।१८७८।।

'सुन्दर्यौ परमेऽर्थयेदिह तथा यं द्वे युवत्यौ रहः
प्रेमालापमहो! विधातुमथ, ते माते'ति सम्बोधयेत्।
उक्त्वाऽसौ च, तथेश्वरोऽयमपरः, कश्चिन्मनुष्यो न वै
(न क्वापि स्खलतीश्वरः प्रकृतितो मर्यादितस्वस्थितेः)।।१८७९।।

नेदं कर्म च विद्यते त्ववितथं संसारिणः प्राणिनो,
देवानामपि शुद्धसत्त्वजगतां वै देवतानामिदम्'।
पादाब्जे स महाप्रभोश्च पतितो गत्वा त्विदं चिन्तयन्
चीत्कारं महदेव जल्पति धनी कृत्वोच्चकै'र्हा प्रभो!-।।१८८०।।

पापस्यापि विधेहि ह्युद्धारं मम साधो!।
पादाब्जं शरणं स्वं देहि प्रेमनिधान!'।।१८८१।।

उत्थाप्यामुमथ प्रभुः स कृतवान् स्वे वक्षसि स्नेहतो,
भूत्वा प्रेम्णि च विह्वलोऽतिबलतो नृत्यंस्तु संकीर्तनम्।

कुर्वन्नस्ति, स भावतोऽविरलतः प्रेमाश्रु मुञ्चंस्तथाऽ-
नृत्यन्-(नृत्यमतिप्रसन्नमनसः शारीरिकं चेष्टितम्)।।१८८२।।

भावावेशशरीरवस्त्रमवनौ तस्यापत,द्येन त-
च्छ्रीमद्दीप्तिमदङ्गकान्तिकिरणो विस्फुट्य तन्नीरवम्।
स्थानं भासयति स्म, तेऽपि गणिके चेमां विलोक्याद्भुतां
साध्वीमत्र चमत्कृतिं नहि निजं स्मर्तुं तु शक्तेऽधुना।।१८८३।।

भावावेशतया, ते कुर्वत्यौ प्रभुनाम्नाम्
श्रीसंकीर्तनमद्धाऽनर्तिष्टां विमलत्वे।।१८८४।।

जग्राहाऽङ्घ्रिमथ प्रभोश्च बलतोऽद्धा तीर्थरामस्तथा
वारम्वारमवोचदेष धनिकस्तूत्क्रुश्य 'मे हे प्रभो!।
उद्धारो ननु पापिनोऽपि विधिना केनापि भावी क्षमः?,
प्रायश्चित्तमहो! दयामय! ममाऽघानां तु किं युज्यते?'।।१८८५।।

चैतन्यः पतितात्मपावनयतिश्चोत्थाप्य तं स्वे गले
चक्रे चाह स 'तीर्थराम! नियतं पापी नहि त्वं, पुनः।
पुण्यात्माऽसि, तु पावनोऽभवमहं त्वच्छ्रयङ्गकस्पर्शतो,
लोके त्वं ननु भाग्यवानसि, कृपापात्रं प्रभोर्विद्यसे।।१८८६।।

आत्मग्लानिमथ द्रुतं स्वमनसो निःसारय, श्रीहरिः
सर्वेषां करुणामयस्तु कुरुते भद्रं, तदीयेऽत्र यः।
यात्यद्धा शरणे, न तस्य सुमतेः पापं वसत्येव कौ
(श्रीमद्भास्करसम्मुखात्मवपुषः किं स्यात्तमिस्रान्धता?)।।१८८७।।

तूलभरे पतितेऽग्नौ भस्म यथा भवति द्राक्।
भस्म तथैव तु पापं तद्भगवच्छरणानाम्'।।१८८८।।

श्रुत्वेदं ननु सान्त्वनायुतवचोऽद्धा तीर्थरामस्य तत्-
किञ्चिद्धैर्यमभूत्प्रभोः, प्रभुपदेऽसौ सर्वतोभावतः।
आत्मानन्तु समर्पितं स्म कुरुते, तस्योपदिष्टं प्रभु-
श्चक्रे श्रीहरिनाममन्त्र-(मपरः श्रीनाममन्त्रः कलौ)।।१८८९।।

धृत्वा च सोऽपि तिलकं तुलसीकमालां
सद्वैष्णवोऽभव,दुभे गणिकेऽपि शुद्धिम्।

कृत्वा स्वपापनिवहस्य निरन्तरं श्री-
नामस्मृतौ तु निरतेऽभवतां प्रकाशम्।।१८६०।।

तीर्थस्त्रीस्वमिधानमस्ति कमलादेवी, स्वपत्युस्तथाऽऽ-
वस्थां साधुदशां विलोक्य परमाऽऽनन्दोऽभवत्तद्धृदि।
साध्वी चात्र पतिव्रता ननु सती पत्नी स्वपत्युः पदो-
रासीत्सा त्वनुगर्न्तृका (पतिपरा स्त्री, भारती संस्कृतिः)।।१८६१।।

अत्यन्तं ननु दीनहीनहृत्सा चक्रे प्रणतिं प्रभोः पदे।
स्थाने, गद्गदकण्ठतोऽर्थनां (सौभाग्यं परमार्थनास्थितिः)।।१८६२।।

'पापिन्यास्त्वपि हे प्रभो! कुरु समुद्धारं तथाऽस्याः पुन-
र्मेऽपि त्वात्मपदोश्च देहि शरणं, पत्नी यतोऽहन्त्वपि।
कर्तुं स्यां पतिपादकानुगमनं संसारवारान्निधेः'
(कैवर्तः पतिरेव केवलमहो! सौभाग्यवत्याः स्त्रियः)।।१८६३।।

आदेशेन महाप्रभोः सुमनसोऽसौ तीर्थरामः पतिः
श्रद्धालोर्हरिनाममन्त्रमदिशद् धर्तुं स्वपत्न्याः प्रियम्।
सर्वं सापि वितीर्य तन्निजधनं दीनेषु पत्या समं
कुर्वाणा हरिनामकीर्तनमभूत् (साधोः फलत्यार्द्रता)।।१८६४।।

तस्थौ सप्त वटेश्वरेऽत्र दिवसान् स्थाने निमायिप्रभुः,
स्थित्वाऽसौ च तथोपदेशमपरं गौरो ददानोऽभवत्।
तीर्थायाऽत्र, महाप्रभुस्तमवदज्जाले बहूनां पुन-
र्ग्रन्थानां पत मा, निमायिभगवान् विश्वासतः केवलम्।।१८६५।।

एवाऽऽप्तुं भुवि शक्यते, तृणसमां सम्पूर्णविश्वश्रियं
बोधा,ऽश्नुष्व निरन्तरं भगवतो नाम्नश्च संकीर्तने।
एवाऽयं ननु वेदशास्त्रगलितः सारस्तथैवंविधं
सुन्दर्योरुभयोस्तयोर्गणिकयोः सत्तीर्थरामस्य च।।१८६६।।

सत्प्रेमदानमचलत्प्रभुरेष कृत्वा
श्रीरङ्ग,मेव नयते चतुरोऽत्र मासान्।
वर्षाः समाप्तिमगमच्च यदा, तदाऽयं
श्रीरङ्गतस्तु चलितुं कुरुते विचारम्।।१८६७।।

# दक्षिणस्य तीर्थानां भ्रमणम्(२)

१०६. मानव! भुवि कृतिरुपकृतिमात्रम्।
मनुजानां केवलमिह धाता बुद्धिं वाणीं हस्तौ
निश्चेतुं सम्यगभिव्यक्तुं कर्तुं भावं चाऽदित।
परमे तथोपकारे तेषामुपयोगः कृतिनां यत्
तदेव देष्टुं दशावतारान् जनार्दनोऽपि विधत्ते।।

कर्माणीह करोति यानि भुवने साधारणो मानवः
कुर्वंस्तिष्ठति वै महानपि नरस्तान्येव, किन्त्वात्मनः।
कौ साधारणलोककर्म भवति स्वस्यैव सौख्याय, सत्-
कल्याणाय महात्मकर्म च तथा सम्पूर्णजीवात्मनाम्।।१८९८।।

सन्तः सन्ति महानरास्तु सुतरां तीर्थस्वरूपाः स्वयं,
ह्यस्त्यावश्यकतैव तत्सुमनसां का तीर्थयात्राकृतेः?
स्वर्गस्यैव न कामनाऽस्ति सुहृदां पावित्र्यभूतेस्तथा
तेषां नो तु महात्मनां (तनुहृदां लोके नृणां कामना)।।१८९९।।

उत्पन्ना भवितुं क्षमाः सुरपुरः कोटिस्तु संकल्पत-
स्तेषां, तेषु जगत्पवित्रकरणी शक्तिस्तथोपस्थिता।
अस्त्यत्र स्वयमेव, केवलमहोऽथैवं स्थितौ जायते
जीवोद्धारपरोपकारकृतये तेषां तु तीर्थभ्रमिः।।१९००।।

श्रीनीलाचलकं महाप्रभुरतस्त्यक्त्वा निमायिभ्रमिं
कुर्वन्नेष सुदूरदक्षिणधराप्रान्तस्य तीर्थेष्वभूत्।
कौ यत्रापि गतः स, धन्यमभवत्तीर्थं तदेवाऽभवं-
स्तत्रत्या पुरुषाः स्त्रियश्च सफला (धन्या निमायिभ्रमिः)।।१९०१।।

चातुर्मास्यमथ व्यतीत्य गतवाञ्छ्रीरङ्गमार्गेण स
ह्याप्त्वा वेङ्कटभट्टतस्त्वनुमतिं शैलर्षभे श्रीप्रभुः।
तत्रासौ श्रुतवान्- स्थितोऽस्ति परमानन्दः पुरी साम्प्रतं
ह्यत्रैव, त्विदकं निशम्य सुमनास्तद्दर्शनार्थं प्रभुः।।१९०२।।

यातस्तस्य निवासमेष, चरणौ तस्याऽनमच्चास्थया,
प्रेम्णाऽऽलिङ्गदमुं पुरीवरमहाराजः प्रभुं, तावुभौ।

स्थित्वा त्रीणि दिनानि चैव सहितौ श्रीमत्कथाकीर्तनं
कुर्वन्तौ तु बभूवतुः सुसुहृदो राधाप्रियस्यात्मनः।।१६०३।।

'ममाऽस्ति काङ्क्षा यदहं विधाय
श्रीदर्शनं तत्पुरुषोत्तमस्य।
भागीरथीस्नाननिमित्तमेता
द्वीपं नवं' श्रीलपुरी बभाषे।।१६०४।।

'तावद्यातु भवान्, पुनर्मम नवद्वीपान्निवृत्यात्मनाऽऽ-
यातु श्रीलनिमायिसौहृदपुरीमेवा,प्यहं दर्शनम्।
कुर्वन्नेव च सेतुबन्धभगवद्रामेश्वरस्य द्रुतं
कुर्वन्नस्मि विचारमात्मनि पुरीप्रत्यागमस्याधुना।।१६०५।।

चेज्जाता भगवत्कृपा ननु तदोभौ नौ च नीलाचले
वत्स्यावस्तु सहैव' सेतुभगवद्रामेश्वरं तु प्रभुः।
यातोऽय,ञ्च तथा पुरीवरमहाराजो यतिस्तत्क्षणं
नाथश्रीलपुरीपथञ्च जगृहे (सन्तश्चरिष्णुश्रियः)।।१६०६।।

नानाग्रामवनाचलेषु विचरन् प्राप्तो निमायिप्रभु-
श्चैतन्यः शिवशैलपर्वतमसौ जग्राह तत्र प्रियम्।
आतिथ्यं तु शिवोमयोः सुगृहिणोः सद्ब्राह्मणब्राह्मणी-
वेषोपस्थितयो-(र्गृही निजगृहाप्तातिथ्यतः प्रीयते)।।१६०७।।

श्रीशैलतः सम्प्रति कामकोष्ठी-
पुरीपथेनाऽऽप महाप्रभुः सः।
सदक्षिणाख्यां मथुरां निमायी
(चैतन्यसाधुर्मथुराप्रियात्मा)।।१६०८।।

तत्रैकश्च निमन्त्रितं स्म कुरुते गौरप्रभुं ब्राह्मणः,
'सीताराम', रुदन् रुदंस्तु सततं स ब्राह्मणोऽभूद्वदन्।
'सीताराम', निमन्त्रणं सह मुदा जग्राह तस्य प्रभु-
र्भिक्षार्थं गृहमेयिवान् सहृदयो मध्याह्नकस्नानतः।।१६०९।।

गत्वाऽपश्यदसौ महाप्रभुः किञ्चिन्नापि पपाच स द्विजः।
मौनञ्चास्ति विषण्णभावतो (हृष्टाऽऽस्योऽतिथिसत्कृतौ गृही)।।१६१०।।

पप्रच्छ हसित्वाऽयं 'विप्रवराऽद्धा।
पक्वं भवता नो किं सम्प्रति यावत्'।।१६११।।

सारल्येन समं जगाद सुहृदं चात्यन्तमेव द्विजोऽ-
त्रायोध्यासमवैभवं लसति किं? यद्दासदास्यः क्षणात्।
कुर्युश्चाखिलकार्य,मस्ति तु वनाऽऽवासोऽत्र, तल्लक्ष्मण-
श्चानेता फलमूलकानि वनतस्तत्कुत्र सा रन्धनम्।।१६१२।।

कर्ता मैथिलमाता सीता, प्राप्स्यति तन्मे।
नैवेद्यं सरकारो रामः काननवासी'।।१६१३।।

दृष्ट्वा तद्द्विजभक्ततादृशत्रृतश्रीभावमेष प्रभु-
स्त्वत्यन्तं मुदितोऽभवच्च बहुशस्तस्य प्रशंसां तथा।
कुर्वन् प्रेम्णि ननर्त सौहृदवशादुन्मत्तभावो,ऽधुना
स ह्युत्थाय पपाच भोजनमहोऽस्तव्यस्तभावाद्द्विजः।।१६१४।।

प्रायो भोजनरन्धनं समभवद्यामे तृतीये गते,
श्रद्धाभक्तिभरेण सोऽथ महता सार्धं निमायिप्रभोः।
भिक्षां कारितवान्, स्वयं ननु निराहारः स एवाऽवसत्-
किञ्चिन्नापि परं प्रसादमविदद्-(ह्यार्तप्रसादः कुतः)।।१६१५।।

'लब्धोऽत्र विप्रवर! नो भवता प्रसादो,
वार्ता तथाऽस्ति किमियं? कथमस्ति दुःखी?।
स्थाने त्वियान्ननु भवा,न्निजदुःखहेतुं
मां सत्य-सत्यमधुना दिशतु' प्रभोर्वाक्।।१६१६।।

विप्रस्तत्स रुदन् रुदन् कथयते 'सीतां जगन्मातरं
धृत्वा स्वेन च पाणिना कुकृतिना दुष्टोऽनयद्रावणः।
मातुः स्पर्शमथाऽकरोदघकरो दुष्टः स वै राक्षसः,
किं स्याद्दुःखमितोऽधिकं भवितुमेवान्यत्क्षमं मत्कृते।।१६१७।।

कर्ताऽधुना जीवनधारणं नो,
वार्ता स्मृतौ याति यदा ममेयम्।
तदैव हृन्मे दलदस्ति' (भावा-
न्मनुष्यता गुञ्जति सर्वलोके)।।१६१८।।

मुग्धोऽभूत्तु महाप्रभुः सहृदयस्तस्यानुरागं दृढं
दृष्ट्वैवं, हि कियानहो! ननु महान् भावोऽस्ति, चैतं तथा।
अन्यः कोऽपि विना महापुरुषकं किं बोद्धुमेव क्षमो?
धैर्यं सम्प्रति बन्धयन् कथयते तं विप्रमस्मत्प्रभुः।।१६१६।।

'भूत्वा विप्रवर! त्वियानपि महान् विद्वान् विधत्ते भवान्
वार्तामेवमहोऽत्र विस्मृत इव स्थाने, कथं शक्यते?।
श्रीसीतां जगदम्बिकां भवितुमेवात्रापहृत्याखिल-
ब्रह्माण्डे नयनस्य काममपरा शक्तिस्तु कस्मिन्नपि।।१६२०।।

एका भगवतो लीलाऽभवदेषा।
भुङ्क्तां, च मनसोऽदः सारय वचः'।।१६२१।।

लेभेऽल्पं त्वधिकं प्रसादमथ स श्रीलप्रभोराग्रहात्-
सन्तोषः परमस्य नाभवदहो! पूर्णस्तु, रामायणे।
श्रीवाल्मीकिमहर्षिशक्तिघटिते स्पष्टं तथास्त्यङ्कितं
श्रीसीताजगदम्बिकापहरणं (न स्यान्मृषावागृषिः)।।१६२२।।

तच्चिन्तित एवाऽतिष्ठत्स तु विप्रः।
गौरोऽपि चचालाऽग्रेऽन्यत्र दिनेऽयम्।।१६२३।।

सस्नौ दक्षिणमाथुराच्च चलितो मालाख्यतीर्थे प्रभु-
श्चक्रे श्रीभृगुनन्दनेक्षणमसौ गत्वा महेन्द्रं गिरिम्।
तद्रामेश्वरसेतुबन्धमिलनं कुर्वन् धनुस्तीर्थकं
प्राप्तस्तत्र विधाय च स्नपनमाऽऽप्तः श्रीलरामेश्वरम्।।१६२४।।

तत्र श्रीशिवदर्शनं प्रभुरहो! कृत्वा बभूवैव स
प्रत्यायन् स्म तथेक्षते कतिपयांस्तस्मिन्निषण्णान् द्विजान्।
आसीत्कूर्मपुराणपावनकथा स्थाने भवन्ती तदा,
श्रोतुं चाऽऽस्त कथां महाप्रभुरपि (श्रेष्ठस्थितिर्वस्तुने)।।१६२५।।

श्रीसीताहरणप्रसङ्गविषयो दैवात्तदानीं चल-
न्नासीत्तत्र, निमायिगौरसुमनाः कूर्मे पुराणेऽशृणोत्-।
श्रीसीता जनकात्मजा ननु दशग्रीवं यदा रावणं
साऽपश्य,त्क्षणतश्चकार मिथिलाजाऽग्नेस्तदाऽऽराधनम्।।१६२६।।

अग्निः स्वे च पुरे दधार मिथिलाकन्यां तु रामाङ्गणां,
तच्छायां त्यजति स्म सम्प्रति बहिः स्थातुं स लीलाश्रियै।
छायामेव तथापहृत्य गतवान्नीत्वा च तां रावणः
सीतायाः (कृतिनामियं हि कमलाऽलक्ष्मीस्तु पापात्मनाम्)।।१६२७।।

श्रीरामो भगवान् यदाहि कृतवान् हत्वा खलं रावणं
श्रीसीताग्निपरीक्षणं, ननु ददावग्निस्तदाऽकृत्रिमाम्।
निःसार्य स्वपुरात्स राघवकृते सीतां विदेहात्मजां
(सम्पूर्णप्रकृतिः प्रनृत्यति सदा तस्येशितुस्त्विच्छया)।।१६२८।।

सीतायास्त्वपहृत्य रावणश्छायामेव निनाय वस्तुतः।
चक्रेऽकृत्रिममैथिलीतनुस्पर्शं नापि स राक्षसात्मकः।।१६२६।।

श्रुत्वाऽमुं मुदितः प्रसङ्गमभवत्सोऽत्यन्तमेव प्रभुः
सद्भक्तप्रियवत्सलः, सुमनसा स्थानेऽमुना चिन्तितम्।
'एतत्कूर्मकथांशकप्रतिलिपिं संदर्शनीयं मया
कृत्वा भक्तवराय सौहृदवते तद्रामदासाय वै'।।१६३०।।

भूयस्तेन विचारितं 'प्रतिलिपिं पत्रे तु कृत्वा नवे
तत्स्थाने च नयेय,मस्ति सुतरां तत्संभवं, तस्य नो।
विश्वासोऽस्तु, तथा नवीनघटितं पद्यं तु बुद्ध्वाऽऽत्मनि'
प्रोचे विप्रमयं प्रभुः सहृदयस्तत्तत्कथावाचकम्।।१६३१।।

'पृष्ठस्यास्थ विधाय च प्रतिकृतिं दास्यामि विप्र! त्वहं
हे श्रीमन्! भवते ददात्विदमथ प्राचीनपृष्ठं तु मे'।
स्वीचक्रे च निमायिनोऽमलयतेरेतत्कथा वाचको
(यद्दृङ्मेलनमात्रतो विवशता, तद्वाक्प्रयोगेन किम्?)।।१६३२।।

कृत्वाऽस्य नूत्नाऽनुकृतिं निमायी।
तस्मै कथावाचकविप्रकाय।
ददौ, स्वपार्श्वे च दधार पृष्ठं
तत्प्रत्न-(मच्छः कृतितोऽपि साधुः)।।१६३३।।

गेहं दक्षिणमाथुरे द्विजपतेः श्रीरामभक्तस्य तद्-
गौरस्त्वागतवान् दयालुहृदयो नीत्वा स पृष्ठं पुनः।

ऊचे कूर्मपुराणपृष्ठमनवं तद् दर्शयंस्तं प्रभुः
'सन्तोषो भविताऽधुना तु भवतो, गृह्णातु (तोषः सतः)।।१६३४।।

कूर्मपुराणेऽदो लिखितं वै-रावणलङ्केशो ननु हृत्वा।
राघवसीताया निजलङ्कां केवलकं छायामनयत्सः'।।१६३५।।

विप्रः सोऽथ दयालुतां सुमनसो दृष्ट्वा निमायिप्रभोः
स्थाने प्रेम्णि तु रोदनं स्म कुरुते भूत्वा परं व्याकुलः।
आश्वस्तः स रुदन् रुदन् कथयते पादौ निगृह्य प्रभो-
'र्दुःखं मेऽपहृतं तथाऽद्य भवता (सर्वप्रियो दुःखहृत्)।।१६३६।।

अस्ति श्रीरघुनाथ एव सुमनो! देवो ममेष्टो भवा-
नन्यः कोऽपि न कर्तुमेव मम तं रामेष्टदेवं विना।
स्थानेऽसीमकृपां तथैवमपरां शक्नोति, जातस्त्वहं
धन्योऽमोघसुदर्शनाच्च भवतः (सत्प्रीतितो धन्यता)।।१६३७।।

उद्धारं कृतवान्निमज्जतः शोकाब्धौ हि निराश्रयस्य मे।
कृत्वाऽनुग्रहमद्य, हे प्रभो! किं कर्तुं प्रभवामि तु स्तुतिम्?'।।१६३८।।

श्रुत्वैवं स्तुतिमस्य च द्विजपतेरूचे निमायिप्रभुः
'सन्तुष्टोऽभवमत्र विप्रवर ! हे ! दृष्ट्वा भवद्भक्तताम्।
अत्यन्तं त्वधिकं, तथा न मिलितः कुत्रापि चान्यत्र मे
भक्तस्त्वेवमथामलात्महृदयो' (भक्त्यैव हृत्पूयते) ।।१६३९।।

सन्तुष्टं च कृतार्थं कृत्वा तं द्विजमेवम्।
तीर्थेऽग्रे ननु गन्तुं गौरश्चिन्तयतेऽयम् ।।१६४०।।



# दक्षिणस्य शेषतीर्थेषु भ्रमणम्

११०. 'भगवन् ! महतां भवतां चलनं गृहिणां श्रेयोहेतुम्'।
नन्दो गेही व्रजमागतमभ्यागतमर्चति गर्गम्–
'लोके गृहिणो दीनचेतसो भवनानार्थग्रस्ताः
विस्मृतमानवतनुपरमार्था जाग्रन्निद्रास्थितयः।
तेषां पुरतो भवादृशानामुपस्थितिः स्वालोकः'।।

गौरो दक्षिणमाथुराच्च चलितोऽयं पाण्डुदेशे प्रभुः
श्रीवैकुण्ठ–गजेन्द्रमोक्षण–धनुस्तीर्थेषु पानागडौ।
चैतन्यस्तिलकाञ्चिका–वडतलेऽद्धा ताम्रपर्ण्यां नय-
त्रीपद्यां पुरचामता–मलययोः कन्याकुमार्यां तथा ।।१६४१।।

इत्यादौ च परिभ्रमन् सहृदयः कुर्वन् कृतार्थाञ्जनान्
सोऽमोघैर्निजदर्शनैर्निविशते मल्लारदेशे प्रभुः।
तत्स्थानेषु च साधुवेषजनतानां भट्टथारीपदा
ख्यातैका ननु मण्डली भवति (कौ लोको हि नानात्मकः) ।।१६४२।।

एकस्मिन्नहि ते वसन्ति तु जनाः स्थाने, च साधूपमो
वेषः, किन्तु न शोभना व्यवहृतिस्तेषां तथा जायते।
आरोप्य भ्रमिणो यथा स्वशिविरं पृथ्व्यां भ्रमन्तः सदा
दृश्यन्ते निजवाहनेषु (धरणी ह्यस्ति भ्रमन्ती स्वतः) ।।१६४३।।

एकस्माच्च तथैव तेऽपि सततं भिन्ने भ्रमन्तो जनाः
स्थाने स्वे हि भवन्ति, तेषु बहवः कुर्वन्ति चौर्यं त्वपि।
रात्रौ, ते निजसङ्गतौ विदधतेऽद्धा वञ्चयित्वा पथ-
भ्रष्टास्ता वनिता,स्तथा निजगणं कौ वर्धयन्तीह ते ।।१६४४।।

तेषामेष समीपमेव सुमना रात्रौ बभूव स्थितो,
लोकाः सेवककृष्णदासमपरं ते वञ्चयन्ते प्रभोः।
सुन्दर्याश्च धनस्य लोभनमदु,स्तं बोधयन्तीह ते
नाना, 'त्वं कथमस्य पृष्ठगमनः साधोर्विरक्तस्य नुः।।१६४५।।

व्यर्थं तु भ्रमसीह, कर्हिचन नो भुक्तिस्थलं निश्चितं
सौविध्यं वसनस्य चैव नियतं, तन्नोऽनुयायी भव।

पार्श्वे सुन्दरसुन्दरात्मवनिता नः सन्ति नाना, तथा
कामं यामपि कां कुरु स्वसविधे-(ऽस्त्रीजीवनं कीदृशम् ?) ।।१६४६।।

पार्श्वे खादनपानयोरथ च नो नैवाल्पता विद्यते,
नित्यं मोहनभोगमिष्टमशनं सम्यक् तथा पच्यते'।
दीनः साधुनिरक्षरोऽतिसरलो वार्तासु तेषां तथाऽऽ-
यातो निर्धनको द्विजो (हि सरलोऽद्धाऽसाधुभिर्वञ्च्यते) ।।१६४७।।

त्यक्त्वाऽभूत्स महाप्रभुञ्च शनकैरुत्थाय सङ्गे नृणां
तेषा,मस्य महाप्रभोर्ननु यदा ज्ञाताऽत्र वार्ता त्वियम्।
तत्तेषां सविधे गतः कथयते सारल्यतो 'भ्रातरो!
नेदं शोभनकर्म सम्प्रति पुनः स्थाने भवद्भिः कृतम् ।।१६४८।।

स्वे पार्श्वे मम सङ्गिनं तु निहितोऽद्धा वञ्चयित्वाऽधुना,
साधूनां भवतां कृते वरहृदां नैवंक्रिया तूचिता।
संन्यासी त्वहमस्मि, यूयमपि च स्थाने स्थ संन्यासिनः
(सृष्टिर्दृष्टिविभेदतो हि विविधं देदीप्यतेऽशाश्वती) ।।१६४९।।

विद्यन्ते बहवो जना ननु भवत्सङ्गे, तु मत्सन्निधा-
वेकाकी ह्ययमेव (कृष्णसुहृदोऽद्धा कृष्णदासाभिधः।
संयोगान्मिलितोऽत्र) तत्तु कृपया दत्तां मदीयं जनं,
नास्याच्छा भविताऽन्यथा परिणतिः' (साधुर्बिभेति स्वतः) ।।१६५०।।

चैतन्यस्य तथा निशम्य वचनं जाताः प्रहर्तुं प्रभुं
सन्नद्धाश्छलवेषधारियतयस्ते, तु प्रभावात्प्रभोः।
संयुक्ता हि पलायिताश्च निखिलाः, स्वं कृष्णदासं प्रभु-
स्तेभ्योऽग्रे चलितो विमोच्य (सुमनोगन्धं तु गृह्णात्यलिः) ।।१६५१।।

प्राप्तः सिन्धुपयस्विनीपदतटे तस्माच्चलित्वा प्रभु-
स्तत्र ब्रह्मकसंहिताऽस्य मिलिता प्राचीनहस्ताङ्किता।
धृत्वा ग्रन्थमथाऽद्भुतं तमधुना प्राप्तो निमायिप्रभुः
शृङ्गेरीमठमेष (पण्डितजनो बुद्धिप्रियस्याग्रही) ।।१६५२।।

सोऽयं मुख्यमठोऽस्ति तस्य भगवच्छ्रीशङ्कराचार्य-नु,-
र्देशस्यास्य तथाहि दक्षिणदिशो, धर्मप्रचारार्थकम्।

श्रीवेदाद्यवनार्थमेष भगवाञ्छ्रीशङ्कराचार्यजी-
पादः स्थापितवान् मठांस्तु चतुरो देशे चतुर्दिक्षु वै ।।१६५३।।

बद्रीकाश्रमपार्श्वमुत्तरदिशि स्थाने तु जोशीमठं,
श्रीगोवर्धननाम पूर्वदिशि स श्रीनाथपुर्यां मठम्।
वारुण्यां दिशि शारदामठमथ श्रीद्वारकायां तथा
शृङ्गेरीमठमत्र दक्षिणदिशि (श्रेयोऽध्वना श्रेष्ठता) ।।१६५४।।

एषां शेषमठत्रयस्य तु जनैस्त्यक्त्वाऽत्र जोशीमठं
कथ्यन्तेऽप्यधुना मठाधिपतयोऽद्धा शङ्कराचार्यकः।
आसीद्वै दशसम्प्रदायसुपदामेवाऽस्य संन्यासिभिः
संबन्धोऽत्र महाप्रभोरपि (सतां मध्ये निमाय्यागमः) ।।१६५५।।

शृङ्गेरीमठतः प्रभुश्च चलितोऽयं मत्स्यतीर्थाध्वना
मध्वाचार्यमठं निमायिसुमनाः प्राप्तो ह्युडूपीस्थले।
चक्रे तत्र महाप्रभुः स्वभगवद्गोपालसंदर्शनं
(दृष्टौ याति निमायिनः प्रियतमो मध्येऽत्र मध्ये सतः) ।।१६५६।।

तत्रस्थैः सह तत्त्ववादिसुजनैर्द्वित्रानवात्सीत्प्रभुः
कुर्वञ्छास्त्रविचारमेष दिवसांस्तत्फल्गुतीर्थे सरन्।
तत्पम्पापुरक-त्रिकूप-युगले सूर्पार-कोल्हापुरे
प्राप्तश्च प्रभृतौ स पण्ढरपुरं (प्रेयःस्थलं पण्ढरम्) ।।१६५७।।

अत्रैकश्च निमन्त्रणं स्म कुरुते विप्रो निमायिप्रभोः,
स्वीकृत्यैष निमन्त्रणञ्च गतवान् भिक्षां विधातुं प्रभुः।
गेहे तस्य, तथाहि स प्रभुयतिं भक्त्या बहु श्रद्धया
भिक्षां कारितवा,ञ्जगाद स तथा वार्ताप्रसङ्गे द्विजः ।।१६५८।।

'अत्रैकस्त्वधुना स्थितोऽस्ति भगवद्भक्तो महात्मा महा-
नेव श्रेष्ठमति,स्तु संभवतया श्रीमाधवेन्द्राऽभिधा।
एतत्प्राग् भविता श्रुतैव भवता, शिष्यो महात्मा त्वयं
तस्यैवास्ति (पिता सुतेन च गुरुः शिष्येण कौ गीयते) ।।१६५९।।

श्रीमद्रङ्गपुरीति तस्य सुधियो नामाऽस्ति' गौरप्रभुः
प्रीतौ च श्रुत एव चेयति तथा यातः क्षणाद् विह्वलः।

ऊचे शीघ्रमसौ च 'विप्रवर ! हे ! पार्श्वे भवान्मां द्रुतं
श्रीमद्रङ्गपुरीसतस्तु नयतां' (रङ्गोऽखिलो माधवः) ।।१६६०।।

कृत्वाऽऽज्ञां शिरसि प्रभोः सुमनसो विप्रः स सङ्गे प्रभुं
नीत्वा रङ्गपुरीसमीपमगमद्, दृष्ट्वा पुरीश्रीयतिम्।
दूरादेव, ननाम तस्य पदयोः साष्टाङ्गमेष प्रभु-
श्चोत्थाप्य प्रणतं प्रभुं स्म कुरुते कण्ठे यतिश्रीपुरी ।।१६६१।।

कुर्वञ्छंसनमस्य चाऽऽह 'भवतः स्पष्टं तथा ज्ञायते
त्वाकृत्यैव, भवान्न कोऽपि पुरुषः साधारणो विद्यते।
आश्चर्यं बहु, नम्रताऽस्ति भवतः संन्यासिनोऽपीयती
(नम्रः संग्रहकृन्न विस्मयकरस्त्यागी धरण्यां यथा) ।।१६६२।।

अद्यत्वेऽत्र तथेयती सरलता भक्तिः पुनश्चेयती
प्रेम्णश्चेदृशसत्त्वजाविकृतयश्चान्यत्र संन्यासिनि।
त्यक्त्वा मद्गुरुदेवमाधवकृपापात्राणि संन्यासिनो
लभ्यन्ते नहि कुत्रचि,त्परिचयो मह्यं निजो दीयताम्'।।१६६३।।

ऊचेऽत्यन्तमथैव सौहृदयतिर्भावाद् विनीतात्प्रभुः
'कौ संन्यासिषु भक्तियोजकयतिश्रीमाधवेन्द्रस्य वै।
शिष्यो मुख्यतमस्तथेश्वरपुरी मन्मन्त्रदीक्षागुरुः,
संन्यासस्य निमायिनो मम गुरुः श्रीकेशवो भारती'।।१६६४।।

पप्रच्छ समुत्कः श्रीरङ्गपुरी तत्।
'पूर्वाश्रमजन्मस्थानं भवतः क्व ?' ।।१६६५।।

सारल्येन जगाद तत्प्रभु'र्देहस्यास्य तथोद्भवोऽभवत्।
गौडक्षेत्रसुरापगातटे द्वीपाख्ये नगरे नवे प्रभो !' ।।१६६६।।

'ओहो ! तर्हि भवा'न्मुदं प्रकटयन् ब्रूते पुरीश्रीयतिः
'सम्बन्धी निकटो निजोऽस्त्यतिशयो,ऽद्वैतं तु विद्वद्गुरुम्।
जानन्नेव भवे,त्समं स्वगुरुणा यातोऽस्ति पूर्वं नव-
द्वीपं (देवनदीतटस्य वसतिः सद्भिर्ध्रुवं पूयते) ।।१६६७।।

तत्रैकोऽस्ति च भूसुरो ननु जगन्नाथाख्यमिश्रो महा-
ञ्छ्रद्धालुः, स्फुटमस्ति तस्य गृहिणी देव्यन्नपूर्णेव तु।

एकस्मिन् दिवसे मया हि विहिता भिक्षा तदीये गृहे,
भिक्षां माऽधिकया तु कारितवती सा ब्राह्मणी श्रद्धया।।१९६८।।

तस्यैकोऽखिलसद्गुणी ननु सुतो जातो हि संन्यासिक,-
श्चासीत्सोऽथ महांस्तु गूढहृदयः सल्लक्षणः सुन्दरः।
चित्रा दैवगतिः परं भवति वै, याते स वर्षद्वये
संन्यासग्रहणस्य, देहमजहाच्चात्रैव, तस्याऽभवत् - ।।१९६९।।

"शङ्करारण्यकः"। न्यासनामाऽवनौ' ।।१९७०।।

श्रुत्वेदं वचनं मनाक्प्रभुरभूद् गौरो यथा विस्मितो,
दीर्घस्वच्छतदीयपद्मकदृशोर्नीरं तयोः संभृतम्।
गौरस्य स्वत एव, रुद्धगलतः स्थाने जगाद त्वसौ
(कारुण्यं स्फुरतीह साधुहृदये संन्यासिनो बान्धवे) ।।१९७१।।

'स्वामी महाभागसदग्रणीश्च
श्रीशङ्करारण्ययतिर्ममाऽग्रः।
आसीत्स पूर्वाश्रमसोदरोऽयं
कोऽपीह तादृग् भगवन्निगूढः'।।१९७२।।

चक्रे स श्रुत एव चात्र वचने भूयस्तथाऽऽलिङ्गनं
श्रीमद्रङ्गपुरी प्रभोः सुमनसो, ब्रूते पुनः 'किं भवान् ?।
संन्यासी तु निमायिसौहृदहृदः सर्वे च सर्वेऽभवन्,
भ्राताऽन्योऽपि गृहेऽस्ति कोऽपि ननु वा ?' (पुंस्त्वेन वंशक्रमः) ।।१९७३।।

कृत्वाऽधस्तु शिरो जगाद शनकैर्गौरप्रभुः 'श्रीहरि-
र्गेहे त्वस्ति स एव, सम्प्रति भवान् यन्नाम पूर्वं जगौ।
मत्पूर्वाश्रमकस्य पूज्यजनको लोकं परं सोऽचलद्,
द्वावेवाऽऽस्व तु सोदरौ जगति नौ (सत्प्रेमवान् स्यान्नरः)।।१९७४।।

तौ द्वावेव तथाऽऽप्तौ पादेऽधो भवदीये।
गेहे सम्प्रति वृद्धा मातैवास्ति तपःस्था'।।१९७५।।

'धन्यं त्वस्ति कुलं तथैव भवतो भ्रात'र्बभाषे पुरी
'पुत्रोत्पादनमत्र चैव भवतः पित्रोरभूत्सार्थकम्'।
एवं तत्परमार्थवस्तुविषया वार्ता भवन्ती द्वयो-
रन्याप्यत्र गता तथाह्यतिशया (साधुस्तथैकार्थकः) ।।१९७६।।

द्वित्राणि तौ तु सहितौ वसतो दिनानि,
श्रीद्वारकां यतिपुरी चलितस्तथान्ते।
श्रीविट्ठलस्य दयितस्य विधाय गौरः
संदर्शनं प्रचलितः पथि सोऽपि चाग्रे।।१६७७।।

भीमास्नानयुतो हि पण्ढरपुरेऽयं कृष्णवीणानदी-
तीरे सम्प्रति चागतो,ऽत्र निकटाच्च ब्राह्मणानां तथा।
ग्रन्थं श्रीयुतबिल्वमङ्गलकृतं 'श्रीकृष्णकर्णामृतं'
नामाऽपूर्वमयं तथारसमयं गृह्णाति सम्यक्तया ।।१६७८।।

ग्रन्थौ ब्रह्मकसंहितां स्वनिकटेऽमू कृष्णकर्णामृतं'
गृह्णन् यत्नपुरःसरं प्रभुरयं ताप्तीनदीसन्निधौ।
प्राप्त,स्तत्र पवित्रवारिणि यतिः स्नानं विधायाऽधुना
रेवातीरमुपागतो ननु पुरीमाहिष्मतीमार्गतः।।१६७९।।

पश्यन्नत्र च ऋष्यमूकमचलं कुर्वन्नसौ पावनं
गौरो दण्डककाननाखिलमहातीर्थं निमायिप्रभुः।
तीर्थं चोद्धृतवांश्च कृष्णदयितोऽसौ सप्ततालाभिधं
(श्रीमद्भागवते हि सप्तगणना किञ्चिद् विशिष्टायते) ।।१६८०।।

उन्मत्तान् कुरुते स्म नीलगिरिकक्षेत्रे निमायिप्रियोऽ-
संख्यांस्तु भ्रमणक्षणे ननु जनाञ्छ्रीप्रेम्णि कृष्णस्य सः।
कुर्वन् स भ्रमणं तथैव नगरे चोपस्थितो गुर्जरे
(संन्यासी भ्रमतीह, तत्प्रियमतिर्लोकान् पुनाति क्षितौ) ।।१६८१।।

एकं प्रभुः पण्डितमत्र शुष्कं
वेदान्तिनं त्वर्जुननामकं च।
निबोधयामास स कृष्णतत्त्वं,
प्रेमप्रदानञ्च चकार तस्मै।।१६८२।।

भ्राम्यन् सम्प्रति गुर्जराच्च नगराद् बीजापुरस्य प्रभुः
पार्वत्यां भुवि, पुण्यतीर्थनिकरेऽनेकत्र सद्दर्शनम्।
स्नानं मार्जनमेष चाचमनकं कुर्वन्निमायिप्रियः
पुण्याख्ये यतिरागतस्तु नगरे (सत्प्राप्तितः पुण्यता) ।।१६८३।।

चक्रे चैकसरोवरस्य निकटे गौरोऽत्र वासं, तथाऽऽ-
सीदेतत्तु समृद्धिशालिनगरं पर्याप्त,मस्मिन् पुनः।
नानाऽऽसन्ननु संस्कृतस्य सुधियोऽद्धा पाठशालास्तथाऽ-
नेकाः (संस्कृतमार्ग एव कुरुते लोके समृद्धिं सतीम्।।१६८४।।

आसीत्तेषु दिनेषु कृष्णविरहप्राबल्यमस्य प्रभो-
रत्यन्तं, स सरोवरस्य च तटे ह्युच्चैर्निषण्णो रुदन्।
कुर्वञ्चीत्कृतिमस्ति कृष्णहृदयो 'हा प्राणनाथ ! प्रिय!
क्व त्वं हा ! हृदयेश्वराऽसि, निजकं संदर्शनं देहि मे ।।१६८५।।

हे प्राणप्रिय ! शीघ्रमेहि, दयित ! क्व त्वं निलीनोऽसि हे!'
श्रुत्वाऽमुष्य महाप्रभोस्तु करुणं तत्क्रन्दनं सत्वरम्।
स्थाने तत्र निमायिनश्च बहवो नार्यो नराः पुञ्जिता
(लोका लोकविलक्षणन्तु कुतुकं लब्धुं सदैवोद्यताः) ।।१६८६।।

शुष्कास्तेष्वपि तार्किकाः कतिपये तत्त्वज्ञसंमानिन-
श्चासन् स्वे, प्रभुरेष पृच्छति च तानत्यन्तदैन्यात्मना।
'चेज्जानन्ति तदा वदन्तु कृपया मत्प्राणनाथस्थल-
श्रीसङ्केत,मिह क्व सोऽस्ति? दयितस्त्यक्त्वा क्व लीनः स माम्?'।।१६८७।।

तेष्वेको नरपण्डितेषु 'ननु ते कृष्णोऽत्र लीनोऽम्बुनि'
ब्रूते पण्डितकस्तु शुष्कहृदयः, श्रुत्वैव तत्तत्क्षणे।
उत्प्लुत्यैष सरोवरे प्रभुरहोऽकूर्दिष्ट, सीमाऽवस-
न्नाश्चर्यस्य जनेषु, तज्जनभरे हाहेति कारोऽभवत्।।१६८८।।

कूर्दन्ते स्म सरोवरे बहुजनास्तस्मिन् क्षणे चैव ते
चैतन्यं जलतो बहिः सहृदया निःसारयामासुराः!।
अस्मिन् धिङ्ननु कुर्वते स्म निखिला लोकाश्च तं पण्डितं
नीत्वा सोऽपि गतो मुखं स्वमिव तद्व्रीडाहतस्तत्क्षणम्।।१६८९।।

प्राप्तोऽतश्चलितो महाप्रभुरयं गौरो जिजूरीपुरे
श्रीभोलेश्वरमार्गतो,ऽत्र विषयेऽत्यन्तं तथा विद्यते।
भव्यं खाण्डवदेवमन्दिर,महोऽत्रैका निकृष्टा प्रथाऽ-
त्यन्तैवास्ति (सिता प्रथाऽपि भुवने कालेन कृष्णायते) ।।१६९०।।

कन्याया भवतीह नो परिणयो यस्यास्तु, देवालये
स्थाने चार्पयतस्तदीयपितरौ तां देवदासीं जनाः।
भाषन्ते च, भवन्ति तासु बहु चाद्धा दुश्चरित्रास्तथा
(चारि त्र्यं पुरुषेण यन्नियमितं, स्वच्छायते तत्स्त्रियः)।।१६६१।।

यच्छुश्राव महाप्रभुस्त्विदमहोऽसाध्वीश्च तत्स स्वयं
द्रष्टुं खाण्डवदेवमन्दिरमगात्कौ भाग्यहीनाश्च ताः।
तद्दुर्दैवहतस्वभाग्यकुदशां गौरो ददर्शाऽऽत्मनो
नेत्राभ्यां (जनदैन्यतापहरणे सन्तो द्रवन्त्यन्ततः)।।१६६२।।

तासां श्रीलमहाप्रभुश्च दयनीयां तां विलोक्य स्थितिं
चैतन्योऽत्र दयामयः कथयते 'देव्यः! स्थ धन्या ध्रुवम्।
स्थाने जीवनमस्ति सार्थकमिदं युष्माकमेवावनौ
(सद्योगो मनुजात्मलोकजगतां पुण्येन कौ जायते)।।१६६३।।

अन्यस्त्रीपतिरत्र चास्थिपलयोः कौ जायते मानवः
सत्यं पुत्तलकस्तु नश्वरतनुः, श्रीमद्धरिर्वोऽस्ति च।
प्रत्यक्षं सततं लसन् प्रियतमः स्थाने पतिस्तु स्थिरः
(सर्वेषामवनाज्जगत्पतिरहोऽद्धा सत्पतिः श्रीपतिः)।।१६६४।।

गोप्योऽसंख्यसमा विधातुमपरं तेपुः पतिं श्रीहरिं,
सत्यो नन्दसुतः स एव तु पतिः संवर्तते वस्तुतः।
तद्यूयं सततन्तु सर्वविधितः श्रीकृष्णनाम्नो मनो-
योगात्कीर्तनमेव तस्य कुरुत श्रीरूपसच्चिन्तनम्।।।।१६६५।।

सर्वेषां पतितात्मपावनमदोनामाऽस्ति, शुद्धात्मना"ऽ-
हं हे! त्वच्छरणेऽस्मि" यः सकृदपि ब्रूते त्विदं, तर्हि सः।
सर्वं क्षाम्यति पापमस्य कलुषं, श्रीनामसंकीर्तनेऽ-
नन्ता शक्तिरहो'-(ऽस्त्यकारणसुहृत्सर्वस्य तु श्रीहरिः)।।१६६६।।

उक्त्वेदं स्वभुजद्वयं स्वयमसौ तूत्थाप्य चोच्चस्वरात्
कुर्वञ्छ्रीहरिनामकीर्तनमभू,त्सत्प्रेमभावाऽऽग्रहे।
काले तत्र तदीयनेत्रयुगलादश्रुप्रवाहः सर-
न्नासी,द्रोम समुद्गतञ्च निखिलं देहस्य गौरप्रभोः।।१६६७।।

स्वेदोऽस्य निःसरति चाखिलरोमकूपा,-
देवं महाप्रभुनिमायिदशां विलोक्य।
नारीस्वभावसुलभैः कमनीयकण्ठैः
सर्वा निजैः प्रियरवैरिह देवदास्यः।।१९९८।।

१११. उच्चैर्गायन्ति महामन्त्रम्।
'अस्माकं पतितात्मदशानां हरतु हरे! दुर्वृत्तिम्
हे! श्रीरामाहल्योद्धारक! नोऽपि त्वं कृपयोन्नय।
ललितकलेवर! कमनीयाकृति-कृष्ण! मनोहर! नटवर!
नृत्यसि मधुरं, नर्तय चास्मान् भवमर्यादितरूपम्'।।

मन्त्रस्य ध्वनिना जुगुञ्ज महतः सम्पूर्णदेवालय-
स्तत्संकीर्तनकाऽऽप्लवे तु निखिलं तद्देवदासीहृदाम्।
पापं क्षालितमत्र, तत्सदसर,न्नाम्नः प्रभावाच्च ता
निष्पापास्त्वभवन् हरेर्भगवतः (शुद्धिस्थितिः सुस्मृतिः)।।१९९९।।

आसीत्तासु च या प्रधानगणिताऽद्धा देवदासी,न्दिरा
तस्या नाम बभूव, सा प्रभुयतेश्चागत्य पादेऽपतत्।
दैन्येनाऽऽह तथा 'प्रभो!' च महता 'जाता ममेयं दशा
कुर्वत्या व्यभिचारमत्र (सहते सर्वं समर्थोऽप्यलम्)।।२०००।।

भक्तिः श्रीहरिपादयोर्भवतु मे, त्वेवं कृपा साम्प्रतं
कुर्याद्' धैर्यमथ प्रभुः कथयते तस्यास्तथा बन्धयन्।
'श्रीकृष्णोऽस्ति दयामयः प्रकृतितो, हे देवि! दीनेषु स
त्वत्यन्तं कुरुते कृपां द्रुत-(महो! स्थाने कृपात्मा प्रभुः)।।२००१।।

तस्यैव भजनं त्वं धेहि शरणम्।
कल्याणमथ ते हे देवि! भविता'।।२००२।।

आज्ञां गौरमहाप्रभोरथ शिरोधार्यां विधायात्मनः
सर्वस्वं विबभाज निर्धनजने चैषा स्वयं भिक्षुणी।
निर्वाहञ्च सती तु मन्दिरमुखे भिक्षान्नतः कुर्वती
श्रीकृष्णस्य बभौ दिवानिशमहो! मग्ना तथा कीर्तने।।२००३।।

अन्यास्त्वपि दास्यस्तास्ता कतिपयाः।
एतत्पथपथ्यं स्थाने ह्यनुसस्रुः।।२००४।।



# नौरोजी-दस्यु-उद्धारः

११२. शरणं यातु मनश्चैतन्यम्।
संसृतिसागरतरणं वाञ्छसि यदि नैष्कर्म्यस्थित्या
श्रीसंकीर्तनरसपीयूषं ज्ञातुं यदि चेतयसे।
सत्प्रेमाम्बुधिविहरणलीलामिह कामयसे लब्धुम्
तत्कृष्णचैतन्यशशिशीतलचरणशरणमाश्रयताम्।।

नास्ति प्रेम्णि भयं निमायिनि न च द्वेषो,ऽत्र पीतं तथा-
सत्प्रेम्णश्चषकं तु येन, भुवने सर्वत्र तस्यात्मनि।
तस्यैवैकमनोहरस्य परमप्रेमास्पदस्य प्रभो
रूपं त्वेव विलक्ष्यते (परिचये भावे प्रतीतिः सतः)।।२००५।।

संसारेऽत्र यदाऽखिलं ननु निजप्रेमास्पदं, तद्भयं
कस्माद्वै, परतो भयन्तु भवति, स्वस्मान्न भीः कस्यचित्।
द्वेषोऽत्र क्रियते परेण, भवतु द्वेषः कथं केन वा?,
सर्वः श्यामलसुन्दरस्य भुवने लोको यदा वर्तते।।२००६।।

दत्वा कृष्णसुकीर्तनस्य सुमना गौरप्रभुः खाण्डवा-
देवेऽसावनुशासनं तु चलितोऽग्रे देवदासीजने।
तस्मादल्पकदूरमत्र वनमेकं 'चौरनन्दि' त्वभूत्-
तस्थुस्तत्र च दस्यवो हि बहवो-(ऽरण्यं सतां वाऽसताम्)।।२००७।।

दस्यूनामभवत्तथा गणपतिस्तेषां समेषां वने
नौरोजी, स बभूव चातिशयितः क्रूरस्तथा हिंसकः।
कम्पन्ते स्म तु नामतोऽस्य जनतास्तस्मिन् प्रदेशे तथाऽऽ-
तङ्कोऽभूदधिकश्च तस्य पदतो (नाम्नाऽप्यसंस्त्रासदः)।।२००८।।

कर्तुं तत्र वने विचारमकरोद् गौरः प्रवेशं यदा,
लोकस्तद्गमने निषेधमकृत श्रीलप्रभोस्तस्य, च।
ऊचुः 'सन्त्यधिकं तथाप्रकृतितस्ते दस्यवो हिंसका,
यानं नोचितमस्ति तेन भवतो मार्गेण साधोऽसता'।।२००९।।

तेषां तद्वचनं परं कथमहोऽमंस्त प्रभु,स्तद्वचो
'भ्रातः! रूप्यपणांशहेतुमवनौ ते दस्यवो घ्नन्ति तु।

लोकान्, किन्तु वयं धरागृहगृहाणां भिक्षुका न्यासिनः,
किं प्राप्स्यन्ति निहत्य नो (तनुभृतां लाभाय चेष्टाऽखिला)।।२०१०।।

इच्छेयुर्यदि जीवमेव मम ते नेतुं, नयेयुस्तदा
कामं त्वेव, चलेद्धि कस्यचिदपि त्वेतेन देहेन चेत्।
कार्यं, तन्महदुत्तमं' प्रभुरहो! चैवं भणित्वा वने
तस्मिन् प्राविशदेष (वस्तु भयदं साधोस्तथोद्दीपकम्) ।।२०११।।

तत्रैकस्य तले द्रुमस्य सुमनाः संशय्य मन्दं प्रभु-
र्मन्दं श्रीहरिनामकीर्तनमभूत्कुर्वञ्छ्रुतिप्रीतिदम्।
नौरोजी श्रुतवान् स दस्युपतिकः–प्राप्तोऽस्ति कश्चित्तथा
संन्यासी त्विह नो वने (प्रकृतितः स्थानं यतीनां वनम्)।।२०१२।।

सार्धं स स्वदलस्य नैकपुरुषैः प्राप्तः प्रभोः सन्निधौ,
चक्रे चाथ निमन्त्रितं प्रभुमहोऽद्धा भोजनार्थं, तथा।
स्वस्थाने चलनाग्रहं, प्रभुवचः–'संन्यासिनः स्मो वयं,
युक्तं त्वासनमस्ति नो द्रुमतले (सन्तो रहःप्रेमिणः)।।२०१३।।

शेषं तु भोजनवचो,ऽत्र तथैकमात्रं
भिक्षैव साधुजगतां भुवि नोऽवलम्बः।
भिक्षां तथाऽऽनयति य,त्तदहं सहर्षं
गृह्णामि' (वस्तु मधुरं सुहृदोपनीतम्)।।२०१४।।

आज्ञामेवमथोपलभ्य स गणस्वामी दिदेश प्रभो-
र्लोकान् स्वान्, क्षणतस्तु तेऽत्र विविधं भोज्यञ्च नीत्वाऽऽययुः।
श्रीकृष्णस्य परं महाप्रभुरिहाऽऽसीत्प्रेम्णि वै विह्वलो,
नासीदस्य तु बोध एव वपुष-(श्चित्रा स्थितिः प्रेमिणः)।।२०१५।।

कुर्वन् गद्गदकण्ठतोऽस्ति सुमनाः स प्रेम्णि संकीर्तनं
मत्ताभो, भवतीह कर्हिचिदसौ नृत्यन्नपि श्रीप्रभुः।
नौरोजी परिवृत्य तु प्रभुमभूत्सार्धं स्वलोकैः स्थितो,ऽ-
मुष्याऽलोकमभूतपूर्वमपरं दृष्ट्वा प्रभुप्रेम तत्।।२०१६।।

तस्याप्यश्मसमं द्रुतन्तु हृदयं, हिंसा तथाऽऽजीवनं
लोकानां विहिताऽत्र तेन, च कृतं तल्लुण्ठनं केवलम्।

प्रायः सम्प्रति तस्य षष्टिशरदामायुः, प्रभोः प्रेम तत्
प्राक्षैत्सीत्कुहकं त्वपीह निजकं तद्वृद्धदस्यूपरि।।२०१७।।

धृत्वा स प्रभुपादपद्मयुगलं मन्दं च मन्दं जगौ
'स्वामिन्! कस्य भवांस्तथाऽस्य कुरुते मन्त्रस्य तूच्चारणम्?।
मह्यं चापि करोतु साम्प्रतमदोमन्त्रोपदेशं भवान्
(नामी तिष्ठति सम्मुखे न सततं नाम स्मृतौ स्यात्परम्)।।२०१८।।

का माया भवता ममोपरि कृता (न ज्ञायते) साम्प्रतं,
हिंसालुण्ठनतस्तथाह्यपसृतं सम्पूर्णतो मे मनः।
अस्म्यप्यद्य भवत्पदोस्तु शरणे श्रीकृष्णसंकीर्तनं
स्थित्वा कर्तुमहो! लषामि सततं (त्रा कीर्तनीयो हरिः)।।२०१९।।

दत्तां मे नरभाग्य! साम्प्रतमदोमन्त्रोपदेशं भवान्,
जातं ब्राह्मणवंश एव भगवन्! मज्जन्म कामं परम्।
हिंसालुण्ठनकर्म केवलमहं चक्रे निमायिप्रभो!
बाल्यादेव (मनुष्यताऽवगतिता सत्सङ्गतो ह्यात्मनः)।।२०२०।।

एतत्कर्मभरान्न कर्हिचिदपि त्वद्यावधिं प्रोद्गतं
वैराग्यं मम मानसे,ऽद्य तु परं (न ज्ञायते) मेऽत्र किम्?।
जातं दर्शनतो निमायिभवतो, यद् भद्रमेवाधुना
किञ्चिन्न स्वदते, पदे न भवतस्त्यक्ष्याम्यहं साम्प्रतम्।।१२२१।।

दत्वा रजो निजपदोः कुरुतां कृतार्थं,
यन्मन्त्रकीर्तनविधेर्भवति त्वियांश्च।
आनन्दमग्नहृदयः, कृपया विधत्तां,
तस्योपदेशमपि मे शरणागतस्य'।।२०२२।।

गौरस्तस्य महाप्रभुः कथयति श्रुत्वाऽऽर्तवाणीं तथा
'नौरोजी! ननु विद्यसे त्वतिशयस्त्वं भाग्यशाली नरः।
वार्धक्येऽत्र तवात्मनीह यदहो! निर्वेद एवन्त्वभूद्
(वैराग्यं यदि, तत्तु भाग्यमपरं, वार्धक्यकालेऽपि नुः)।।२०२३।।

श्रीकृष्णस्य सुकीर्तनं जगति वै सार,स्तथा नश्वरं
सर्वं तु क्षणभङ्गुरं ननु धनं रत्नं जगत्यामिदम्।

याहि त्वाकुलतां न, कौ तु भगवानाह प्रतिज्ञायुतं
''कामं कोऽपि भवेत्कियानपि दुराचारी महान्नो कथम्?।।२०२४।।

लोकेऽनन्यकभावतो भजति मां चे,त्साधुरेव त्वसौ
मन्तव्यः'' परमां तवोपरि कृपां चक्रे दयालुर्हरिः।
सद्बुद्धिं तव यद् ददा,वविरतं नाम्नो हरेः साम्प्रतं
कुर्वन् कीर्तनमेव तिष्ठ' (रसनाद्वारात्मनः स्वाद्यते)।।२०२५।।

एवं ह्युपदिश्यादाच्छ्रीप्रभुरस्मै।
गौरो महतः श्रीमन्त्रस्य सुदीक्षाम्।।२०२६।।

उत्थाय प्रभुरेष तच्च चलितुं प्रातोऽभवत्प्रस्तुतो,
नौरोजी त्वपि चास्त्रशस्त्रमखिलं चिक्षेप तत्स्वं तथा।
आहूय स्वगणस्य सर्वपुरुषान् ब्रूते स रुद्धस्वरा-
'देतावन्ति वयं दिनानि निखिलाः सङ्गेऽवसन् भ्रातरः!।।२०२७।।

आज्ञां वो ह्युचितं तथाह्यनुचितं काले ददानोऽभवं
काले, यूयमपीह किञ्चिदपि नो कृत्वा च चिन्तां तथा।
प्राणाना,मकुरुध्वमत्र तु ममाऽऽज्ञापालनं सर्वत,-
स्तन्नित्यव्यवहारतो ननु तथा सङ्गस्थितेः सर्वदा-।।२०२८।।

अस्त्येव स्खलिताऽपराधभवनं स्वाभाविकं, भ्रातर-
स्तद्यस्यापि भवेत्तु कश्चन मया जातोऽपकारः, स माम्।
शुद्धेन क्षमतां तथाहि मनसा, गच्छाम्यहं साम्प्रतं
स्वश्रीमद्भगवत्पदाब्जशरणं (सत्याश्रयः श्रीहरिः)।।२०२९।।

स्थाने यच्छरणे तथाहि गमनात्पापस्तु पापादपि
प्राणी व्याकुलमानसो ननु सुखी सन्निर्भयो जायते।
कर्ता सम्प्रति हिंसनं परमहं कस्यापि जीवस्य नो,
सर्वोऽद्योदिवसात्तथा मम कृते प्राणी परस्यात्मनः।।२०३०।।

पुत्रो वै परमस्य तस्य च पितुः, सम्प्रत्यहं कामतः
कर्तैकस्य पिपीलकस्य तु वधं नो, बाल्यकालादहम्।
यावत्सम्प्रति पापकं धनकृते चक्रे न जाने किय,-
द्धिंसास्ताः कियतीः (करोति पुरुषस्त्वर्थस्य हेतोर्न किम्?)।।२०३१।।

एताभ्यां ननु लुण्ठितं जनभरात्कोट्यर्बुदं रूप्यकं
हस्ताभ्याञ्च तथा व्ययीकृतमहो!, द्रव्यस्य कर्ताऽधुना।
नाहं स्पर्शमपि स्वपाणियुगलाद्यावत्त्विदानीं तथा
लोकानां प्रतिपालनं स्म भवति स्नेहात्सहस्रं मया।।२०३२।।

जातोऽदोदिवसात्परं स्वयमहं कौ भिक्षुकः, स्वोदर-
ज्वालाशान्तिकृतेऽधुना मधुकरीभिक्षां विधाता त्वहम्।
द्वारि द्वारि, तु मां क्षमध्वमपरं यूयञ्च दत्ताऽऽशिषं
मह्यं तादृशमद्य (भद्रमपरं भद्रात्मलोकाशिषा)।।२०३३।।

कृष्णप्रेम्णि यदेवं मत्तोऽहं ननु भूत्वा।
शेषं जीवनकं स्वं प्रीतात्मा क्षपयेयम्'।।२०३४।।

नौरोजीवचनं तथाऽस्य गणगाः श्रुत्वाऽखिला दस्यवः
स्थानेऽरोदिषु,रस्य तादृशगणश्छिन्नश्च भिन्नोऽभवत्।
त्यक्तं लुण्ठनकर्म तेषु बहुभिः, सङ्गे चचाल प्रभो-
र्नौरोजी स (निमायिनोऽनुचलनश्रद्धालुरत्राऽपरः)।।२०३५।।

यावत्सम्प्रति गौरसङ्गचलनाऽऽकाङ्क्षार्थनां चक्रिरे
श्रेयांसो बहवो जनाः, परमसौ सङ्गे न चक्रे प्रभुः।
कञ्चिच्चापि, कियत्तु कोऽपि कुरुतां भाग्यप्रशंसां तथा-
नौरोभाग्यवतो-(ऽमलात्ममृदुतां जानात्यमायिप्रभुः)।।२०३६।।

सङ्गे चलनकाऽनुज्ञां प्रभुरदात्।
यस्मै सह मुदा (कश्चिद् वरभगः)।।२०३७।।

अग्रेऽग्रे च महाप्रभुस्तदनुगो गोविन्ददासस्तथा
पृष्ठे चेलुरसौ पुनस्तदुभयोर्नौरोजसंन्यासिकः।
प्राप्तास्ते ननु खण्डलामथ तथा सङ्गे चलन्तः, प्रभोः
सत्कारं बहु चक्रिरेऽत्र सुजनाः (सौजन्यकं सत्कृतिः)।।२०३८।।

गौरो नासिकमेष साम्प्रतमितस्तस्माच्चलित्वा प्रभुः,
कुर्वाणोऽत्र च नृत्यकीर्तनमहोऽद्धा पञ्चवट्यां रतः।
आनन्दे, च पुनः पुनः प्रभुतनोः स्वेदाम्बुकं मार्जय-
न्नौरोजी भवति स्म (सङ्गतिसुखं ह्यास्वाद्यते सेवया)।।२०३९।।

तत्कालीयवरोदरानृपमहाराजस्तु भक्तो महा-
न्नासी,च्छ्रीभगवत्सुमन्दिरमतिद्रव्यप्रयोगेण सः।
श्रद्धालुः कृतवानभूद्, भगवतः पूजां तथा सत्कृतिं
तस्मिन् साधुमहात्मनां स्म कुरुते स्थाने स्वयं त्वेव च।।२०४०।।

श्रीकृष्णस्य सुमूर्तिदर्शनमसौ कृत्वा निमायिप्रभुः
प्रेमानन्दरतो ननर्त, स महाराजस्तु तस्याद्भुतम्।
नृत्यं लोकविलक्षणञ्च सुहृदोऽद्धा प्रेमभावं तथा
मुग्धोऽभूत्तु विलोक्य, सोऽकृत महासत्कारमस्य प्रभोः।।२०४१।।

चक्रेऽसावुपहर्तुमस्य विविधं वाञ्छां प्रभोर्वस्तुकं,
जग्राहैष न मुष्टिभिक्षणमृते संन्यासधर्माध्वना।
किञ्चिच्चापि परन्तु, नश्वरमिदं स्वं गात्रमस्याऽऽमुखे
नौरोजी विजहौ वरोदरपुरं चागत्य चैव, प्रभुः-।।२०४२।।

एकभक्तवैष्णवाभमात्मबन्धुतुल्यमत्र।
तं रुदन् समाधिसुप्तमात्मपाणिनाऽकृताऽथ।।२०४२।।

एवं हिंसकवित्तलुण्ठकस्त्वेको जन्मत एव दस्युकः।
आगत्याः! शरणे महाप्रभोः सौहार्दाश्रयणाद्गतोऽमरः।।२०४४।।



# नीलाचले प्रभोः प्रत्यागमनम्

११३. परमं धाम श्रीचैतन्यः कलनीयोऽन्तःकरणे।
उन्मत्तः श्रीकृष्णकीर्तने भक्तसमूहविलसितः
अविरतमुच्चरति श्रुतिमधुरा यन्मुखतः प्रियसंज्ञा।
करुणाश्रयकनकोज्ज्वलगौरश्रीसहृदयवरललितः
श्रीमद्भक्तिप्रेममहोदधिपर्यायाऽमलचन्द्रः।।

चैतन्यश्च वरोदराप्रचलितः प्राप्तो निमायिप्रभु-
गौराङ्गोऽहमदाख्यबादनगरं, स्थानेऽत्र गौरप्रभोः।
वङ्गीयौ प्रियवैष्णवौ च मिलितौ, ताभ्यां विदित्वा नव-
द्वीपोदन्तमहो! पुनर्ननु जजागाराऽस्य पूर्वस्मृतिः।।२०४५।।

एतौ द्वारवतीकृते स कुशलक्षेमं च पृष्ट्वा प्रभुः
प्रस्थानं कृतवान्, प्रयाय सुमनाः श्रीद्वारकामन्दिरे।
आनन्दे प्रियनृत्यकीर्तनमहो! मग्नस्तु कुर्वन् बभौ
(श्रीकृष्णेश्वरता तथा प्रकटिता गौरासमोर्ध्वप्रिया)।।२०४६।।

गौरः सागरतीरभूमिपथतः क्षेत्रं प्रभासं ततः
प्राप्तः सम्प्रति सोमनाथशिवजीसंदर्शनार्थं प्रभुः।
प्राची यत्र सरस्वती, भ्रमणकं कृत्वैवमस्य स्पृहाऽ-
भूत्तीर्थेष्वखिलेषु सम्प्रति पुनर्नीलाचलाभ्यागतेः।।२०४७।।

गोदातटमार्गाद्विद्यानगरं तत्।
भूयोऽयमथाप्तः (सत्सुस्मृतिराप्तः)।।२०४८।।

लब्ध्वैवागमनस्य साम्प्रतसमाचारं प्रभोस्तत्क्षणं
रामानन्दकरायभागवत-ना तद्दर्शनार्थं तथा।
धावन्नागतवान्, प्रभुः स्म कुरुते तद्गाढमालिङ्गनं,
प्रोचे रायमहाशयः सविनयं (धन्यः, सता चीयते)।।२०४९।।

'न त्वं विस्मृतवान् प्रभोऽधममिमं यावत्तथा साम्प्रतं
स्थानेऽस्ति स्मृतिरस्य ते च हृदयेऽदश्चिन्तयित्वा,ऽस्ति मे।
स्वाङ्गेषु प्रमुदा न फुल्लनसमावेशः, पुनर्दर्शनं
दत्वा वस्तुत एव मां निजकृपापात्रं तु चक्रे भवान्'।।२०५०।।

‘आसीद्रायमहाशयैव भवतः संदर्शनान्मेऽखिलं
तीर्थं जातमहो! तथाहि सफलं स्थाने यथार्थे त्व,पि।
भूयस्तादृशमेव तेषु गतवानन्येषु तीर्थेष्वहं
(तीर्थेषु भ्रमणं तथाहिं समुदाचारोऽस्ति संन्यासिनाम्)।।२०५१।।

आसील्लब्धमहो! तथा मम भवत्सङ्गेऽत्र यावत्सुखं
क्वाप्यन्यत्र निमायिनो न मिलितं तावद्, भवत्सन्निधौ।
आनन्दञ्च तमेव लब्धुमधुना प्राप्तोऽस्मि भूयस्त्वहं,
(शास्त्रे लौकिकसूक्तिरस्ति–कुरुते लाभो हि लोभोन्नतिम्)।।२०५२।।

लाभो नुर्भुवि यावदेव भवति स्थानेऽधिकं वर्धते
लोभश्चेतसि तावदेव, तदहो! प्राप्तस्त्वहं साम्प्रतम्।
सञ्चिन्त्यैवमिदं तथैव भवतः स्थित्वा च सङ्गेऽनिशं
तस्यानन्दरसस्य सौहृदवतः स्यां संदधत्स्वादनम्’।।२०५३।।

रामानन्दमहाशयः कथयति त्वत्यन्तसङ्कोचतः
‘कृत्वाऽऽज्ञां भवतः प्रभो! निजशिरोधार्यां ययाच त्वहम्।
दातुं मे ह्यवकाशमद्य च महाराजं त्वदःशासनात्,
स स्वीकृत्य ममार्थनां सुमनसो मामाजुहाव प्रभो!।।२०५४।।

लब्धं सम्भवतः स्यात्सौभाग्यं त्वधुना मे।
त्वत्पादे वसनस्य’ (श्रीप्राप्तिः समयेन)।।२०५५।।

‘आगत एव ततोऽहं, सम्प्रति यामि पुरीं तु।
एव विधाय भवन्तं स्वे सहितं सुहृदाप्तम्’।।२०५६।।

ऊचे रायमहाशयो विवशतां किञ्चिद्यथा दर्शयन्
‘मत्सङ्गे चलने निमायिभवतः कष्टं भवेत्तु प्रभो!।
शेषं सम्प्रति राजकार्यकरणं भूर्यस्ति मे त,त्पुन-
र्हस्त्यश्वाः परिचारका बहुतराः सङ्गे चलिष्यन्ति मे।।२०५७।।

सर्वैः समं तैर्भविता हि कष्टं
निमायिनस्ते, तत एव पूर्वम्।
पुरीं भवानेकल एव यातु,
ह्यायामि भूयोऽस्म्यपि पृष्ठतस्तु’।।२०५८।।

एतद्रायमहाशयस्य वचनं गौरेण च स्वीकृतं,
तद्विद्यानगरे दिनानि सुमनाः स्थित्वा त्रिचत्वारि च।
प्राप्तः सोऽयमलालनाथमधुना तेनैव येनाऽध्वनाऽऽ-
यातः (सौम्यनिमायिसाधुसरणिर्नो याति हि व्युत्क्रमम्)।।२०५६।।

प्राप्ते सोऽयमलालनाथविषये तत्कृष्णदासाध्वना
श्रीनित्यादिसमीपमागमसमाचारं स्वकीयं प्रभुः।
व्यस्राक्षी,दथ ते स्थिताः प्रभुकृते तद्वत्प्रतीक्षास्थितौ
सीतान्वेषणहेतुमङ्गदमुखास्त्वासन् यथा वानराः-।।२०६०।।

यातश्रीहनुमत्प्रतीक्षणकृते चोल्लङ्घ्य वारान्निधिं
कूलेऽब्धेर्ननु संस्थिताः, प्रभुसमाचारञ्च लब्ध्वैव ते।
धावन्तः प्रभुमेलनाय निखिला भक्ताश्च नित्यादयः
प्राप्ता, दूरत एव चाध्वनि तथाऽऽयान्तं तमैक्षन्त ते।।२०६१।।

दृष्ट्वैवाऽऽत्ममहाप्रभुञ्च निखिला भूमिं विलुट्य प्रभोः
साष्टाङ्गं पदयोः प्रणेमु,रखिलान् हस्तद्वयेनात्मनः।
उत्थाप्य क्रमशश्च तान् प्रभुरहो! तेभ्यो निमायी ददौ
प्रेमालिङ्गनदानमेष (न भवे सौहार्ददानाधिकम्)।।२०६२।।

प्रेमालिङ्गनकं तु ते प्रभोः पश्चादद्य विलभ्य वर्षयोः।
मग्नाः प्रेम्णि, तथाहि पृष्ठतः मुञ्चन्तोऽश्रु मुदो ययुः प्रभोः।।२०६३।।

अस्मिन्नेव तथान्तरे च पुरतः श्रीसार्वभौमो बुधो
गोपीनाथसुधीश्च सम्प्रति तथाऽऽयान्तौ हि दृष्टौ प्रभोः।
अस्तव्यस्तदशो विधातुमलषच्छ्रीघ्रं प्रधाव्य प्रभुः
संश्लेषं तु तयोः, परं प्रभुपदे तत्पूर्वमेवाऽऽगतौ।।२०६४।।

श्रीचैतन्यमहाप्रभुः स्वयमहो! तूत्थापयामास तौ,
संश्लेषं कृतवांस्तयोर्ननु रजो लग्नं तदीयाम्बरे।
हस्ताभ्याञ्च निजस्य मार्ष्टि, निखिला लोकाः प्रभोः पृष्ठत-
श्चेलु-(र्नेतृविशेषभूषितगणो धत्तेऽसमानच्छटाम्)।।२०६५।।

सर्वादौ च महाप्रभुः प्रियजगन्नाथापरप्रेयसो
यातो दर्शनहेतवे, परिचरा गौरप्रतीक्षास्थितौ।

तत्रत्या ननु चिन्तिता इव सदाऽभूवन्, प्रभोरागतेः
श्रुत्वा वृत्तममी तथाहि सहसा, सर्वे मुदाऽनर्तिषुः।।२०६६।।

साष्टाङ्गं कृतवान्नतिं भगवतः कुर्वन् बभौ च स्तुतिं
वैविध्येन तथा प्रभु,र्ननु ददावागत्य तत्पूजकः।
मालाया उपहारमस्य सुहृदः स्थाने प्रसादस्य च
(श्रीमन्मन्दिरपूजको हि भगवन्नैवेद्यसत्कारकः)।।२०६७।।

लब्ध्वाऽयं पुरुषोत्तमप्रियतमप्रेयोजगन्नाथजी-
दिव्यस्वादुमहाप्रसादमधुना पश्चात्तथाऽह्नो बहोः।
प्रीतोऽत्यन्तमहो! जघास तरसा स्थाने प्रसादं प्रभु,-
(स्तादृग्वस्तुतथाक्षणग्रहणतो दातृप्रसादार्जनम्)।।२०६८।।

कुर्वन्नेष परिक्रमामथ सह श्रीमन्दिरस्य प्रभु-
र्भट्टाचार्यकसार्वभौमवसतिं भक्तैः प्रियैरागतः।
भिक्षार्थं तममुं निमन्त्रितमथ श्रीसार्वभौमोऽकरोद्,
भिक्षां कारितवांस्तथाहि सहितं सर्वैः स भक्तैः प्रभोः।।२०६९।।

कृत्वा विमर्शं प्रभुवासहेतोः
प्रतापरुद्रेण महानृपेण।
चक्रे प्रबन्धं बुधसार्वभौमः
स्थाने रहः पूर्वत एव सम्यक्।।२०७०।।

श्रीमद्राजपुरोहितस्य वै काशीमिश्रसतश्च सन्निधौ।
तत्स्थानं प्रभुसुप्रतीतिम,त्तस्मिन्नेव वसन्नसौ बभौ।।२०७१।।



# प्रेमरसलोलुप-भ्रमरभक्तानामागमनम्

११४. भ्रमरो रसलुब्धः परिभ्रमति।
रजःप्रधाने संसृतिलोके क्रियावृत्तिरखिलानाम्
वस्तुसंग्रहाविष्टाः प्रायः, केचिद् भावाऽऽग्रहिणः।
स्थायिव्यक्ती रसनिष्पत्तिर्भावैर्भावकहृदये
प्रियतमरसदीपकलोकोत्तरसङ्गोत्कण्ठी विरलः।।

अन्तर्धाय धर क्षितौ कियदपि स्थानेऽत्र कस्तूरिकां,
तद्गन्धस्तु परं स्तृणाति नियतं, ना तत्प्रभावप्रियः।
दूरादेव हि वेत्ति यत्त्विह तथा कस्तूरिका विद्यते,
(वस्तूत्कृष्टमिहाऽऽप्यते सहृदयैस्तद्ग्राहकैस्तादृशैः)।।२०७२।।

तत्सत्प्रेम विशेषवस्तु न तिरोधानात्तिरोधीयते,
प्रेम्णो नास्ति तथा प्रयोजनमहो! विज्ञापनस्यावनौ।
संसारे मधुलोलुपभ्रमरक,स्त्वेव प्रभिन्नेऽम्बुजे,
स्वच्छस्य स्वयमेव सौरभवतस्तस्योपरि क्रामति।।२०७३।।

भव्यस्तत्र रसो, द्विरेफजगतः का न्यूनता?, चानलं
दग्ध्वा शीतदिनेषु तिष्ठतु तथैकाकी स्वतन्त्रस्थले।
भावी तत्र तु पुञ्जितः स्वयमहो! तत्तापसेवी जनो,
ह्वानावश्यकता न तस्य भविता (नाऽऽर्तस्तथाऽऽहूयते)।।२०७४।।

तत्प्रेमार्णवगौरसौहृदवतः स्थित्वा तु यः सङ्गतौ
पूर्वं प्रेमरसस्य संविहितवान् पानं, परत्र स्थले।
कामं तस्य रसः स कुत्र मिलितुं भावी क्षमस्तं विना
(पूर्णेन्दौ ह्युदिते महोर्मिरपरा रत्नाकरे जायते)।।२०७५।।

तस्यातुल्यरसस्य यच्छ्रवणयोश्चापि प्रशंसाऽपतत्
स्थाने तद्रसराजसागरसतः संदर्शनायैव ते।
भूत्वाऽऽसन्ननु लोलुपाः, कटकभृद्रुद्रप्रतापो महा-
राजोऽपि प्रभुशंसनश्रवणतः श्रीसार्वभौमाननात्।।२०७६।।

भूत्वाऽत्यन्तसमुत्सुकस्तु सुहृदः संदर्शनार्थं प्रभो-
रासी,न्मन्दिरसेवकाः प्रभुजगन्नाथस्य ते तेऽखिलाः।

पुर्यास्ते बहु गण्यमान्यपुरुषाः सन्तस्तथा साधवो
नाना दर्शनलिप्सवः सुमनसश्चासन्निमायिप्रभोः।।२०७७।।

पुर्यामागतिकस्य वृत्तमधुना श्रुत्वा च गौरप्रभो-
र्भट्टाचार्यकसार्वभौमसहिताः प्राप्ता बहु प्रेमिणः।
गौराङ्गेण च मेलितुं तु पुरुषा,श्चासत्तुमूचे प्रभुः
सर्वान् प्रेमपुरस्सरं (व्यवहृतौ प्रेमक्षुधैवाऽभितः)।।२०७८।।

कृत्वा ते प्रणतिं प्रभोश्चरणयोः सर्वे निषण्णास्ततः
सर्वेषाञ्च पृथक् पृथक् परिचयं भौमोऽभवत्कारयन्।
भट्टाचार्यमहाशयः प्रभुकृते, सोऽदात्तु सर्वादितः
काशीमिश्रसदात्मनः परिचयं (न्यासी हि काशीप्रियः)।।२०७९।।

'सोऽयं राजपुरोहितः कुलगुरुः श्रीकाशिमिश्रो महा-
राजस्यास्ति, तथा प्रभोश्चरणयोरस्यानुरागो दृढः।
यातेऽतो भवतीह दर्शनकृते भूत्वा यथोत्कण्ठितो
भूर्येवाऽवसदेष (दृष्टिरपरं द्रष्टुं सतो ह्युत्सुका)।।२०८०।।

गेहमिदं यस्मिन् प्रभुरस्ति। सम्प्रति, चास्यैवास्ति सुपुंसः'।।२०८१।।

सत्प्रेमान्वितवीक्षितेन सुमना मिश्रोन्मुखं तु प्रभुः
पश्यन्नाह 'सुदर्शनेन भवतो धन्यो गतो मिश्रजी!।
अद्याऽहं, पितृसन्निभो मम भवान्, स्थित्वाऽस्मि भक्तैः समं
कुर्वन्नत्र भवद्गृहे प्रियतमश्रीकृष्णसंकीर्तनम्।।२०८२।।

कालयापनं तथाहि कर्ता, नित्यदर्शनं तवास्मि लब्धा।
मत्कृते त्वितोऽधिका किमन्या भाविनीह भागधेयवार्ता'।।२०८३।।

ऊचे बद्धकरो विनीतसुमनोभावात्तु काशीद्विजोऽ-
त्यन्तं 'गेहमिदं प्रभो! तु भवतः सेवाक्रियायै सदा।
दासोऽसावपि पार्श्वमेव भविता स्थायी भवत्पादयोः
(सत्पार्श्वस्थितिमत्र तस्य कृपयैवाप्नोति लोकः सतः)।।२०८४।।

बुद्ध्वाऽऽत्मीयनिजं तु सेवकं याप्याज्ञाऽस्तु तथा भवानिमम्।
निःसङ्कोचहृदा करोतु तां' (सङ्कोचः सुहृदोः किमन्तरे?)।।२०८५।।

तत्पश्चाच्च जनार्दनो हरिजगन्नाथान्तरङ्गक्रियः,
श्रीमत्काञ्चनयष्टिधृग् भगवतोऽद्धा कृष्णदासः पुनः।
अग्रे मातिशिखी प्रधानलिपिको भ्राता मुरारिस्तथा
माध्वी तच्छिखिनः स्वसा प्रहरिराजाख्यो महापात्रकः।।२०८६।।

एषां कारितवान् प्रभोः परिचयं, प्रद्युम्नमिश्रस्तथा,
भट्टाचार्यमहाशयः प्रभुजगन्नाथस्य सेवात्मनाम्।
लब्ध्वा गौरमहाप्रभुः परिचयं सर्वस्य, तच्छंसनं
कुर्वन्नस्ति (तथाप्रियात्ममनसामन्यप्रशंसैव वाक्)।।२०८७।।

'धन्याः सन्ति भवन्त एव भगवत्सेवार्चनायामहो!
तिष्ठन्त्यत्र निरन्तरं रतहृदः संसक्तसर्वात्मना।
कर्तव्यं त्विदमेव चास्ति भुवने मुख्यं मनुष्यात्मनां
कर्मान्यन्नहि चिन्तयेत्तु भगवत्सेवां विहायाऽऽत्मना'।।२०८८।।

सर्वे तत्प्रभुपादयोः प्रणमनं कृत्वा तदाज्ञां तथा
लब्ध्वा स्थानमयुर्निजं निजममी भक्ता,स्ततः सेवकम्।
यात्रायां निजसङ्गगामिनमसौ तं कृष्णदासं प्रभु-
स्त्वाह्व,त्तत्र तथाऽऽगते कथयति श्रीसार्वभौमं बुधम्।।२०८९।।

लक्ष्यीकृत्य तमत्र 'भट्टसुमनः! सङ्गे भवद्भिस्तु मेऽ-
दोहेतोः प्रहितस्तथैष, यदसौ मेऽचेतनावस्थितौ।
कुर्याद्वीक्षणपालनन्तु वपुषः, सेवां चकाराऽधिकं
शुश्रूषां मम वै यथाबलमसौ (सेवाक्षमः कोऽपि ना)।।२०९०।।

साधूनां कतिचित्पुनः परमसौ स्थाने तु पाषण्डिना-
मेकस्मिन्ननु वञ्चनेन विधृतोऽद्धा कामिनी-काञ्चने।
लोभे, मामपहाय चैष चलितस्तेषां हि सङ्गेऽसतां,
लोभः काञ्चनकामिनीविषयको यस्यास्ति, यो निग्रहम्।।२०९१।।

शक्तो नापि निजेन्द्रियेषु भुवने कर्तुं त्वियन्तं, पुनः
पार्श्वे तद्धरणं निजे समुचितं मन्ये न, तस्माद् भवान्।
एतं जल्पतु, यातु यत्र मनसोऽस्येच्छाऽस्तु, नो साम्प्रतं
सङ्गे स्थातुमसौ क्षमो मम' (तथा तिष्ठेद्यथेच्छं नरः)।।२०९२।।

श्रुत्वैवं वचनं प्रभोर्बहु तथोच्चैः कृष्णदासोऽरुदत्,
स्वीचक्रे न तु तत्स्वसङ्गधरणं गौरः प्रकारेण सः।
केनापीह पुनः, स नित्यशरणं यातो निराशस्तदा,
धृत्वा तच्चरणौ रुरोद (सुहृदा लभ्यो निमायिप्रभुः)।।२०६३।।

आसन्नेतदहो! वचः सुमनसस्ते चिन्तयन्तोऽखिला
भक्ता नित्यमुखाः 'कथं ननु नवद्वीपे पुनश्चापयेत्।
संप्रत्यागमवृत्तमस्य सुहृदः स्थाने प्रभोस्तीर्थतः
(कार्यं वृत्तविसारणं प्रथमतः संबन्धिलोके प्रिये)।।२०६४।।

सर्वे गौरवियोगदुःखविकला भक्ता नवद्वीपगा
तिष्ठन्त्यद्य, निजप्रियात्मजसमाचारं न किञ्चित्त्वपि।
लब्ध्वाऽधीरमना भवेन्ननु शची माता, तु विष्णुप्रिया-
सत्या याद्युगवद् भवेत्प्रतिदिनं (कालो वियोगे महान्)।।२०६५।।

तद्द्वीपे विसृजेम किं नहि नवेऽमुं कृष्णदासं, प्रभो-
राज्ञापालनमप्यतस्तु भविता, शोकाब्धिमग्नात्मनाम्।
भक्तानामपि नूतनश्च परमानन्दोऽखिलानां तथा'
सञ्चिन्त्येदममी स्फुटं निजमनोभावं प्रभोश्चक्रिरे।।२०६६।।

'श्रीपादाऽस्मि तु नर्तकोऽत्र भवतोऽद्धा नर्तयिष्ये तथा
लोके नर्तयिता यथा, नहि भवद्वाञ्छाविरुद्धं क्षमः।
कर्तुं किञ्चिदहं, यदेव भवतः साधु प्रतीतं भवेत्,
कुर्वीताऽत्र तदेव' (सौहृदवतः कार्यं प्रशस्यं सदा)।।२०६७।।

नित्यो जल्पति दीनभावहृदयः 'कर्तुं तथोल्लङ्घनं
नाज्ञाया भवतः प्रभो! वयमथेच्छामो, यथाज्ञां भवान्।
कर्ता,ऽस्यास्तु सहर्षपालनमहो! तावत्करिष्यामहे,
सत्यां तेऽनुमतौ निमायिनदियाप्रेष्यस्त्वसौ, नान्यथा'।।२०६८।।

'अस्तीह तावद्भवतो यदेच्छा
जानातु चैवानुमतिं तदा मे।
इच्छाविरुद्धा भवतो न वै स्या-
न्निमायिनो मेऽनुमतिः कदापि'।।२०६९।।

लब्ध्वाऽऽज्ञां सुहृदः प्रदाय च जगन्नाथप्रसादं प्रभो-
र्व्यस्राक्षीन्नदियां स नित्ययतिकस्तं कृष्णदासं ततः।
नित्याऽऽज्ञां च विलभ्य च प्रभुपदे कृत्वा नतिं तन्नव-
द्वीपाय प्रचचाल कृष्णभृतको (नामाऽपि नुः स्यात्प्रियम्)।।२१००।।

पुर्यामत्र महाप्रभुर्नियमितं स्थित्वा च भक्तैः समं
संकुर्वन् भजनञ्च कीर्तनमभूदागत्य भक्ता बहु।
पुर्याः श्रीप्रभुदर्शनेन सुजनाश्चक्रुः कृतार्थं स्वकं
(स्थाने लोकसमूहपुण्यबलतः सन्मानवोपस्थितिः)।।२१०१।।

रामानन्दपिता यदा नृपभवानन्दः प्रभोरागतेः
शुश्रावास्य निमायिसौहृदसमाचारं तदा त्वात्मनः।
सार्धं पुत्रचतुष्टयेन सहितः प्राप्तः स तद्दर्शने,
लब्ध्वा तस्य महाप्रभुः परिचयं त्वत्यन्तमानन्दितः।।२१०२।।

ऊचे च प्रकटं प्रसन्नहृदयो 'यस्यात्मजः कौ भवेद्-
रामानन्दसमः सुतो हि भगवद्भक्तो, महात्मा त्वसौ।
देवानामपि वन्दनीयपुरुषो, धन्योऽस्ति सत्यं भवान्
(धन्यः पुत्रनिमायिसौहृदगुणैः कश्चिद् गृहस्थः क्षितौ)।।२१०३।।

साक्षात्पाण्डुमहानृपात्मतुलितः संविद्यते वै भवान्,
पुत्राः पञ्च तथैव चात्र भवतोऽद्धा पाण्डवाः पञ्च ते।
रामानन्दसुतो युधिष्ठिरसमः सत्यप्रतिज्ञस्तथा
धर्मात्मा भगवत्प्रियो (हि भगवान् प्रेयांस्तथा कस्यचित्)।।२१०४।।

तथाऽस्ति पत्नी भवतो हि कुन्ती-
देवीसमा स्पष्ट,मभूत्प्रमोदः।
सार्धं मिलित्वा भवता,ऽत्र रामा,-
नन्दाभमेवात्मसुतं धरेन्माम्'।।२१०५।।

ऊचे बद्धकरस्ततो नृपभवानन्दोऽ'स्मि शूद्राधमो,
नाऽदोऽसीमकृपाऽधिकारिपुरुषं मन्ये कदाचित्त्वपि।
आत्मानं सुहृदः प्रभो,र्ननु भवान् भक्तात्मनां वत्सलः,
सत्प्रेमिन्! पतितात्मपावनपदं सिद्धं भवन्नाम च।।२१०६

कृत्वा दर्शयितुं तदेव सुमनो! नामात्मनः सार्थकं
तत्संसारिणि मादृशे विषयिणि स्थाने नरेऽहैतुकीम्।
अद्यत्वे कुरुते भवान्निजकृपां भ्राम्यन्, प्रभो! प्रार्थना
श्रीपादे त्वियमेव चात्र भवतो भूयो हि भूयो मम।।२१०७।।

दत्तामात्महृदो निजाङ्घ्रिशरणं त्वस्याधमस्या,त्मनो,
दासोऽहं भवतस्तथा चरणयोः सार्धं कुटुम्बेन च।
निःसङ्कोचहृदा गृणातु समये याऽऽज्ञाऽपि यस्मिन् भवेत्'
(सौभाग्यं हि महत्सदात्मपुरुषाऽऽज्ञापालनस्य क्षणः)।।२१०८।।

उक्त्वेदञ्च नियुक्तवान्नृपभवानन्दः कनिष्ठं स्वकं
वाणीनाथसुतं प्रभोः सुमनसः सेवाकृतेऽहर्निशम्।
वाणीनाथमसौ सदात्मजमहोऽद्धा स्वीचकार प्रभु,-
र्वाणीनाथयुवाऽधिकांशमवसत्सेवासु चैव प्रभोः।।२१०९।।

(कृष्ण-)श्चात्र महाप्रसादसहितोऽसौ कृष्णदासो नव-
द्वीपे चापयति स्म सम्प्रति शचीमातुः समीपे पुरा।
तिष्ठन्ती सुतमेव चात्र जननी सञ्चिन्तयन्ती सदा
लब्ध्वा स्वप्रियलाडलात्मजसमाचारं मुदि व्यापृता।।२११०।।

कुर्वाणाऽश्रुविमोचनं समभव,च्चागत्य विष्णुप्रियाऽ-
पि श्वश्र्वास्तु समीपमास्त, जननी पप्रच्छ चैकैकशः।
पुत्रस्याखिलवृत्त,मेष च समाचारः क्षणादेव वै
सम्पूर्णे नगरे सृतः (सुमनसो गन्धः सरत्यात्मनि)।।२१११।।

आगत्यात्र च सर्वतः सहृदया दिग्भ्योऽजिरे तच्छची-
मातुः श्रीहरिकीर्तनं त्वकृषत स्थाने निमायिप्रियाः।
आनन्दस्य निकेतनं ननु शचीमातुः सपद्येव तद्-
गेहं यात-(महो! निमायिसदनं लोकेऽपरानन्ददम्)।।२११२।।

भक्तास्ते विदिशो दिशो दश शतं संगुञ्जयन्ति स्म च
व्योमव्यापिनिमायिभिर्हरि-हरि-ध्वानैस्तथानन्दिभिः।
कश्चित्पृच्छति देहवृत्तमपरः श्रोतुं ललाष प्रभो-
र्यात्रावृत्त,मसौ कदा निजनवद्वीपं तथाऽऽयास्यति?।।२११३।।

कश्चिद् विंशतिवारमेव तु वचस्तत् कृष्णदासं द्विरा-
वृत्तं पृच्छति, साम्प्रतं च विविधं प्रश्नं च सर्वे जनाः।
पृच्छन्ति स्म तथैवमत्र युगपद्वै कृष्णदासं, पुनः
सर्वेषां कुरुते यथाबलमसौ कृष्णस्तथाह्युत्तरम्।।२११४।।

तस्य श्रावयति प्रभोश्च कुशलक्षेमं भणित्वा तथा
यात्राया द्विचतुर्वचश्च, निखिला वार्ताऽवकाशेऽधुना।
श्रीगौरस्य करिष्यते, कथयते, सर्वे मनोयोगतः
शृण्वन्त्यत्र तु कृष्णदासवचनं (श्रोतव्यसक्तिः सताम्)।।२११५।।

एवं स दिवसो यातः सपदि तु। प्रश्नैः प्रभुसमाचारस्य विविधैः।।२११६।।

श्रीवासादिसुभक्तवृन्दमगमत्स्थाने द्वितीये दिनेऽ-
द्वैताचार्यगृहे तु शान्तिपुरके तं कृष्णदासं तथा।
स्वे सङ्गे च विधाय, तैस्तु महतोल्लासेन सार्धं प्रभोः
पुर्यां श्रावितमस्य तत्र पुनरावृत्तेः प्रियं वृत्तकम्।।२११७।।

तेऽदुस्तस्य महाप्रसादमपि च श्रीलप्रभुप्रेषितं,
श्रीगौराङ्गमहाप्रभोः प्रियसमाचारं प्रसादं तथा।
वृद्धाचार्यगुरोस्तथाहि वशतः प्रेम्णस्तु लब्ध्वैव चा-
ङ्गप्रत्यङ्गमहोऽस्फुरच्च निखिलं (सत्प्रेमभावोऽपरः)।।२११८।।

कर्षन्नेष च दीर्घदीर्घमपरं 'हा! गौर! हा! गौर!' च
श्वासं द्रागभिधाय सौहृदभरः सत्प्रेम्णि मग्नो गुरुः।
कुर्वन्नुच्चरवाद् बभूव सुमनाश्चोत्थाय संकीर्तनं
(श्रीगौराध्वनि सर्वभावदिशया संकीर्तनव्यञ्जना)।।२११९।।

प्रेमावेशदशा समाप्तिमगमत्किञ्चित्क्षणानन्तरं,
सर्वैस्तैरितरैः समं सहृदयैर्भक्तैश्च गत्वा पुरीम्।
अद्वैतः प्रभुदर्शनाय तु परामर्शं करोति स्म तद्,
गन्तव्यं द्रुतमेव दर्शनकृते सर्वैः प्रभोर्निश्चितम्।।२१२०।।

अस्माकं नहि विस्मृतोऽस्ति परमानन्दः पुरी साम्प्रतं,
यात्रायां मिलितस्तु दक्षिणभुवोऽसौ श्रीलगौरप्रभोः।
गङ्गास्नाननिमित्तमेष च नवद्वीपोन्मुखश्चागतो
गौराङ्गानुमतो (निमायिसुहृदां योगो न कस्य प्रियः?)।।२१२१।।

एतं प्रार्थितवान् प्रभुः प्रियपुरीमागत्य सङ्गस्थितेः,
स्वीचक्रेऽपि सहर्षमेष तदिदं, प्रस्थापितो गौरतः।
गङ्गादक्षिणतीरतश्च स नवद्वीपं तथाऽऽप्तः, समा-
चारं श्रावितवान् प्रभोर्ननु शचीमातुस्त्विहागत्य सः।।२१२२।।

श्रीसंन्यासिमुखान्निशम्य च समाचारं बभूवाऽधिकाऽऽ-
नन्दो मातुरथ प्रभो,रकृत सा सत्कारमावश्यकम्।
साध्वी साधुपुरीमहायतिसतोऽत्यन्तं, च भक्ताग्रहा-
त्तस्थौ कालमथाल्पमेष तु नवद्वीपे स नन्दः पुरी।।२१२३।।

नीत्वा द्वीपमथागतो ननु यदाऽयं कृष्णदासः प्रभो-
र्वृत्तं, साधुपुरी तदा समभवत्तत्रैव, दूताननात्।
पुर्यामागमनस्य तत्प्रभुसमाचारं च लब्ध्वा पराऽऽ-
नन्दे सम्प्रति वस्तुतस्तु परमानन्दो निमग्नोऽभवत्।।२१२४।।

शीघ्रं शीघ्रमसौ प्रभोश्च निकटप्राप्तेस्तु कुर्वन्नभू-
दुद्योगं, हृदि तेन चिन्तित'महो! कार्या प्रतीक्षा मया।
भक्तानां चलनस्य नो, परममी गार्हस्थ्यभारान्विता,
यात्रोद्योगमहो! तथा रचयतामेषाञ्च मासास्त्वियुः।।२१२५।।

एतेभ्यो ननु पूर्वमेव तदहो! प्राप्य प्रभोर्दर्शनं
कर्तव्यं तु मया' विचिन्त्य तदिदं सङ्गे विधायात्मनः।
एकं ब्राह्मणमेष चात्र कमलाकान्ताख्यभक्तं प्रभोः,
प्रस्थानं कृतवान् पुरीं प्रति तथा मार्गेऽखिलं तीर्थकम्।।२१२६।।

पश्यन्, प्रियपुरीमाप्तो यतिपुरी।
(उत्कोऽलिरिह कौ सौगन्ध्यमयते)।।२१२७।।

प्राप्तः श्रीलपुरीं यतिश्च परमानन्दो महाराजजी
कुर्वंस्तत्प्रभुमार्गणं समभवद्, भूयोऽमुना चिन्तितम्।
'पूर्वं मन्दिरमेत्य तस्य भगवन्नाथस्य संदर्शनं
कार्यं, सम्मिलितं भविष्यति सतस्तत्रैव चिह्नं प्रभोः'।।२१२८।।

सञ्चिन्त्येदमसौ चचाल सरलं श्रीमन्दिरस्योन्मुखं,
श्रीमन्मन्दिरके प्रवेशमयतस्तस्य प्रभुः संवृतः।

सल्लोकैर्बहुभिस्तथैव ददृशे, तामेव काष्ठां पुरी
यातो, दूरत एव साधुयतिकं चायान्तमालोक्य सः।।२१२९।।

उत्थाय प्रणतिं प्रभुः स्म कुरुते पादेऽस्य, चक्रे पुरी
प्रेम्णा तं स्वगले, महापुरुषकावेव प्रसन्नावुभौ।
अन्योन्यं मिलितौ परं, मुदि तथाऽन्योन्यस्तुतिं चक्रतु-
र्मग्नौ (सौहृदसाधुसात्त्विकहृदोः संयोग एवाऽपरः)।।२१३०।।

'स्थातव्यं भगवंस्तथाऽधुना स्थित्वाऽत्रैव पुनः स्वसङ्गतेः।
मां प्रीतं भवता च कुर्वता' (सौभाग्येन सदात्मसङ्गतिः)।।२१३१।।

ऊचे श्रीलपुरी मुदं प्रकटयन् 'किं मेऽस्ति चात्रागते-
रन्यत्तादृशकं प्रयोजन,महं त्वत्रागतः केवलम्।
सत्प्रेमाकरसङ्गतेश्च भवतो लाभार्जनायैव तु'
श्रुत्वेदञ्च नयन् पुरीयतिमसौ सङ्गे जगाम प्रभुः।।२१३२।।

अन्तः स्वप्रियमन्दिरस्य जगतो द्रष्टुं च नाथं स्वकं,
कृत्वा दर्शनकं परिक्रमणकं कुर्वन्निवासस्थलम्।
प्राप्तो,ऽसौ स्वसमीपमेव परमानन्दात्मने साधवे
तत्रागत्य निवासहेतुमददादेकां स्वतन्त्रां कुटीम्।।२१३३।।

सेवार्थमपराधीनं ननु तथा।
तस्यैकमददात्सत्सेवकमपि।।२१३४।।

काशीं यावदमुष्य चागमनकं वृत्तं तथाऽऽप्तं प्रभो-
रासी,द्धे च तथाऽन्तरङ्गसुहृदो भक्ताः प्रभोस्तेऽखिलाः।
प्राप्ते चैव निमायिकप्रियसमाचारेऽभवञ्छ्रीपुरी-
मायान्तोऽस्य निमायिनस्तु भवितुं सेवासु चोपस्थिताः।।२१३५।।

आचार्यः पुरुषोत्तमो ननु नवद्वीपस्य नाम प्रभो-
रेकोऽत्यन्तमभूत्प्रियः सुमनसो भक्तः सुधीर्ब्राह्मणः।
आसीत्प्रीतिरथ प्रभोश्चरणयोरत्यन्तमेवास्य, यत्-
संन्यासं जगृहे महाप्रभुरतोऽत्यन्तं स दुःखार्दितः।।२१३६।।

दुःखावेशमसौ शशाक निजकं रोद्धुं न, गौरं विना
सम्पूर्णा नदिया तथाहि नगरी शून्येव शून्याऽस्य सा।

प्रत्यक्षं ददृशे,ऽखिलं निजगृहद्वारञ्च सांसारिकं
सर्वं वस्तु तथाऽस्य कर्तितुमहो! धावत्प्रतीतं यथा।।२१३७।।

तत्काशीं स गतः प्रभोर्विरहतः स्थाने तथादुःखितः,
संन्यासस्य च तत्र दीक्षणमधाच्चैतन्यकस्वामिनः।
अस्य श्रीलगुरुः 'स्वरूप' इति तत्संन्यासनामाऽकरोत्,
पृष्ठे मेलयति स्म तत्र सुमना 'दामोदर'श्च प्रभुः।।२१३८।।

'स्वरूपदामोदर'-नामतस्तत्-
श्रीगौडभक्तेषु तथाऽस्य जाता।
ख्यातिर्निमायिप्रभुसौहृदस्य
(व्रजाप्तलीलाप्रियगौडपन्थाः)।।२१३९।।

संन्यासी तु विचारवान् भवति कौ मस्तिष्कमुख्यो यथा,
स्वामी तादृश एव चाभवदयं चैतन्यनन्दी गुरुः।
तच्छिष्यस्तु परं स्वरूपसहितो दामोदरश्चाभवद्
भक्तात्मा परमस्तथा सहृदयोऽद्धा हृत्प्रधानो नरः।।२१४०।।

तस्मादेष गुरोः पथानुसरणं कर्तुं तथा नाऽशकत्-
शिष्याणामुपदेशनं ननु यथा कार्यं, तथैवात्मनः।
वेदान्तस्य तथा विचारसहितोऽद्वैतस्य सारात्मक-
श्चैतन्येन तथाभिधेन गुरुणाऽमुष्योपदेशः कृतः।।२१४१।।

साकारस्य परंतु तस्य हृदयं प्रेमस्वरूपस्य च
श्रीकृष्णस्य सुभक्तये भवदथाऽऽसीत्तादृशं व्याकुलम्।
नाज्ञापालनमेष तन्निजगुरोः कर्तुं स्वरूपोऽशकत्
(संबन्धोऽत्र तदैव याति दृढतां चेद्धार्दबन्धस्तथा)।।२१४२।।

कृत्वा साम्प्रतमेष दक्षिणभुवो यात्रासमाप्तिं पुनः
श्रीपुर्यां वसति प्रभुः सहृदयः स्थाने,ऽमुना यच्छ्रुतम्।
स्थातुं नाशकदत्र तर्हि सुमनाः काश्यां स्वरूपो यतिः
(काशी शैवसदात्मनां सुमनसां श्रीमत्प्रियाणां पुरी)।।२१४३।।

नीत्वाऽऽज्ञाञ्च पुरीकृते निजगुरोः सोऽयं चचालाऽञ्जसं
काशीतश्चलितः पदातिरपरः प्राप्तः समीपे प्रभोः।

दृष्ट्वैवामुमथ प्रभोर्नहि तथाऽऽनन्दस्य सीमाऽवसत्-
(लब्धे तादृशि सौहृदे परिचिते कालाद् बहोर्हृन्मुदः)।।२१४४।।

संसक्तस्त्वमुना महाप्रभु,र्वारम्वारममुष्य चाकृत।
स्नेहेनातिशयेन संश्लिषां, तस्थौ तत्प्रभुणा सहैव सः।।२१४५।।

आसीद्भक्तिरलौकिकी प्रभुपदे तस्य स्वरूपात्मनः
श्रीदामोदरकस्य, गौडसुहृदोऽद्धाऽमुं द्वितीयं प्रभोः।
भक्ता विग्रहमेव सौहृदवतः संमन्वते सादरं,
सर्वेऽस्मिन्ननुरूपमेव सुहृदोऽद्धाऽऽसन् गुणाः श्रीप्रभोः।।२१४६।।

आसीदस्य तनोर्महाप्रभुसमो वर्णोऽपि गौरः पुन-
र्देहश्च स्वत एव चिन्निजमुखाकर्षी तथैकस्तरः।
नम्रोऽत्यन्तमसौ तथा सरसहृच्चासीत्सदाचारवान्,
नासीदस्य सदात्मनो रुचिकरो मर्दो विशेषो नृणाम्।।२१४७।।

आसीदस्य बहु प्रियः सुमनसस्त्वेकान्तवासः, परं
कुत्राप्येकमपि क्षणं प्रभुरभूत्यक्त्वा न यातुं प्रभुम्।
नो वार्तां स्म करोति केनचिदपि प्रायो विशेषामसौ,
गम्भीरस्तु महानभूच्च सुजनः सन्नेव विद्वांस्तथा।।२१४८।।

अत्ति श्रीप्रभुणैव सार्धमपर,स्तस्यैव पार्श्वे तथाऽऽ-
स्ते, स्वं यापयति स्म कालमखिलं सेवासु तस्यैव नुः।
यावद् द्वादश हायनानि विरहावस्थास्वसंज्ञो यदा
ह्यासीद् गौरमहाप्रभुस्त्वविरतं, स्थाने तदाऽयं सुहृत्-।।२१४९।।

स्वक्रोडे सुजनो महाप्रभुशिरो धृत्वा स्म शेते सदा,
राधाभावावियोगपीडितमनःसंवेदनाव्याकुलः।
कुर्वन्नेष च रोदनं प्रभुरभूद् गौरो यदा,ऽसौ तदा
प्रीत्या मानयति स्म सख्यललिताभावेन तं प्रेमिणम्।।२१५०।।

कण्ठेऽमुष्य भुजौ निधाय निजकौ कुर्वन् प्रलापं त्वभूद्
यावन्नक्तमयं, स्वरूपसुहृदो दामोदरस्याभवत्।
भावप्रेममयं तथाप्रणयवत्सद्गौडभक्तेष्वलं
सत्यं जीवनमस्य (तादृशसुहृत्सेवार्पितात्मा वरः)।।२१५१।।

तिष्ठेदेष न चेन्निरन्तरतया छायासमस्तत्प्रभोः
सङ्गे, द्वादशवर्षगाऽस्फुटमथैवाऽद्य स्थिता कौ भवेत्।
गम्भीरा-प्रभुवास-मन्दिरगता लीला निमायिप्रभोः
(साक्षाद् दर्शनकृद्यदीह लिपिको, लेखः स सत्यायते)।।२१५२।।

चैतन्यप्रभुनित्यकस्थितिमसावासीत्स्वदैनन्दिनी-
मध्ये तत्र लिखन्, स एव परमप्रीतिप्रदः साम्प्रतम्।
भक्तानां मधुरस्थितिप्रियपराकाष्ठावबोधप्रदो
ग्रन्थः (पथ्यमवश्यमस्ति सुहृदां लोके निमाय्यात्मनाम्)।।२१५३।।

दामोदरबन्धोः सोऽवस्करनाम्ना।
ख्यातोऽस्ति (पृथिव्यां किं नो चितमस्ति)।।२१५४।।

स्नेहोऽत्यन्तममुं प्रति प्रभुसतस्त्यासी,च्च बोद्धुं यथा
शक्तः सम्यगयं मनोगतमहो! भावं निमायिप्रभोः।
बोद्धुं कश्चिदपि क्षमो नहि तथाऽऽसीद्भावमस्यात्मनः
(सौहार्दे मनसि स्थिरे सुमनसः सच्चिद्रहस्यं स्फुटम्)।।२१५५।।

एवं 'किं भविताऽमुके तु विषये गौरप्रभोः सम्मतिः'
सारल्येन तथेत्थमेव दिशति स्मेमामसौ, नाऽभवत्।
प्रायोऽस्मिन् भ्रम एव, भक्तिरहिते चासीन्निमायिप्रभोः
काव्ये वा भजने पदे श्रुतिघृणा (सद्भक्तिरागी सुहृत्)।।२१५६।।

तस्माच्छ्रावणपूर्वमस्य सुहृदो गौरप्रभोः, श्राव्यते
तत्काव्यादिपदं जनैः सहृदयैर्दामोदरस्यात्मनः।
लब्ध्वैवानुमतिं स्वरूपसुधियः पश्चात्प्रभोः श्राव्यते
तत् (काव्यादि निमायिसौहृदमनोभावार्थमाशंसितम्)।।२१५७।।

गम्भीरप्रकृती रहःप्रियमनाः शान्तो यथाऽसौ तथै-
वाऽऽसीदस्य कलोऽधिकश्च मधुरः कण्ठोऽपि, गात्वा ततः।
एष श्रावयति स्म तादृशमधुश्लोकान्निमायिप्रभुं
भक्तिग्रन्थविशेषतः प्रियतमश्रीगीतगोविन्दतः।।२१५८।।

चण्डीदासमहाकवेः पदमहो! क्वाप्याप्तविद्यापते,-
नैतस्याननतो महाप्रभुरसौ शुश्राव यावत्पदम्।

तेषां, तावदमुष्य तृप्तिरभवन्न श्रीप्रियप्रेमिणो,ऽ-
नन्तास्त्वस्य गुणा, ह्यवैतुमलमासीत्तांस्तथैव प्रभुः।।२१५९।।

एतस्यागमनात्प्रभोः प्रमुदिताऽभूत्तद्धि सर्वाधिकं,
गौराङ्गः कथयन् बभूव सुमना'स्त्वं ह्यागतोऽनेन मे।
सञ्जाता मुदिता तथाहि कियती, नाहं समर्थोऽस्मि तां
व्यक्तां कर्तुमहो! (निमायिसुहृदो लब्धिः सचेतोनिधिः)।।२१६०।।

आसं त्वां तु विनाऽहमक्षिरहितः सत्यं, प्रदत्तस्त्वया
चागत्यैव निमायिनो ननु ममाऽऽलोकः, सदा चिन्तयन्।
आसं त्वद्विषये, ददर्श यदहं स्वप्ने ह्य एवा,ऽऽगत-
स्त्वं, तिष्ठन्नसि च स्मयं,स्त्ववितथं तत्त्वं तथाद्याऽऽगतः।।२१६१।।

कृतं त्वयेदं महदेव कार्यं
तथोत्तमं, मन्निकटे यदाप्तः।
अतो न मां याहि विहाय दूरं'
(मनोऽपरः कोऽपि तथाहि सङ्गी)।।२१६२।।

तत्प्रेमस्वरतः स्वरूपहृदयो दामोदरो भाषते
मन्दं मन्दमसौ 'प्रभो! स्वयमहं त्वागन्तुमेव क्षमः।
कस्माच्छ्रीपदयोर्निमायिभवतः, पापोदयोऽभूद्यदा
मे, तर्ह्येव पृथग् भवच्चरणतो यातोऽहमन्यत्र सन्।।२१६३।।

आहूतो भवताऽस्मि सम्प्रति यदा कृत्वाऽनुकम्पां, तदाऽऽ-
यातोऽहं विवशो निमायिकभवत्सत्प्रेमपाशे यतः।
यावद् धारयिता तथा चरणयोरन्यत्र तावत्क्षमः
कुत्राप्यस्मि तु यातुमेव किमहं?' (यन्त्रं वशे यन्त्रिणः)।।२१६४।।

उक्त्वेदमेष पदयोः पतितः स्वरूपो
गौरप्रभो,रथ करं प्रभुरस्य पृष्ठे।
उत्थाप्य घूर्णयति मन्दममुञ्च मन्दं
(वात्सल्यमन्तिमरसस्य तथाहि भावः)।।२१६५।।

दिनात्ततो महाप्रभोः समीपमेव सर्वदा।
अभूत्स्वरूपजीसुहृन्निमायिहृद्विलक्षणः।।२१६६।।

एकस्मिन् दिवसे तथाहि सरलो वाऽऽगत्य चैको नरोऽ-
कार्षीत्पादनतिं निमायिसुहृदः स्थानेऽपसृत्य प्रभोः।
तस्थौ बद्धकरस्तथा स, निकटे चासंस्तदानीं प्रिया
नित्यानन्दकसार्वभौमबहवो भक्ता निषण्णाः प्रभोः।।२१६७।।

पप्रच्छ विनम्रं तं तत्प्रभुगौरः।
'त्वं कोऽसि? तथाऽऽप्तो भ्रातोऽत्र कुतश्च?'।।२१६८।।

सारल्येन समं तथाहि महतैवाऽयं ददावुत्तरं
मन्दं मन्द'महं तथेश्वरपुरीभृत्योऽस्मि गौरप्रभो!।
पूज्यश्चाऽऽह्वयति स्म मां यतिपुरी गोविन्दनाम्ना, "भव-
त्याज्ञा किं मम?" सिद्धिलाभसमयेऽहं प्रार्थयामास तम्।।२१६६।।

सेवायां भवतस्तदा स वसनाऽऽज्ञां मे ददौ श्रीपुरी,
धृत्वा मूर्ध्नि च तां भवच्चरणयोः स्थानेऽस्मि चोपस्थितः।
एकोऽन्योऽपि ममास्ति तादृशगुरुभ्राता च काशीश्वरः,
सम्प्रत्यस्ति गतो निमायिवसुधाश्रीतीर्थयात्राकृते।।२१७०।।

कृत्वा तीर्थकयात्रां सोऽपि स्थास्यति पार्श्वे।
एवाऽद्धा तव पादे, मेऽथाद्याऽस्तु यथाऽऽज्ञा'।।२१७१।।

श्रुत्वैवेयदमुष्य सम्प्रति गलो गौरप्रभोः संभृतः,
क्लिन्नं चाश्रुभिरक्षिकोणयुगलं स्मृत्वेश्वरश्रीगुरोः।
प्रेमोवाच 'सदा ममोपरि वसन् स्नेहः पुरीश्रीमहा-
राजस्यास्ति च वत्सलस्य (सुहृदां प्रेम्णो न सीमाऽऽत्मनि)।।२१७२।।

नो जाने ननु कुत्र यद्यपि गतस्तन्मन्त्रदीक्षां स मे
दत्वा, दर्शनमेव तस्य मम नो भूयोऽभवत्तत्क्षणात्।
मां नो विस्तृतवानसौ पुनरपि, त्वस्थाच्च तस्य स्मृति-
र्गौराङ्गे मयि यावदन्तमपरा (मापस्तथान्तस्मृतिः)।।२१७३।।

मां सस्मार महांस्तथाहि पुरुषोऽहो! सोऽन्तकाले,ऽधिकै-
वैतस्माद् भवितुं ममोपरि कृपाऽन्या तस्य किं शक्यते?।
किं पर्यन्तमथ स्वभाग्यनियतेः कुर्यां प्रशंसामहं,
सौभाग्यस्य निजस्य केन विधिना कुर्वीय च श्लाघनम्।।२१७४।।

अन्तर्यामिगुरुर्गिरा ननु तनुत्यागक्षणेऽप्यात्मनो
नामोच्चारणमस्य मेऽकृत, ततो धीमन्! भवानेव मे।
भट्टाचार्य! ददातु सम्मति,महं कुर्यां किमस्यात्मनः
सम्बन्धे (भवसंशयेऽल्पमतिना प्रष्टव्य एव प्रधीः)।।२२१७५।।

तस्थौ चैष तु सेवको मम गुरोः, पूज्योऽस्ति तन्मेऽप्यसौ,
सेवाकार्यमनेन चात्मवपुषः कस्मादहं कारयै।
स्वे पार्श्वे न दधामि चेच्च सुहृदं त्वेतं, तदा श्रीगुरो-
राज्ञा सम्प्रति भज्यते (गुरुसमा मान्या तदाज्ञा सता)।।२१७६।।

अस्याञ्च दशायां किं मेऽद्य तु कार्यम्?।
देश्यं भवतैव' (प्राज्ञोऽमलमाप्तः)।।२१७७।।

'श्रेष्ठाऽऽज्ञैव गुरो'र्जगाद सुमतिः श्रीसार्वभौमः 'प्रभो!
शास्त्रोक्तिस्तु (गरीयसी ननु गुरोराज्ञा), सुशीलस्तथा।
गोविन्दो विनयी, भवच्चरणयोरस्यानुरागः स्वतः,
सेवाकर्मणि चास्त्ययं तु कुशलः (सेवा कृतौ कौशलम्)।।२१७८।।

तस्मादनेन निजकं ननु सेवयित्वा
देहं, प्रदाय सुखमस्य तथाह्यलभ्यम्।
श्रीमद्गुरोरपि करोत्वभिलाषपूर्तिं
स्वानन्दमस्य च ददातु निमायिनोऽपि'।।२१७९।।

भट्टाचार्यबुधस्य सम्मतिमिमां चक्रे प्रभुः स्वीकृतां,
सेवाकार्यमथात्मनश्च वपुषः स्थानेऽर्पयामास सः।
गोविन्दे, तत एव सोऽपि दिवसात्सर्वप्रकारं प्रभोः
कुर्वन् सेवनमस्ति संतत-(महो! काले सुभाग्योदयः)।।२१८०।।

नाभूदेष पृथक् कदाचिदपि तच्छ्रीलप्रभो,र्नाऽवसद्-
यावद्द्वादशवर्षमस्य वपुषोऽद्धा सर्वथाऽपि प्रभोः।
चैतन्यन्तु यदा, तदाहि कुरुते माताऽल्पसूनोर्यथा
सेवां सर्वविधां (निमायिहृदयं सेवाक्षमं सर्वतः)।।२१८१।।

गोविन्दस्तु तथैव सर्वविधकं कुर्वन्नभूत्सेवनं
स्नेहोऽस्य द्विविधः प्रभौ तु सुहृदो वात्सल्यदास्यात्मकः।

आसीत्स्वोरसि सर्वदा प्रभुपदे धृत्वाऽस्वपीदेष तु
(प्रीतिस्त्वात्मनि संभृताऽस्ति कियती, सा सेवया व्यज्यते)।।२१८२।।

नाना सुन्दरसुन्दरं प्रभुकृते सद्गौडदेशादुपा-
हार्षुर्वस्तु विधाय भक्तसुहृदः, सर्वं पुरा तेऽददुः।
गोविन्दस्य पुरस्तु, चापयति तत्सर्वं प्रभोः सन्निधिं
तस्यैव त्वनुशंसया (नियमितद्वारा महत्सन्निधिः)।।२१८३।।

निर्दिश्य वस्तु निखिलं कथयं'स्तथेदं
स्थानेऽमुकं प्रहितमस्त्यमुकेन वस्तु'।
स त्वाग्रहेण बहु भोजयति स्म गौरं,
सत्सेवको भुवि यथैष सुदुर्लभस्तु।।२१८४।।

असीदेकदिने निमायिमतिमानन्तर्निषण्णः प्रभु-
स्तत्रागत्य च तत्क्षणे कथयते मन्दं मुकुन्दः 'प्रभो !।
श्रीमत्केशवभारतीयतिगुरुभ्राताऽधुना भारती-
ब्रह्मानन्दयतिः स्थितोऽस्ति भवता बाह्येऽत्र सम्मेलितुम्।।२१८५।।

अस्तु तदाऽऽज्ञा, त्वत्र पुरस्ते। तं निदधीय त्वादरपूर्वम्'।।२१८६।।

ऊचे शीघ्रमतः प्रभु'र्गुरुसमो मे सोऽस्ति, नेतुं तु तं
यास्यामि स्वयमेव सम्प्रति बहि'श्चोक्त्वेदमित्थं प्रभुः।
अस्तव्यस्तदशो द्रुतं द्रुतमथाऽऽयातो बहि,स्तत्र स
ब्रह्मानन्दयतिं मृगाजिनवृतं गौरो ददर्श प्रभुः।।२१८७।।

पश्यन् द्रुतं द्रुतमसौ परितो मुकुन्दं
पप्रच्छ सम्प्रति 'मुकुन्द ! मुकुन्द ! कुत्र ?।
संविद्यते वरयतिर्ननु भारती स,
त्वं भारती वरयतिस्त्ववदस्तथाऽऽप्तः।।२१८८।।

त्वं द्रुतं दर्शनम्। तस्य मे कारय' ।।२१८९।।

आश्चर्येण समन्वितो ननु वचः श्रुत्वा मुकुन्दस्त्विदं,
प्रत्यक्षं समवस्थितोऽस्ति पुरतस्त्वेव प्रभोर्भारती।
भूयः पृच्छति भारतीकविषये श्रीमत्प्रभु,श्चाह स
'स्पष्टं त्वेष समक्षमेव भवतो ह्यस्ति प्रभो! भारती'।।२१९०।।

तेनोक्तं दृढतास्वरेऽल्पमधुना 'नो, कर्हिचिन्नो, मृषा
त्वं ब्रूषे, ननु भारतीयतिमहाराजः किमेवंविधम्।
शक्तः कर्तुमहो ! मृगाजिनमथ प्रावृत्य चाडम्बरं ?'
श्रुत्वेदं वचनं प्रभोः प्रभुमुखं पश्यन्ति सर्वेऽस्मिताः ।।२१६१।।

'एतन्मन्मृगचर्मकं रुचिकरं नास्ति प्रतीतं प्रभोः'
स्पष्टं सोऽबुधदत्र भारतिमहाराज,स्ततः प्राक्षिपत्।
तत्कालं तदसौ, प्रभुः प्रणमनं चक्रेऽस्य पादे क्षणा,-
दूचे लज्जितभावतः स 'न भवान् कुर्यात्प्रणामं मम ।।२१६२।।

अस्ति साक्षाद् भवान्! प्रेमरूपेश्वरः' ।।२१६३।।

'भवान् गुरुर्मेऽस्ति तथा न कर्ता
प्रणाममद्धा भवतोऽपि, भूयः।
कस्येह कर्ता त्वपरस्य ?, तन्मे
साकाररूपो भगवान् भवांस्तु'।।२१६४।।

'संसारे विहितौ निषेधविधिकौ साधारणानां नृणां,
कः शक्तो भवितुं गुरुस्तु भवतः, स्पष्टं निमायी गुरुः।
प्रेमात्मा स्वयमेव चासि जगतो'ऽन्योन्यं तथैवंविधं
कुर्वन्तौ च बभूवतुः स्तुति-(महो ! सन्तो निमायिश्रियः) ।।२१६५।।

तत्रैव तस्थौ यतिभारती स
प्रभोः समीपे तु, चकार तस्य।
प्रभुश्च भिक्षाप्रभृतिव्यवस्था-
(मभ्यागतः पूर्वनिवासिमान्यः) ।।२१६६।।

एतस्याल्पदिनान्तरैरपि समायातश्च काशीश्वरो
गोस्वामी प्रभुसन्निधाविह कृतश्रीतीर्थयात्रामलः।
शिष्यः श्रीलपुरीश्वरस्य, वपुषाऽसौ हृष्टपुष्टो बली
त्वत्यन्तं, हृदि तस्य च प्रभुकृते स्नेहस्तथाऽऽसीद्बहु।।२१६७।।

सन्निधिमेव श्रीप्रभुगौरस्तं त्वपि चैतन्यो निदधौ स्वम्।
एवमथाप्तास्तत्प्रभुसेवायामिह भक्ताः सर्वत एव।।२१६८।।

आ ! नित्यप्रति मन्दिरे हरिजगन्नाथस्य भक्तात्मनां
संमर्दो लगितः सहस्रगणितः स्थाने भवत्याततः।
प्रायः पर्वदिनेषु कोमलनृणां वै जायते दुर्लभं
मर्दाद् दर्शनमेलनन्तु (सरलास्तुष्यन्ति दूरादपि) ।।२१९९।।

श्रीमद्दर्शनहेतुमेष तु यदा याति स्म गौरप्रभुः
संमर्दे चलितोऽग्रतोऽथ मिलते काशीश्वरो वारयन्।
ब्रह्मानन्दकभारतीकपरमानन्दौ च दामोदरं
नित्यानन्दमथाखिलांश्च जगदानन्दं स्वभक्तांस्तथा ।।२२००।।

श्रीमद्दर्शनहेतवे सहृदयो नीत्वा स्वसङ्गे प्रभुः
संगच्छन् भवति स्म, तत्सुमनसः शोभाऽस्य तात्कालिकी।
श्रीचैतन्यनिमायिसौहृदवतोऽपूर्वेव चाजायत
(श्रीमान् साधुजनः स्वतः, प्रियजगन्नाथा निमायिश्रियः) ।।२२०१।।

मध्ये प्रभुः परिकरस्य निजस्य नृत्यन्
भूयोऽतिसुन्दरमभूत्सुमनाः प्रतीतः।
विस्मृत्य नाथहरिदर्शनमत्र कुर्वन्
ह्यस्यैव दर्शनमभून्ननु दर्शनार्थी।।२२०२।।



# महाराजप्रतापरुद्रस्य प्रभुदर्शनार्थमातुरता

११५. दयतां कृष्णप्रियचैतन्यः।

भौतिकखेदं हरति हेलया तनुते विशदं मोदम्
शास्त्रविवादः शाम्यति यस्मिन् सति महतामपि विदुषाम्।
उन्मदयति जनसाधारणमपि हृत्प्रेयोरसदानात्
शश्वत्प्रसरति भक्तिविनोदो यत्प्रियभावकसङ्गे।
मधुरिम्णो मर्यादा शमदा दयानिधेरनुकम्पा
निमायिसुहृदः सततं वर्षतु शरणागतेष्वमन्दा।।

ज्ञातं पूर्वत एव नः, परिचयं लब्ध्वा निमायिप्रभो-
र्भट्टाचार्यकसार्वभौमसुधिया, भक्तिः प्रगाढोद्गता।
सम्राजः कटकाधिपस्य हृदये रुद्रप्रतापस्य चाऽऽ-
सीच्चैतन्यनिमायिनं प्रति (मधूदारो गुणः कर्षति) ।।२२०३।।

धर्मात्मा ननु काममेष तु महाराजश्च विद्याजगद्-
व्यासङ्गी द्विजसाधुषु प्रनिदधौ भक्तिञ्च निष्ठामपि।
रीत्या किन्तु कयापि मानवतनुस्त्वासीत्स राजैव (कौ
बद्धो लौकिकभोगवर्गविषयैर्लब्धैः स्वतो मानवः) ।।२२०४।।

संश्लिष्य स्थितिरत्र भोगविषये तेषां कृते लौकिके
वार्तेकेव नृपत्वभावजगतामासीत्तु साधारणी।
भक्तिः श्रीप्रभुपादयोः सुमनसः संवर्धमाना यथाऽ-
भूदेतस्य सती तथैव विषयास्वादस्पृहा त्वल्पताम्।।२२०५।।

अस्त्यल्पो हृदयस्य चातिशयितः कोष्ठस्तु, भोगस्पृहा
यस्मिन् 'साधुमहात्मनां ननु कृते न स्थातुमेव क्षमा।
भक्तिस्तत्र, तथाहि यस्य हृदये श्रद्धा सतां विद्यते
भक्तानाञ्च कृते न तत्र भवितुं त्वेवात्र कामः क्षमः।।२२०६।।

११६. कथयति तुलसीदासः सत्यम्-

श्वेतो रक्तः कृष्णः क्रमशः प्रकृतिगुणत्रयवर्णाः
श्यामो वर्णो निर्गुणरूपो गगनात्मात्मा श्यामः।
अतसीपुष्पसमः श्रीरामो यस्मिन् हृदि स्फुटमस्ति

त्रिविधगुणात्मा कामस्तिष्ठेत्कथमिव तस्मिन् विशदे।
रोदस्यां क्षितिजे मेदिन्यामर्के खेऽसति रात्रिः
तुलसीहृदि गगने रामेऽर्के कामनिशासत्ता किम् ?।।

प्रीतिर्यास्यति साधुपदमूपदयोर्वृद्धिं यथा वै यथा
सर्वश्रेष्ठविबोधनस्य निजके भावोऽभिमानस्तथा।
ह्रासं यास्यति गौरवं ननु तथा, श्रीसाधवः पण्डिता
विद्वांसः स्वयमेव रुद्रकमहाराजस्य पार्श्वे बहु।।२२०७।।

दातुं दर्शनमस्य चाशिषमहो ! स्थाने प्रदातुं तथा
चायान्ति स्म, ततो महाप्रभुरपि त्वागत्य, तस्य स्पृहा।
दत्वा दर्शनमेष यातु च महाराजस्य, किन्तु प्रभो-
र्नेच्छा स्वादुपदार्थभोजनकृते, सम्मानमेवात्मनः।।२२०८।।

नैषीदेष, तथा न रूप्यकपणाऽऽकाङ्क्षाऽस्य चासीत्प्रभो,-
र्भूयोऽसौ किमियात्तथानृपकुले, प्रायस्त्वमीभिस्त्रिभिः।
कामैरेव जनास्तु यान्ति नृपतेः पार्श्वे, निमायिप्रभु-
स्त्यक्त्वेमांस्त्रिविधांस्तथाहि विषयान् संवीतरागी त्वभूत्-।।२२०६।।

संन्यासी, ननु राजदर्शनमपि स्थाने निषिद्धं कृतं
शास्त्रे तद्यतिनां, वचः परमिदं, बाढं तु कश्चिन्नृपः।
भक्त्याऽऽगत्य निमायिनान्तु कुरुतां संन्यासिनां दर्शनं
(संन्यासी ध्रुवमेव संग्रहपरैः संदर्शनीयोऽखिलैः) ।।२२१०।।

तत्काले भविता स्थितिर्न नृपतेः श्रद्धालुभक्तात्मन-
स्त्वेवाऽमुष्य, नहि स्वयं नृपतिना त्यागी तु संन्यासिकः।
तद्राजत्वपरिस्थितौ हि मिलितुं याता, किमासीन्महा-
राजस्यावगतिस्तथाऽस्य वचसो (राजा स्वपक्षप्रियः)।।२२११।।

संन्यासी न कदापि तस्य मिलितस्त्वेवं यथार्थः पुमा-
नासीत्सम्प्रति यावदत्र, सुहृदो लब्ध्वा निमायिप्रभोः।
पुर्यामागमनस्य तादृशसमाचारं ततोऽसौ महा-
राजः प्रेषितवान् स्वपत्रमपरश्रीसार्वभौमान्तिके।।२२१२।।

तत्र महाप्रभुसाधोः सोऽकृत दर्शनवाञ्छाम्।
च प्रकटं नृपरुद्रो-(ऽद्धा विधिनेच्छति लोकः)।।२२१३।।

आदेशानुसृतेर्जगाम च महाराजस्य, पार्श्वे प्रभो-
र्भट्टाचार्यमहाशयः, कथयति त्र्यस्यन्निवाल्पं तथा।
'ईहे कर्तुमहं निवेदनमथैकं चेत्तथाज्ञा, ब्रवै,
मे दाताऽभयदानमत्र, गदितुं शक्ष्यामि तर्ह्येव तु'।।२२१४।।

'एवं किमस्ति वचनं, किमपीह वक्तुं
शक्तो भवान्ननु ममाहितमल्पमेव ?।
लाभो हि यत्र भविता मम, तत्तु वक्ता
नूनं भवान्' कथयते विहसन्निमायी।।२२१५।।

ऊचे प्रेमपुरस्सरं मनाग् भट्टाचार्यबुधस्तथाऽऽग्रहात्।
'स्वीकार्या भविता ममार्थना प्रेमात्मन् ! भवता निमायिना'।।२२१६।।

ऊचेऽतश्च हसन् प्रभु'र्वरमिदं भद्रं, करोति क्षणा-
दस्मादेव निमायिनं ननु वचोबद्धं, मनिष्ये तु, चेत्।
मन्तव्यं भविताऽन्यथा यतिरहं कर्ता 'न', भूयस्तथा
'नो' कार्यं गदितैव किं ननु भवान् स्थाने वचस्तादृशम्'।।२२१७।।

श्रुत्वा तादृशमुत्तरं सुमनसश्चातुर्ययुक्तं प्रभो-
र्भट्टाचार्यमहाशयः सहमतोऽल्पं तद्बभाषे 'प्रभो!।
अत्युत्को भवतस्तु दर्शनकृते रुद्रप्रतापो महा-
राजस्त्वस्ति, करोतु दर्शनमहं दत्वाऽस्य धन्यं ध्रुवम्'।।२२१८।।

ऊचे श्रीलमहाप्रभुः श्रवणयोः 'श्रीविष्णु' हस्तौ धरन्
स 'श्रीविष्णु' भवान् कथं कथयते? शास्त्रज्ञसत्पण्डितः।
भूत्वैवं त्वपि धर्महीनवचनं, पापं तु संन्यासिनो
निर्दिष्टं ननु राजदर्शनकृति-(र्दृश्योऽपरो न्यासिभिः)।।२२१९।।

भूत्वापि स्वजनो यदा ननु भवानेवं तु धर्मच्युतः
संसारे भवितुं निमायिमनसो दाताऽत्र मे सम्मतिम्।
शक्ताऽहं कथमत्र तर्हि विशदं कर्तुं स्वधर्मावनं,
पुर्यास्तर्हि मया भविष्यति परित्यागस्तु कार्योऽधुना।।२२२०।।

संसारिविषये सक्तस्य नृपतेः।
आलोकनमहोऽलं दुःखवचनम्।।२२२१।।

११७. ध्येयं धर्मरहस्यं परमम्।
भवसागरतरणं त्वतिकठिनं तत्कारणमिह धर्माः
वस्तुसंग्रहो यच्छति सौख्यं मध्ये मज्जयति त्वपि।
केचित्पारमतो जिगमिषवो निष्किञ्चनतास्थितयः
परमाश्रमसंन्यासमासते केवलभजनेहार्थाः।
तेषां रागिजनैः सम्मिलनं भविताऽनर्थकरं खलु
हन्त! हन्त ! विषभक्षणतोऽपि ध्रुवमसाधु सुयतीनाम्।।

नष्टो नुस्त्विहलोक एव गरले जग्धे, परं जायते,
तु द्वावेव च रागिणां विषयिणां नष्टौ हि संसर्गतः।
जायेतेऽपि तथोत्तमात्मवपुषो लोकश्च लोकः परो,
भट्टाचार्यमहाशयाऽत्र भवता क्षम्यस्ततोऽहं स्वतः'।।२२२२।।

भट्टाचार्यकसार्वभौमविदुषाऽत्यन्तं विनीतात्तथा-
भावादुक्तमथ 'प्रभोऽस्ति भवतः शास्त्रानुकूलं वचः।
एवेदं, बहुभक्तिमान्ननु महाराजोऽस्ति तु श्रीजग-
न्नाथस्यास्ति च सेवक,स्तव पदे तस्यानुरागो दृढः।।२२२३।।

एभिश्चाखिलहेतुभिः प्रभुकृपापात्रं स योग्यो महा-
राजोऽद्धा भवितुं, भवान् मिलतु नो राजत्वभावात्मना।
तेन, स्याद्विषयी स एव (मनुतां) हानिं न कर्तुं क्षमः
किञ्चित्तद् भवतस्तु सोऽस्ति (सुहृदां स्यादेव हानिस्तु का ?) ।।२२२४।।

उद्धारो भविता विपर्ययात्तस्यैवा,नुकृपावशात्तव।
एतत्संसृतिबन्धनं भवाऽऽसक्तानां ननु मुच्यते प्रभो!'।।२२२५।।

'भट्टाचार्य! महात्मन् ! वार्ता सम्प्रति नेयम् -।
(संसारे यतिधर्मो धर्माणामतिसूक्ष्मः) ।।२२२६।।

११८. भीतिर्भवति त्वाकारादपि।
भेतव्यं संयमिना नूनं निजविरुद्धधर्माणाम्
आकारादपि, संसक्तानां किमु वार्ता संसर्गात्।
अहिदर्शनतः क्षोभोत्पत्तिर्मनसि यथा सर्वेषाम्
मनसः क्षुब्धिश्चित्रगतादपि ततस्तथाऽऽपातादिह'।।

श्रुत्वा चोत्तरमेतदस्य सुहृदः श्रीसार्वभौमोऽभव-
न्मौनं, नो पुनरेष चात्र विषये किञ्चिज्जगाद प्रभुम्।
यातोऽसौ स्वगृहं विषण्णमनसाऽभूच्चिन्तयंश्चोत्तरं
राज्ञो लेख्यमहोऽत्र किं ? (श्रुतिसमा लोके नृपाज्ञेरिता)।।२२२७।।

अस्मिन्नेव विचारेऽभूद्द्वित्रान् दिवसान् सः।
राज्ञस्तूत्तरमद्धा किञ्चिन्नापि लिलेख।।२२२८।।

तन्मध्ये कटकाध्वना सहृदयः श्रीरामरायस्तथाऽऽ-
प्तो विद्यानगरादमुष्य सुहृदः संदर्शनार्थं प्रभोः।
पुर्यां, तत्सहसा प्रभुर्विकसितो दृष्ट्वैव तं, चावना-
वुत्थाप्यापतितं स रायमकरोत्तद्गाढमालिङ्गनम्।।२२२९।।

वारम्वारमथोरसा सहृदयः संश्लेषयन् भाषते
'स्थाने मेऽत्र न राय एव मिलितो, लब्धोऽस्ति रामस्तथा।
सानन्दं, त्वधुना ममास्ति न मुदः सीमा,ऽवगाहं तथाऽऽ-
नन्दाब्धौ भवितैव संततमहं संलागयन् साम्प्रतम्'।।२२३०।।

श्रीरायं प्रति तद् विलोक्य सुहृदः प्रेम प्रगाढं प्रभोः
सर्वे सम्प्रति विस्मिताः सुमनसो भक्ताः प्रशंसां तथा।
कुर्वन्तस्त्वभवन् पुनर्ननु पुना रामस्य भाग्यस्य ते,
प्रोचे रायमहाशयः सहृदयः स्वस्थं निषण्णः'प्रभो!।।२२३१।।

चक्रेऽहञ्च निवेदनं तु भवदादेशानुसारं महा-
राजस्य त्ववकाशधारणकृतेऽद्धा राजकार्या,न्मया।
उक्तं स्पष्टमथाधुना मम तथा मुक्तिस्त्वितः कार्यतो
देया (लोकविशिष्टकार्यसमयो ह्यन्ते विनेयो नृणा)।।२२३२।।

श्रीचैतन्यमहाप्रभोश्चरणयोः पुर्यामुषित्वाऽधुना।
कर्ता सेवनमस्मि, मे च मुखतः श्रुत्वा प्रसन्नोऽभवत्।
अत्यन्तं भवतस्तु नाम स महाराजोऽकृताऽऽलिङ्गनं
मे तूत्थाय तथा निषाद्य निकटे पृच्छन् बभूवाऽधिकम्।।२२३३।।

संबन्धे भवतो निमायिसुहृदो वार्ता,महं विस्मितो
दृष्ट्वैवं नृपतेर्भवच्चरणयोस्तस्यानुरागं दृढम्।

यो वार्तामपि नो चकार सरलां सार्धं मया त्वञ्जसा
पूर्वं ह्येव स गौरचन्द्र! भवतोऽद्धा सेवकत्वान्मया।।२२३४।।

समं, समानमित्रवन्मिमेल, मे तथाऽधिकम्।
चकार सत्कृतिं त्वियत्प्रतापरुद्रभूपतिः'।।२२३५।।

'अस्ति श्रीभगवत्कृपा तु भवति स्थाने भवान् किङ्करः
श्रीकृष्णस्य, समादरं भगवतः कुर्वन्ति सर्वे जनाः।
संसारेऽनुचरस्य' चातिसमयं तु प्रेमवार्ता तथै-
वंरूपां सुहृदोः परस्परमभूद् (वार्ताऽमला प्रेमिणोः)।।२२३६।।

चक्रे रायमहाशयः प्रणमनं पादे पुरी-भारती-
नित्यानन्दसमस्तसाधुसुहृदामत्र स्थितानां सताम्।
भूयः स प्रभुतश्चचाल भगवत्संदर्शनार्थं तथा
नीत्वाऽऽज्ञां (ननु सत्प्रियस्य भगवान् सर्वः सतः प्रीयते।।२२३७।।

तत्काले भगवज्जगत्प्रियरथश्रीयुक्तयात्रोत्सवे
संप्राप्तः कटकाधिपः प्रियपुरे रुद्रप्रतापो नृपः।
आहूयैष च सार्वभौमविबुधं पप्रच्छ 'किं पृष्टवान्?
संबन्धे मम भट्टभौमसुमनः! श्रीमन्निमायिप्रभुम्'।।२२३८।।

'यद्यपि चाकृषि वारम्वारमहं ननु याच्ञाम्।
स्वीकृतमेव परं नो तेन भवन्मिलनार्थम्'।।२२३९।।

'भूत्वा यदा सर्वसमर्थसाधु-
र्मत्तुल्यपापात्कुरुते घृणां सः।
इय,त्तदा मत्सदृशाधमः कौ
समुद्धृतः स्यात्कथमत्र विद्वन्!'।।२२४०।।

'तत्समयस्तु तथा, यत्पार्थिवदर्शनमेषः।
नो कुरुते'(ऽत्र निमायी साधुरहो! भुवि कश्चित्)।।२२४१।।

अत्यन्तं निजवेदनास्वरगिरा रुद्रप्रतापो महा-
राजो जल्पति 'चेन्निमायिसुहृदस्तस्य प्रतिज्ञा तथा।
लब्धा पूर्णकृपां प्रभोरहमहो! (मेऽपि प्रतिज्ञा त्वियं)
देहस्यैव ममाऽस्य निश्चितपरित्यागं विधाताऽथवा'।।२२४२।।

अत्यन्तं ननु विस्मितोऽभवदयं दृष्ट्वाऽनुरागं महा-
राजस्येदृशमेष भट्टविबुधश्रीसार्वभौमः, पुनः।
ऊचे साम्प्रतसान्त्वनां प्रियमहाराजस्य सिञ्चंस्तथा'ऽ-
धीरो माऽस्तु भवांस्त्वियन्ननु महाराज!, (प्रमाता प्रभुः)।।२२४३।।

ब्रूते मद्धृदयं, करिष्यति कृपां प्रेमावतारो ध्रुवं
चैतन्यो भवति प्रभु,र्गतदिने गौरप्रभोः सम्मुखे।
रामानन्दमहोदयो हि भवतश्चक्रे प्रशंसां तथा
त्वत्यन्तं बहु, लक्षितो मम दृशोस्तस्य प्रभावः स्फुटम्।।२२४४।।

अत्यन्तं भवति प्रभोर्ननु मनो (ज्ञातं तदानीं मया)
जातं कोमलमस्ति, सम्प्रति भवानेकां करोतु क्रियाम्।
युक्तं तूचितमस्ति तेन मिलनं नो राजवेषात्मना
(लोको बिभ्यति राजतो, यतमनाः साधुस्तु तद्वेषतः)।।२२४५।।

अग्रेऽग्रे स रथस्य तत्प्रियरथश्रीयुक्तयात्राक्षणे
कुर्वन्नृत्यमहो! चलिष्यति जगन्नाथस्य भक्तैः समम्।
गत्वा तर्हि भवान्महाप्रभुपुरः सामान्यवेषे पठन्
श्लोकं कञ्चन भक्तिपूर्णमपरं स्थाने भवत्वात्मना।।२२४६।।

बुद्ध्वा भक्तमसौ करिष्यते संश्लेषं भवतो दृढं प्रभुः।
सर्वा पूरयिता मनःस्पृहा श्रद्धालोर्भवतस्तदैव तु'।।२२४७।।

भट्टाचार्यकसार्वभौमभणितोऽद्धाऽयं ह्युपायो महा-
राजस्यास्य निमायिनस्तु रुचितः, पप्रच्छ भट्टञ्च सः।
'कस्मिन् वै दिवसे भविष्यति रथश्रीयुक्तयात्रोत्सवः?'
कृत्वाऽसौ गणनामुवाच (मतिमान् ब्रूते विचार्याखिलम्)।।२२४८।।

'सा भविता श्रीमद्रथयात्राऽदोदिवसादह्न्यत्र तृतीये।
साम्प्रतमुद्योगं, मिलनं नः श्रीपुरि, कर्तारस्तु तदैव'।।२२४९।।

एतस्य श्रवणात्तथा महाराजस्याभवदस्य तोषणम्।
नीत्वाऽऽज्ञां नृपतेर्ययौ निजं स्थानं पण्डितसार्वभौमजी।।२२५०।।



# गौरभक्तानां पुर्यामपूर्वसम्मिलनम्

११९ नम्या वैष्णवभागवता भुवि।
जगदिदमखिलं विष्णुमयं तद् विष्णुत्वं व्यापकता
श्रोतव्यो मन्तव्यो गेयः सोऽयं स्वात्मा सततम्।
साक्षी चेताः केवलरूपो गूढः स तु परमार्थः
स्पष्टो भक्ते भागवते नरि, तदयं वैष्णवसाधुः।
सद्वाञ्छानां कल्पपादपः, करुणायाः किल सिन्धुः
पतितानामपि पावयिता तु स्वीकरणीयः सुहृदा।।

संवादोऽस्ति कियानहो! हि सुखदो, हृत्फुल्लकः कीदृशो
वृत्तान्तोऽयमथास्ति साम्प्रतमनोहारी, प्रियस्यात्मनः।
श्रुत्वा सम्मिलनं सुखं जडमतिर्भावी तथा कोऽवनौ
हृद्धीनः पुरुषो, न यस्य सहसा स्थाने मनोऽब्जं स्फुटेत्।।२२५१।।

उक्तमेवोचितम्। नीतिकारैरहो!-।।२२५२।।

१२० अमृतं प्रियदर्शनमिह भुवने।
ब्रह्माण्डेऽनन्तानन्ताख्ये भ्राम्यति जीवसमूहः
भिन्नं भिन्नं नामरूपतः प्रायोऽशान्तः सततम्।
नाऽशान्तान्तः सुखमिह कथमपि, शान्तिस्तत्प्रियमिलनात्
सच्चित्सुखतत्प्रियमिलनेष्टिर्मानवताऽमृतयुक्तिः।।

सर्वोत्तमं त्वमृतमत्र निजप्रियेण
स्थानेऽस्ति सम्मिलनमेव, करोति पानम्।
योऽस्यामृतस्य सततं, प्रणतिस्तु भूयो
भूयोऽस्ति नो जगति तादृशभक्तपादे।।२२५३।।

श्रुत्वैवाथ महाप्रभोः प्रियपुरीप्राप्तेः समाचारमा-
नन्दस्यास्ति न गौरभक्तसुहृदां सीमा, प्रभोः सङ्गतौ।
तद्भक्तैर्बहुभिस्तु कीर्तनसुखानन्दोऽनुभूतः पुरा
(श्रीगौराङ्गनिमायिसङ्गतिसुखं श्रीमत्सुसंकीर्तनम्)।।२२५४।।

आसन् सम्प्रति तादृशोऽपि बहवः प्रत्यक्षमद्यावधिं
यैर्नो दर्शनमेव तस्य विहितं, चक्रुर्निमाय्यात्मनः।

ते तु स्वात्मसमर्पणं सुनसोऽदृष्ट्वैव गौरप्रभुं,
तेषां किं कथनीयमद्य सुमुदः (पूर्वानुरागोऽपरः)।।२२५५।।

उल्लासे प्रभुदर्शनस्य निखिला भक्तास्तथाविस्मृत-
स्वत्वाः सन्ति, तथाहि निश्चितमिदं सर्वैश्चलित्वा पुरीम्।
कर्तारः प्रभुदर्शन,ञ्च सुमनास्त्वद्वैत एवाग्रणी-
राचार्योऽस्ति निमायिसर्वसुहृदां (द्वैतो न भात्यग्रतः)।।२२५६।।

तस्याभून्ननु सम्मति'र्द्रुतमहोऽस्माभिः पुरीश्रीकृते
प्रस्थानं करणीयमेव, भगवन्नाथस्य यस्माच्छुचौ।
यात्रायामपि संभवेम मिलिताः, संयापयेम प्रभोः
पार्श्वे चैव निमायिनश्च चतुरो मासान् पुनः प्रावृषः'।।२२५७।।

सर्वेषां रुचिता तु सम्मतिरियं, गेहप्रबन्धं निजं
कृत्वा मासचतुष्टयस्य च पुरीयानाय ते प्रस्तुताः।
श्रीवासादिसमस्तभक्तसुहृदोऽयाचञ्छचीमातरं
प्रस्थानानुमतिं प्रभोस्तु निकटे-(ऽग्रे ग्रामदेव्यर्च्यते)।।२२५८।।

सद्वात्सल्यमयी सुताय जननी संन्यासिने त्वात्मनो
नाना वस्तु तथा विसर्जितवती, सर्वाणि चैतान्यमी।
वस्तूनि त्ववधानपूर्वमखिलं भक्ताः स्वसङ्गेऽधरन्,
कृत्वा मातृपदोश्च वन्दनमयुः सर्वे पुरीश्रीकृते।।२२५९।।

गायन्तः करतालखोलसहिता गौरप्रभोस्ते गुणान्
कुर्वन्तो हरिकीर्तनं द्विशतकाः प्रायस्तु भक्तास्तथा।
पद्भ्यामेव ययु,र्युवेव पुरुषोऽग्रे दर्शनोत्कण्ठितो
वृद्धाद्वैतगुरुः प्रभोर्ननु चलन्नासीद् द्रुतञ्च द्रुतम्।।२२६०।।

उत्साहेन नवेन सर्वसुहृदो भक्ताश्च पृष्ठे गुरोः-

१२१. 'प्रणयः स्वीक्रियतामस्माकम्।
"हरिरिह शरणं' चतुःसनानामविरतमानसजापः
"यदुकुलनन्दन! कृष्णचन्द्र! हे!" सम्बोधनमार्तानाम्।
गोविन्द! त्वं भारतसम्पत्कृषिसाधनगोपालक!
राम! क्रियतां जिज्ञासूनां मधुसूदन! मधुदृष्टिम्'।।

कुर्वन्तोऽस्य पदस्य साम्प्रतमथाऽऽसंस्ते तु संकीर्तनम्।
प्राप्ताश्चैवममी च विंशदिवसैः स्थाने चलन्तः पुरी-
पार्श्वे (लक्ष्यमवश्यमत्र चलतामायाति पार्श्वे नृणाम्)।।२२६१।।

संप्राप्तोऽत्र तथान्तिके भगवतस्तत्स्नानयात्राक्षण-
श्चौत्सुक्यात्समुदीक्ष्यते सुमनसाऽसौ स्नानयात्रोत्सवः।
गौरश्रीप्रभुणा तथैव महतो,ऽयात्स्नानयात्रादिने
श्रीमद्दर्शनहेतुमेष निजकैर्भक्तैः समं मन्दिरे।।२२६२।।

कस्तस्यास्ति तथा तदीयदिवसाऽऽनन्दस्य कर्तुं क्षमो
व्याख्यानं, कुरुते स्म कीर्तनमसावुन्मत्तलोको यथा।
स्थाने मन्दिर एव सम्प्रति तथाऽचेताः प्रभुः प्रेम्णि स,
श्रीगौरं परितस्त्वपारजनता चैकत्रिता तत्क्षणात्।।२२६३।।

निवासमाहरंश्च तं यथा तथा सुहृज्जनाः।
(तथानुरागचेतसो भवन्ति केऽपि भावुकाः)।।२२६४।।

यावत्पञ्चदशात्मकञ्च दिवसं तत्स्नानयात्रोर्ध्वकं
श्रीनाथो निवसत्यमायिभगवानन्तःपुरे, पूर्णतः।
तत्तावत्पिहितं कपाटयुगलं श्रीमन्दिरे जायते,
शक्यं कस्यचिदप्यमायिभगवच्छ्रीदर्शनं नो तदा।।२२६५।।

आसीत्किन्तु पुनर्महाप्रभुकृतेऽसह्यं तथेदं वचो,
लोभेनैव करोति वासमपरः पुर्यां तु सोऽयं प्रभुः।
श्रीमत्स्वप्रियदर्शनस्य, भगवच्छ्रीदर्शनं त्वेव नो
शक्यं, तर्हि पुनस्तथाहि निवसेत्पुर्यां स कस्याश्रयात् ?।।२२६६।।

द्वारे त्वेव नियन्त्रितेऽस्य ववृधे प्रेयोवियोगव्यथा
गौराङ्गस्य, तथा ह्यवर्धत च सा, पुर्यां तथोपस्थितिः।
जाताऽसह्यमहो! निमायिसुहृदो, गोपीसमोऽसौ प्रभु-
र्भावावेशवशाद् वियोगविधुरस्त्यक्त्वा निमायी पुरीम्।।२२६७।।

शैवस्थानमलालनाथमचलद् गौरस्तथैवैकलोऽ-
लब्ध्वा स्वप्रियदर्शनं सहृदयो दुःखी स तावानभूत्।
मेने सोऽनुनयं तथा न विनयं किञ्चित्त्वपि प्रेमिणां,
सर्वेषां सुहृदामभूत्प्रभुपुरीत्यागात्तु दुःखं बहु।।२२६८।।

शुश्रावाऽयमलालनाथचलनोदन्तं प्रतापो महा-
राजोऽप्यस्य महाप्रभो,र्नरपतिर्यातुञ्च भौमं बुधम्।
तत्प्रत्यागमनार्थमप्यकथयद्, गौडीयभक्ताऽऽगम-
स्तस्मिन्नेव तथा बभूव समये (दीर्घं न सन्म्लानता)।।२२६९।।

श्रुत्वेमं निखिलस्य साम्प्रतसमाचारं प्रमोदोऽभवद्
भूयोऽत्यन्त,मलालनाथमगमच्छ्रीसार्वभौमः प्रभोः।
प्रत्यावर्तनहेतुमस्य सुहृदः कृत्वा स्वसङ्गे तथा
नित्यादीन् (स्वजने हि दृष्टिपतिते भावोऽनुकूलायते।।२२७०।।

गत्वा तत्र कृताऽर्थना च निखिलैरेतैर्निमायिप्रभोः,
'सन्त्येव प्रभुदर्शनाय तु पुरीभक्तास्तथा व्याकुलाः।
भक्ताः साम्प्रतमेव तत्र बहवस्तद्गौडदेशादपि
प्राप्ताः केवलदर्शनाय सुहृदो गौरप्रभोरेव ते।।२२७१।।

प्राप्स्यन्ति पुर्यां नहि दर्शनं चेत्
प्रभो,रपारं भविता तु दुःखम्।
तेषां तदा, तच्चलतु स्वभक्ते
पुरीं निवृत्याऽऽत्मकृपां विधाय'।।२२७२।।

स्वीचक्रे विनयं प्रभुः स्वसुहृदां, गौडीयभक्तागमाद्
वृत्तान्तान्मुदिता बभूव सुहृदोऽत्यन्तं प्रभोस्तत्क्षणम्।
भक्तैः सार्धमसौ निमायियतिकः स्थानं निवृत्तः पुरीं
(स्थानाद् दूरमतिक्षणं सहृदयो नो तिष्ठति प्रेयसः)।।२२७३।।

श्रीचैतन्यमहाप्रभुः प्रियहरिः पुर्यां निवृत्याऽऽगतो,ऽ-
दोवृत्तान्तनिशामनाय गतवाञ्छ्रीसार्वभौमो बुधः।
श्रद्धालोः कटकाधिपस्य सविधे रुद्रप्रतापस्य, चाऽ-
त्राऽऽचार्यः पुरुषोत्तमोऽपि निकटे प्राप्तो नृपस्याधुना।।२२७४।।

आचार्यः पुरुषोत्तमः कथयते 'गौडप्रदेशान्महा-
राजाऽत्र द्विशतं तु गौरसुहृदो भक्ताः पुरीमागताः।
तेषां वासमहाप्रसादपरमस्निग्धव्यवस्था तथा
कर्तव्या (स्वपरात्मशोधनकृते भ्राम्यन्ति सत्प्रेमिणः)।।२२७५।।

यतोऽखिला महाप्रभोः पदानुरागिणस्तु ते।
अतोऽप्यथागताश्च ते' (निमायिभावताऽद्भुता)।।२२७६।।

ऊचे तन्मुदितां तथा प्रकटयन् रुद्रप्रतापो महा-
राजः 'काऽस्ति निमायिलोकविषये मत्प्रश्नवार्ताऽत्र तु?।
कुर्यात्तत्स्वयमेव सौहृदवतां सर्वप्रबन्धं भवान्,
पार्श्वेऽत्राऽऽह्वयतु प्रबन्धकमथ श्रीमन्दिरस्यास्य मे।।२२७७।।

सर्वेषां तु महाप्रसादविषयां स्थाने व्यवस्थामहं
कर्तुं तं कथयामि, सन्तु सुहृदो भक्ता निमायिप्रियाः।
यावन्तोऽपि, तथाखिलस्य भविता तस्य प्रसादाऽऽविधि,-
स्तिष्ठेयुर्ननु यावदत्र, दिशया श्रीमन्दिरस्यैव तु।।२२७८।।

वासप्रबन्धमखिलस्य करोतु, काशी-
मिश्रं भवान् वदतु, तत्सुहृदः स एव'।
उक्त्वेयदेष नृपतिश्च तदैव भृत्यैः
सर्वप्रबन्धमपि कारितवान् सदात्मा।।२२७९।।

'कर्तुं महाप्रभुसमस्तनिमायिभक्त-
श्रीदर्शनं ननु लषामि, ततो भवान्मे।
तेषां तथा परिचयं सुहृदां समेषां,
हे सार्वभौम!' कथितं 'प्रददातु' राज्ञा।।२२८०।।

'भक्तेष्वस्म्यखिलं स्वयं परिचितो नाहं महाराज! हे!,
बह्वल्पं वसनं ममाभवदहो! द्वीपे नवे,ऽमुष्य तु।
गोपीनाथबुधस्य ते परिचिताः प्रायः समस्ताः प्रभो-
र्भक्ता,स्तद्भवतस्त्वयं परिचयं संकारयिष्यत्यलम्।।२२८१।।

भवान् करोतु त्विह कार्यमेकं
चाट्टालिकायां चलतु, स्वतः स्यात्।
दृष्टोऽपि सर्वस्तत एव, सर्वान्
दिशन्नपि ज्ञो भवतस्तथाऽयम्'।।२२८२।।

युक्ता भट्टबुधस्य सम्मतिरियं भूरि प्रतीता महा-
राजस्यै,ष तदैव सौहृदभरादारुह्य चाट्टालिकाम्।

कृष्णप्रेम्णि च विह्वलां विदधतीं संकीर्तनं नर्तनं
चायान्तीं प्रभुगौरभक्तसुहृदां पश्यन्नभून्मण्डलीम् ।।२२८३।।

आसन् प्रेम्णि निमायिनस्तु निखिला भक्ता विमत्तास्तथा
तेषां प्रच्छदकस्तथाऽऽस्तरणकः स्कन्धेऽखिलानां पटः ।
खोलः कस्यचिदस्ति तेषु सुहृदः संलम्बमानो गले,
केषाञ्चित्करतालमेव करयोः, कश्चित्पुनर्वादयन् ।।२२८४।।

सम्यग् झल्लकमेव, कोऽपि च करावूर्ध्वं तथोत्थाप्य तत्
कुर्वन्नस्ति तु नृत्यमेव, सुहृदामासन् पृथग्वै पृथक् ।
मण्डल्यो रचिताश्चतुर्दश, तथा, खोला ध्वनन्तो यदा
वर्तन्ते युगपच्चतुर्दश, तदा गुञ्जन्ति सर्वा दिशः ।।२२८५।।

तद्गौरप्रभुभक्तमण्डलीशोभां स त्वनिमेषदृष्टितः ।
पश्यन्नस्ति च रुद्रभूपतिः (कं नाऽऽकर्षति गौरसौहृदम्) ।।२२८६।।

श्रुत्वा पूर्वत एव स स्वसुहृदां गौडीयभक्ताऽऽगते-
र्वृत्तं प्रेषितवान्निमायिसुमनाः श्रीचन्दनस्य स्रजा ।
सार्धं स्वागतहेतुकं प्रभुरभूद् गोविन्ददामोदरौ
(सन्यासी ह्यपि गेहिधर्ममवनौ जानन् विधत्तेऽखिलम्) ।।२२८७।।

तौ सर्वप्रथमं तथाह्यकुरुतां भक्ताग्रणीश्रीगुरो-
र्गत्वा स्वागतमत्र सन्मतिमतोऽद्वैतस्य, दामोदरः ।
आचार्यस्य गले स्रजं प्रथमतः स्थानेऽर्पयामास तद्
गोविन्दश्च तथैव पादनमनं कृत्वाऽकृत श्रद्धया ।।२२८८।।

आचार्यो न पुरा कदापि सुमना गोविन्दमालोकयत्,
पृच्छन्नेव बभूव वृद्धगुरुकः स्वं रूपगोस्वामिनम् ।
'भक्तोऽयं ननु कः स्वरूप ! तु महाभागः, पुरा कर्हिचिन्-
नैतं त्वस्मि ददर्श, कोऽपि किमसौ भक्तोऽस्ति पुर्याः पुनः ?' ।।२२८९।।

गोस्वामी 'न, तथैष नास्ति सुमनाः पुर्याः' स्वरूपोऽवदत्-
'त्वस्ति श्रीश्वरसत्पुरीयतिमहाराजस्य सत्सेवकः ।
सिद्धिप्राप्तितथाक्षणे स निजके वस्तुं निमायिप्रभोः
सेवायाममुमादिदेश (गुरुकाऽऽदेशस्तथा कस्यचित्) ।।२२९०।।

तस्यादेशमसौ विधाय शिरसि त्वाप्तः समीपे प्रभोः
सेवास्वेव लगंश्च तिष्ठति सदाऽद्धा तन्निमाय्यात्मनः।
गोविन्दोऽस्ति तथाऽस्य नाम, सरलोऽत्यन्तं सुशीलस्तथा
साध्वात्मा ननु विद्यतेऽतिविनयी' (नुर्नम्रता साधुता)।।२२६१।।

गोविन्दसत्परिचयं कृतवांस्तु लब्ध्वाऽऽ-
चार्योऽस्य गाढपरिरम्भणमेष वृद्धः।
सङ्गे विधाय निखिलांश्च चचाल सिंह-
द्वारोन्मुखः (प्रियतमो द्रुतमेव दृश्यः)।।२२६२।।

ऊचे कारयितुं सतां परिचयं गौरप्रभुप्रेमिणां
गोपीनाथबुधं निमायिहृदयो रुद्रप्रतापो नृपः।
आचार्यः सुहृदामभूत्परिचयं संकारयन्, सोऽङ्गुली-
सङ्केतेन दिशन् (स्फुटं हि वचनव्यक्तिः समं चेष्टया) ।।२२६३।।

'येन स्त्रक्परिधापिताऽस्य सुहृदो वृद्धस्य तेजस्विनो
भक्तस्यैष निमायिसौहृदवतस्त्वस्ति स्वरूपं परम्।
गोस्वामीति महाप्रभोः सुमनसः श्रीरूपदामोदरो,
गोविन्दोऽयमथास्ति तेन सहितो गौरप्रभोः सेवकः।।२२६४।।

अग्रेऽग्रेऽथ तथैष नृत्यति तथोत्साहेन सार्धं च यो,ऽ-
द्वैतो भागवतस्तु सोऽस्ति परमाचार्यो,ऽस्य पृष्ठे च ये।
चत्वारो ननु गौरवर्णसुभगा विद्यानिधिः पण्डिताः
श्रीवासश्च गदाधरः सहृदयास्ते सन्ति वक्रेश्वरः।।२२६५।।

आचार्योऽथ च चन्द्रशेखरपदोऽसावस्ति मातृस्वसुः
स्वामी श्रीलनिमायिनो भवति तत्पूर्वाश्रमस्य प्रभोः।
श्रीगौराङ्गनिमायिपादकमलेऽमुष्यानुरागो दृढः
(संबन्धाऽवरभावना वसति न प्रेमप्रमातुर्हृदि)।।२२६६।।

श्रीकान्तोऽथ च नन्दनो ननु शिवानन्दस्तथा पण्डितः,
श्रीमान् राघववासुदेवसुहृदौ गौरप्रियाः सन्त्यमी'।
एवञ्चाखिलभक्तसत्परिचयं त्वेकैकशः कारयन्-
नाचार्योऽस्ति, निमायिनां परिचयात्प्रीतोऽधिकं भूपतिः।।२२६७।।

दृष्टं तेन तदैव सौहृदभरा गौडीयभक्तास्तथा
न श्रीमन्दिरमुन्मुखाः, परममी यान्तीह वासं प्रभोः।
वाणीनाथसुहृन्निमायिकभवानन्दस्य पुत्रः पुनः
शीघ्रं शीघ्रमहो ! प्रभोस्तु निकटं गृह्णन् प्रसादं बहु।।२२९८।।

भक्तानां ननु पूर्वमेव कुरुते प्राप्तुं प्रयत्नं, तथा
दृष्ट्वेदं नृपतिस्तु पृच्छति 'सतामेषां निमायिप्रभौ।
आचार्याऽस्ति कियान्महाशय ! महान् स्नेहो,ऽविधाय प्रभुं
सङ्गे यान्ति न दर्शने भगवतोऽप्येकाकिनोऽमी जनाः।।२२९९।।

आम्, किं प्रसादं ननु याति वाणी-
नाथो नयन् सम्प्रति स त्वियन्तम्?'।
'स स्वागतं गौरहरिः प्रसाद-
द्वाराऽखिलानां स्वयमेव कर्ता'।।२३००।।

'आगत्य तीर्थे प्रथमं विधानं
क्षौरोपवासस्य तु शास्त्रलोके।
न तत्करिष्यन्ति जनाः किमेते ?'
(निमायिलोको व्यवहारबाह्यः) ।।२३०१।।

'कर्तारः कथमेव नो ? सुमनसां तु प्रेमहेतोः प्रभोः,
क्षौरं तु प्रथमं तथाऽस्तु नियतं, तर्हि प्रसादं लभे।
तेषां नास्ति तथाऽऽग्रहः, प्रभुकरद्वारप्रसादेन ते
नो बोधन्त्युपवासभङ्ग-'(मुचितो भङ्गो मनोभञ्जनम्)।।२३०२।।

'आह भवांस्तत्सम्प्रति तथ्यम्। नो नियमस्य प्रेम्णि तु बन्धः'।।२३०३।।

उक्त्वा चेयदवातरद्भुवि पुनस्त्वट्टालिकातो महा-
राजो मन्दिरकं प्रबन्धकमथ प्राह प्रभोः सन्निधौ।
भूयः प्रापयितुं प्रसादमधिकं शीघ्रं निमाय्यात्मनां,
लोकैः पूर्वत एव तैस्तु विहितोऽभूच्च प्रबन्धोऽखिलः।।२३०४।।

लब्धे तु च महाराजस्य वचने।
तैः प्रापितमितो नैवेद्यमधिकम्।।२३०५।।



# भक्तैः सार्धं महाप्रभोः समागमः

१२२. परमः पुरुषार्थः प्रेमात्मा।
ममता भौतिकलौकिकविषये सांसारिकताहेतुः
तन्मुक्त्यै धर्मोऽर्थः कामः साधनमिति पुरुषार्थाः।
ममताऽनन्या प्रेमसङ्गता विष्णौ, भक्तिर्भणिता
पञ्चमपुरुषार्थः स प्रोक्तो, वस्तुतः स एवार्थः।
आदर्शेष्वपि परमादर्शः श्रीचैतन्यादर्शः
यत्पदकमलप्रीतिमात्रतः स प्रेमार्थः सुलभः।।

भक्तैरस्ति निजैः प्रभुर्ननु भवन् संमेलितुं व्याकुलः,
प्राणेभ्योऽपि तथाप्रियैश्च निखिलैर्वर्षद्वयानन्तरम्।
भूयः सोऽद्य तु मेलिता सहृदयैर्भक्तैर्निमायी निजैः
(प्रीतिः सम्मिलनं तथात्मसुहृदां, नो विद्यते तत्परा) ।।२३०६।।

एतस्मिन् स्मृत एव चाद्य विषयेऽसावाप्लवं योजयन्
प्रेमाब्धौ प्रभुरस्ति, तच्छ्रवणयोस्त्वत्र क्षणे शुश्रुवे।
श्रीसंकीर्तनकध्वनिः सुमधुर,स्तस्मिन्नवद्वीपिनि
श्रीपुर्यां श्रुत एव, तत्स्मृतितले वार्ताऽखिलैकैकशः।।२३०७।।

श्रीमद्वासकपण्डितस्य गृहिणो गेहस्य जज्ञे,ऽधुनो-
द्गच्छन्त्यस्ति विचारणाऽस्य हृदये नाना, तदैव प्रभोः।
आगच्छन् ददृशे तथाहि पुरतोऽद्वैतोऽस्य भक्ताग्रणी-
(वृद्धे तादृशि सौहृदे दृशि गते कोऽपीह भावोदयः) ।।२३०८।।

चक्रे स्वागतमात्मनः परिकरैरग्रे सरित्वा प्रभु-
र्भक्तानां, प्रणतिं चकार पदयोः स्थाने निमायिप्रभोः।
आचार्यः, कृतवान् प्रभुः सहृदयस्तद्गाढमालिङ्गनं
प्रेम्णा त्वश्रु विमोचयंश्च महताऽऽचार्येण चासक्तवान्।।२३०९।।

तत्र विना ताभ्यामुभयोस्तं संमिलनानन्दं ननु बोद्धुम्।
कः प्रभवेदन्यो भवबन्धो (बन्धविशेषाद् बोधविशेषः) ।।२३१०।।

श्रीवासस्तदनन्तरं तदपरे दत्तो मुकुन्दस्तथा
भक्ता नेमुरहो ! महाप्रभुपदेऽद्धा वासुदेवोऽखिलाः।

प्रेमालिङ्गनकं यथोचितमसौ गौरो ददानः पुनः
सर्वेषां कुरुते स्म शंसन-(महो ! प्रीणाति शंसाऽखिलान्) ।।२३११।।

तत्पश्चात्सुमना भवान् कथयतेऽसौ वासुदेवं 'वसो !
सर्वेषां भवतां महाशय ! कृते चानीतवानस्म्यहम्।
अत्यन्तेन परिश्रमेण तु समं द्वे पुस्तके ह्यद्भुतेऽ-
त्यन्तं दक्षिणदेशतो-(ऽपि चिनुतां सद्वस्तु संन्यासिकः) ।।२३१२।।

सम्पूर्णं ननु भक्तितत्त्वविषयं मर्माऽनयोः संभृतं'
सर्वेषामभवत्त्वनेन वचसाऽत्यन्तं प्रमोद,स्तथा।
सर्वे पुस्तकयोस्तयोः प्रतिलिपिं चक्रुस्तदैवोभयो-
(र्ज्ञाते सौरभवस्तुनीह कुरुते नालिर्विलम्बं ग्रहे) ।।२३१३।।

ततः क्षणादेव तथा यथेष्टं
श्रीगौरभक्तेषु बभूव सत्सु।
स्थाने तयोः पुस्तकयोः प्रचारो
(व्याप्नोति शीघ्रं जलमच्छवस्त्रम्) ।।२३१४।।

वारम्वारमसौ महाप्रभुरहो ! सर्वान् स्वभक्तांस्तथा
गौराङ्गः स्म निरीक्षते, स्म कुरुतस्तल्लोचने मार्गणम्।
तस्मिन् भक्तगणे निमायिहृदये कस्यापि चैकस्य तत्-
स्वात्यन्तप्रियपात्रकस्य (नयनेऽशान्ते प्रियान्वेषणे) ।।२३१५।।

यद्दर्शनेऽपि बहु सम्प्रति नाप्नुतां स्वं
पात्रं प्रियं ननु, भवान् स्वयमेव भक्तान्।
पप्रच्छ तर्हि 'हरिदाससुहृन्महात्मा
नो दृश्यते, किमिह नागतवान् स पुर्याम्?'।।२३१६।।

उक्तं श्रीप्रभुणा निमायिसुहृदा पृष्टैस्तु भक्तैः 'सहाऽ-
स्माभिः सोऽत्र तथागतस्तु, न परं जाने क्व मध्येऽवसत्?'।
चत्वारो हरिदासमार्गणपराः श्रुत्वैव तद् द्वौ तथा
भक्ताश्चेलु,रमी तथाहि ददृशुः (सद्वस्तु नो लुप्यति)।।२३१७।।

एकान्ते त्वपसृत्य राजपथतः कामं तथैकत्र स
स्थाने चैव भुवि स्थितोऽस्ति सरलं दासो महात्मा हरिः।

गत्वा तं 'हरिदासजी ! चलतु हेऽस्मार्षीद् भवन्तं प्रभुः'
प्रोचे भक्तजनो (निमायिसुमना नो विस्मरत्यच्छलम्) ।।२३१८।।

ऊचे कातरया गिरा हरिजनो दैन्येन चैवाधिकं
'नीचोऽहं पतितस्तु मन्दिरमुपस्थाने प्रकारेण किम्?'।
कामं गन्तुमथ क्षमोऽस्मि, भविता सेवार्चनाकारिणां
स्पर्शः क्वापि महानुभावमनसामङ्गैर्ममाऽपावनैः ।।२३१९।।

वार्तैषा भविता तदा ननु ममाऽसह्या, स्वपादौ कथं ?
धर्तुं राजपथेऽमले भगवतः शक्तोऽस्म्यहं पामरः।
जल्पन्तु, प्रणतिं महाप्रभुपदे भूयश्च भूयश्च मे,
तत्कुर्वन्तु निवेदनं तु सुहृदि स्थानेऽत्र मत्पक्षतः ।।२३२०।।

आगन्तुं नहि शक्ता श्रीमन्मन्दिरपार्श्वे।
क्वाप्यत्रैव तथाऽहं स्थाता मार्गसमीपे' ।।२३२१।।

भक्तैः श्रावितमेतदस्य सुहृदो गत्वा प्रभोर्वृत्तकं
श्रुत्वैवेदमथ प्रभोः सुमनसो नानन्दसीमाऽवसत्।
भूयोऽमुष्य महात्मनो ननु हरेर्दासस्य भूयः प्रभुः
शंसां शीलचरित्रयोश्च कुरुतेऽमानिस्वभावस्य सः ।।२३२२।।

तद् भक्तान् कथयन् बभूव सुमना गौरो 'भवद्भिः श्रुतं,
यो बोधिष्यति कौ तृणादपि निजं नीचं तथैवाधिकम्।
भूयादेव स कृष्णकीर्तनकृतेरद्धाऽधिकारी जनः'
(सत्प्रेमा सरलात्मनीह विशति स्थाने स्फुटं वाऽयते) ।।२३२३।।

उक्त्वा चायमियन्महाप्रभुरहो ! संचिन्तयन् विद्यते
संबन्धे हरिदाससाधुविषये चैव, क्षणे तत्र तु।
श्रीमन्मन्दिरकप्रबन्धकयुतश्चागत्य तत्र स्थितः
काशीमिश्रबुधोऽपि, मिश्रमवदद् दृष्ट्वैव गौरप्रभुः ।।२३२४।।

'मिश्राऽमुष्य गृहस्य विद्यते पार्श्वे या ननु पुष्पवाटिका।
दातुं तत्र भवान् क्षमोऽस्ति मे त्वेकान्तं च कुटीरमेककम्' ।।२३२५।।

काशीमिश्रबुधो जगाद तरसाऽमुं बद्धहस्तः 'प्रभो !
वाक्यं कीदृशकं भवान् कथयतेऽदः, सर्वमेवास्ति तु।

सत्प्रीतेर्भवतोऽत्र, कीदृशमहो ! दानं, भवान् यत्र यं
वाञ्छे,त्स्थापयितुं क्षमः (प्रभुरिह स्थाने सति स्थापकः)।।२३२६।।

आज्ञां ददातु ननु निःसरणस्य यस्मै,
तत्कालमेव बहिरेव च निःसरेत्सः।
दासो वयन्तु भवतो, ननु नो यथाज्ञां
दाता, तथाहि भविताऽखिलपालनं तु'।।२३२७।।

उक्त्वेदं ननु सुन्दरञ्च कुसुमोद्याने कुटीरं तथै-
कान्तं मार्जयति स्म चैकमपरं काशीकमिश्रः, पुनः।
गोपीनाथबुधश्च सर्वसुहृदावासव्यवस्थामभूत्-
कुर्वन् (कार्यभरोऽत्र सौहृदवतां सत्साधुसेवार्थिनाम्)।।२३२८।।

वाणीनाथसुहृच्च मन्दिरगताः काशीकमिश्रस्तथाऽ-
न्येऽन्ये कर्मकराश्च भक्तसुहृदां नाना प्रसादं बहु।
संभारेषु निवेश्य सौहृदभरास्ते चाऽऽनयन्तोऽभवन्,
गौराङ्गो हरिदासपार्श्वमगमच्चोत्थाय शीघ्रं प्रभुः ।।२३२६।।

कुर्वन्नस्ति भुवि स्थितस्तु भगवन्नाम्नामिहोच्चारणं
साधुश्रीहरिदासजी, निजमुखं दृष्ट्वा तु दूरादसौ।
आयान्तं स्वमहाप्रभुं हरिजनो भूमौ विलुट्य प्रभोः
साष्टाङ्गं प्रणतिञ्चकार (नियतिस्त्वष्टौ, तदष्टौ नतिः)।।२३३०।।

शीघ्रं हरिदासं तूत्थाप्य कराभ्याम्।
चक्रे स्वगलेऽयं गौराङ्गनिमायी।।२३३१।।

वाण्या कातरयाऽधिकं हरिजनः कुर्वन्नभूत्प्रार्थनां
'स्पर्शं नो कुरुतां भवान्नमुमहो ! नीचाधमं हे प्रभो!।
नाऽऽयानस्म्यत एव तत्र, न ममाऽशुद्धं दयालोऽङ्गकं
संस्पर्शक्षममस्ति पावनभवच्छ्रीविग्रहस्यात्र कौ'।।२३३२।।

स्नेहेनातिशयेन सार्धमवदद् गौरप्रभुः 'पावनं
ह्यस्त्यङ्गं हरिदास ! चैव भवतोऽत्यन्तं भवत्स्पर्शतः।
कौ कोटिक्रतुसत्फलं मृदुहृदां संलभ्यते त्वञ्जसा,
पूतं सम्प्रति कर्तुमेव निजकं कुर्वे भवत्स्पर्शकम् ।।२३३३।।

पापं कोटिकजन्मनां ननु मम क्षाता भवद्विग्रह-
स्पर्शाद्,दास! भवादृशः सुमनसोऽङ्गस्पर्शनं प्रेमिणः।
साधोर्भागवतस्य वैष्णवसतोऽप्राप्यं सुराणामपि'
(क्षुद्रार्थे नयतीह मानवतनुं यो, नो महात्माऽत्र सः) ।।२३३४।।

उक्त्वेयद्धरिदासमेष निजके सङ्गे च नीत्वा प्रभुः
पुष्पोद्यानमगात्कुटीरमवदत्तस्मै तथा दर्शयन्।
एकान्तं 'रहसि त्विहैव भगवन्नाम्नां जपं संवसन्
स्यात्कुर्वन्ननिशं (रसाब्धिमयते क्षुद्रोऽपि सत्संयुतः) ।।२३३५।।

पार्श्वे चैव ममाऽथ तिष्ठतु सदा,त्रैव प्रसादो महा-
नायाता भवतः कृते, भगवतश्चक्रस्य संदर्शनात्।
कार्यं ध्यानमथात्मनि प्रियजगन्नाथेक्षणस्यापरं
(रूपं तिष्ठतु तु स्मृतौ सुमनसां, दूरे प्रियो वाऽन्तिके)।।२३३६।।

आयानहमस्मि सरित्पतिस्नानाद्भवदीक्षणहेतवे।
नित्यं त्विह' (सज्जनसङ्गतः कार्याऽऽत्मनिरीक्षणसाधना) ।।२३३७।।

आदेशं हरिदासजी निजशिरोधार्यं विधाय प्रभो-
स्तस्मिन्निर्जनशान्तपावनरहःस्थाने महात्माऽवसत्।
नित्यानन्दमुकुन्ददत्तजगदानन्दादिभक्तान् प्रिया-
नब्धिस्नानमयान्निमायिसुमना नीत्वा स्वसङ्गे प्रभुः।।२३३८।।

अब्धिस्नानमकार्षुरत्र निखिलाः स्नाते निमायिप्रभौ,
चूडादर्शनहेतवे भगवतः सर्वे मिलित्वाऽगमन्।
सर्वे दर्शनतो निवृत्य सुहृदः प्राप्ताः समीपे प्रभो,-
स्तावन्मन्दिरतः कृतेऽखिलसतामाप्तः प्रसादोऽप्यभूत्।।२३३९।।

सर्वानासयति स्म तत्र युगपद् गौरः प्रसादाप्तये,
भक्तानां परिवेषणं स्वयमसौ चक्रे कराभ्यां तथा।
आसीत्तत्परिवेषणस्य तु विधा लोकोत्तरैव प्रभोः
(सर्वं लोकविलक्षणं हि मननं स्थानं प्रयाणं सताम्) ।।२३४०।।

गौराङ्गः परिवेषयत्यलमहो ! चैकैकभक्ताऽऽमुखे
भक्ष्यं स्वादु महाप्रसादमधुना द्वाभ्यां चतुर्भिस्त्व,थ।

आसीदत्र निषेधमेव सुहृदाऽनेन प्रसादस्य कः
कर्तुं संपरिवेषितस्य सुमनाः स्थाने निमायी क्षमः।।२३४१।।

सर्वेषां परिवेषयन्नयमतः स्वेच्छानुसारं प्रभुः
पर्याप्तं तु महाप्रसादमभव,ल्लब्धुं प्रसादं ददौ।
आदेशं सुमनास्तथाहि परितः संवेषणानन्तरं,
स्वीचक्रे ननु कोऽपि तं न तु विना पूर्वं प्रसादाऽऽदनम्।।२३४२।।

गौरस्तन्निषसाद सौहृदभरात्सार्धं पुरीभारती-
मुख्यैरन्यमहात्मभिः सहृदयो लब्धुं प्रसादं प्रभुः।
गोपीनाथबुधस्तथाहि जगदानन्दश्च दामोदरो
नित्यादिः परिवेषयन्ति बहवो भक्ताः समेषां ततः।।२३४३।।

अन्यदिनापेक्षासु निमायी त्वद्य स नैवेद्यं बहु चादत्।
आग्रहपूर्वं चादयति स्म स्वप्रियभक्तांस्तानपि सर्वान्।।२३४४।।

विश्रामं कृतवांस्तथाऽल्पमखिलो जग्धे प्रसादे, पुना
रामानन्दकसार्वभौमसुधियावागत्य भक्तैर्जनैः।
संयुक्तौ च परस्परं परिचयं संकारयामास तद्
गौरो,ऽन्योन्यममी तथापरिचयं लब्ध्वा प्रसन्ना बहु।।२३४५।।

यातो मन्दिरमेष तत्प्रियजगन्नाथस्य सङ्गेऽखिला-
न्नीत्वा भक्तजनान्महाप्रभुरहो ! संकीर्तनं मन्दिरे।
आरब्धं गत एव चाऽकृत, तथा भक्ताः पृथग्वै पृथग्
गौराङ्गं परिवृत्य सन्ति च चतुर्वर्गास्त्वमी कीर्तने।।२३४६।।

मध्येकीर्तनमेष नृत्यति तथा भूत्वा प्रभुर्विह्वलः
प्रीता,वद्य महाप्रभोरतिशयानन्दाऽऽगमः कीर्तने।
जात,स्तस्य तनौ बभूव निखिलो भावोदयः सात्त्विकः
प्रेम्णो, भक्तजनाश्च सन्ति निरताः सर्वेऽत्र संकीर्तने।।२३४७।।

एवं कीर्तनकं कदापि ददृशुर्न श्रीपुरीवासिनः
स्थाने पूर्वमित,स्तथाहि सुहृदामन्योन्यमालिङ्गनम्।
नाना सात्त्विकभावसंविकसनं मूर्च्छास्थितेः कीर्तनं
भक्तानां पतनं सुनर्तनमथाऽऽश्चर्येण सर्वे समम्।।२३४८।।

दृश्यं ते तददृष्टपूर्वमखिलाः पश्यन्ति, रुद्रो महा-
राजोऽपि प्रभुनृत्यकीर्तनमिदं त्वारुह्य चाट्टालिकाम्।
पश्यन्नस्ति, विलोक्य नृत्यमपरं लोकोत्तरं तन्महा-
राजस्य प्रभुमेलनस्य ववृधे वाञ्छाऽधिकं साऽधिकम्।।२३४९।।

कुर्वन् कीर्तनमेव भक्तसहितः श्रीमन्दिरस्य प्रभुः
कृत्वाऽसौ सुमनाः परिक्रमणकं यातश्च सन्ध्याऽऽगतः।
श्रीपुष्पाञ्जलिदर्शनं भगवतश्चक्रे, तदैकस्वरात्
स्तोत्रं ते सुहृदोऽपठन् भगवतः (स्तोत्रं समूहस्वरम्)।।२३५०।।

सर्वेभ्यः सुहृदां प्रभोर्भगवतो मालां तथा चन्दनं
भक्तेभ्योऽन्नमयं प्रसादमददाच्छ्रीमन्दिरस्यार्चकः।
लब्ध्वा श्रीभगवत्प्रसादमथ स स्थाने निजे चागत-
श्चैतन्यः सुमनाः स्वभक्तसहित-(श्चिच्चेष्टते सङ्गिभिः)।।२३५१।।

काशीमिश्रसुहृत्तथा स्म कुरुते सन्ध्याप्रसादस्य वि-
न्यासं पूर्वत एव, तच्च सहितः सर्वैः प्रसादं प्रभुः।
भक्तैराद, ततः प्रभोरनुमतिं नीत्वा च सर्वे तथा
भक्ताः स्वप्तुमयुर्निजे ननु निजे विश्रामवासस्थले।।२३५२।।

गौडीयभक्तसुहृदो न्यवसंस्तथाऽमी
यावद्दिनानि मधुरेक्षणनाथपुर्याम्।
आनन्दकीर्तनविहारकथास्तथैवं
कुर्वन् महाप्रभुरभूत्सततं समं तैः।।२३५३।।



# राजपुत्राय प्रेमदानम्

१२३. प्रेमाऽऽदाता पात्रं दात्रा तेन क्रियते कश्चित्।
वस्तु भौतिकं लब्धुं दातुं सर्वं शक्यं क्रमशः
तत्तस्याऽऽदाता दाता भुवि सामान्यस्त्वपि शक्यः।
तत्सुखसुखिता प्रेमभावनाऽलौकिकनिष्ठासारः
प्रेममात्रकाकारो दाता तस्याऽऽदाताऽप्यन्यः।।

संसारे भवति प्रबुद्धिजगतामेकः स्वभावो नृणा-,
मुत्कस्तिष्ठति सोऽधिकं ननु रहोवार्तां प्रमातुं तथा।
सर्वेषां सुलभोऽस्ति यस्तु विषयो, नो जायते तत्कृते
ह्युत्कण्ठा भुवि कस्यचित् (प्रकृतितो लब्धे रमन्तेऽखिलाः) ।।२३५४।।

एकान्ते निहितः स एव विषयश्चेत्सर्वदृष्टेः परो,
जिज्ञासा प्रति तं भविष्यति नृणां संवर्धमानैव तत्।
वार्तैकास्ति पराऽपि, वस्तु यदहो ! नुर्यावतैवाधिकं
संसारेऽत्र परिश्रमेण, विपुलं यावत्प्रतीक्षावधेः- ।।२३५५।।

पश्चादेव च लभ्यते, भवति तत्तावत्प्रभूता प्रति
त्वेव प्रीतिरपीह, न स्वयमहो ! सन्तीह वस्तूनि वा।
निर्मूल्यानि समूल्यकानि भुवने, सौलभ्यदौर्लभ्यके
तत्प्राप्तेस्तु विलक्ष्य लोकनिवहैस्तन्मूल्यकं स्थापितम्।।२३५६।।

हीरश्चेन्ननु मौक्तिकं भुवि मिलेद्वा कर्करं प्रस्तरं
सर्वत्रैव, च काममेव यदि मृत्तुल्यं सुवर्णं तथा।
संलभ्येत विना श्रमन्तु खनना,त्तन्नो जनेष्वादरो
वस्तूनां भविता त्वियानतिशयश्चैषां, तथैतानि तु-।।२३५७।।

बुध्येरन् बहुमूल्यकानि भुवि नो, भूयस्तु भूयस्ततोऽ-
हं लोकान् कथयामि, वाञ्छति यदि स्वं मूल्यवन्तं तथा।
कर्तुं, कुत्रचनाऽपि कर्मणि तदा घोरं करोतु श्रमं,
स्वं चोत्थापयतु क्षितावुपरि तत्सामान्यलोकौघतः।।२३५८।।

संसाराखिलजन्तुभिर्ननु समं प्रेमक्रियां शिक्षतां,
सत्प्रेमप्रवणात्मनाऽत्र भविता नूनं भवान्मूल्यवान्।

सर्वश्रेष्ठमता भवच्चरणयोस्ते लोटितारो महा-
राजा, नापि मनाक्करिष्यति तृषां तन्मानसम्मानयोः।।२३५९।।

आसीन्नो मिलनस्य स प्रकटयन् राज्ञा यथेच्छां यथा
गौराङ्गः, कटकाधिपस्य सुहृदो रुद्रप्रतापस्य तु।
औत्सुक्यं प्रभुदर्शनस्य ववृधेऽत्यन्तं तथा वै तथा
जाग्रंश्चिन्तयति स्वपंश्च विषयेऽथाऽद्य प्रभोरेव सः।।२३६०।।

ऊचे 'यन्मिलितुं स्वयं सहमतो नास्ति प्रभुः' पण्डितो
भौमस्तत्कटकाधिपो नरपतिः श्रीसार्वभौमाध्वना।
तद्भक्तेषु तथार्थनां विहितवान् स्थानेऽन्तरङ्गेषु स
श्रीगौरस्य, ममोन्मुखं प्रभुमनः कुर्युस्त्वमी कर्षितम्।।२३६१।।

स्नेहं तत्त्वधिकं प्रकाश्य स रमानन्दं प्रभोः सन्निधौ
रायं प्रेषितवानभूच्च, परमो भक्तोऽन्तरङ्गोऽभवत्।
आसीद् गौरमहाप्रभोः सहृदयो रायस्तथानेकश-
श्चक्रे सोऽथ निवेदनं सुहृदि च श्रीमन्निमायिप्रभौ।।२३६२।।

किन्तु ददौ नो सम्मतिमेषः। स्वां मिलितुं तां क्वापि च राज्ञा।।२३६३।।

एकस्मिन् दिवसे तदा सुमनसो गौरप्रभोः सन्निधौ
रामानन्दकसार्वभौमसहितश्रीनित्यमुख्यास्तथा।
अत्यन्तं सुहृदस्त्विताश्च बहवो भक्तान्तरङ्गाः परे
(सम्भूय क्रियते,ऽपि दुःस्थितिसमाधानं तदा जायते)।।२३६४।।

प्राप्य श्रीप्रभुगौरपार्श्व,मपि नो कस्याप्यभूत्साहसं,
राज्ञो दर्शनकानुशंसनममी कर्तुं भवेयुः क्षमाः।
अन्योन्याभिमुखं दृशोरिह दृशोरेव प्रभुप्रेमिणः
सङ्केतं ननु कुर्वते (विनयिनः सङ्केतचेष्टाधिकाः)।।२३६५।।

कृत्वा किञ्चन साहसं कथयते नित्यस्तदा 'हे प्रभो!
वाञ्छामोऽत्र निवेदनं सुमनसः किञ्चिद् विधातुं वयम्।
सङ्कोचः कथने निमायिमनसां कामन्तु सञ्जायते
(श्रीमद्विग्रहसम्मुखे स्वकथनं सङ्कोचहेतुः सताम्)।।२३६६।।

यदा निमायिंस्तु मनोगतं स्वं
भावं वदामो न भवन्तमेव।
तदा पुनः कं कथयेम? तस्मा-
दाज्ञाऽस्तु तर्हि प्रवदेम हार्दम्'।।२३६७।।

'श्रीपाद! वार्ता भवतः कृते किं
तथास्ति सङ्कोचविधेः सदात्मन्!।
इच्छेद् भवान् वक्तुमथेह यत्तु
ब्रूतामभीतः' (परतो हि भीतिः)।।२३६८।।

मन्दं नित्यसुहृज्जगाद 'सुमनो! रुद्रप्रतापो महा-
राजो दर्शनहेतवेऽस्ति भवतस्तूत्को भवंश्चाधिकम्।
कस्माद् दर्शनदानतो ननु भवास्तं वारयत्यात्मनो,
भव्याऽस्योपरि ते कृपा, हरिजगनाथस्य भक्तोऽस्ति सः'।।२३६९।।

गाम्भीर्येण समं मनाक्कथयति 'श्रीपाद!' गौरप्रभु-
'र्नो जाने, भवतस्तु मां प्रति तथाऽद्धा कीदृशी धारणा।
संपन्ना,ऽस्तु यथापि, (वाञ्छति भवान्) ख्यातिं परामाप्नुया-
मत्राहं, कटकं तथैत्य च महाराजं मिलेयं यतिः।।२३७०।।

मन्न भव्यं त्विदम्'। (स्वस्पृहोऽश्रीप्रियः)।।२३७१।

गन्तुं गृणाति कटकं ननु को भवन्तं?,
त्वत्रैव भूपतिरयञ्च समस्थितोऽस्ति।
देह्यस्य दर्शनमथ प्रियमन्दिरे तु,
स्थानेऽत्र वाऽपि स नृपः प्रभवेत्तथाऽऽप्तुम्'।।२३७२।।

स्नेहं प्रभुः प्रकटयंस्तु जगाद 'चैव
त्वावश्यकत्वमिह तादृशमस्ति किं मे?।
अत्राह्वयानि तमहं, यतिभिक्षुकोऽहं,
राजा स चास्ति, मम तस्य किमस्ति योगः?'।।२३७३।।

'न राजभावान्मिलितुं स वाञ्छति
प्रभो! स भक्तो भवतस्तु विद्यते।
यथा हि सर्वः कुरुतेऽत्र दर्शनं,
तथैव चाज्ञां प्रददातु तस्य भोः!'।।२३७४।।

श्रीगौराङ्गमहाप्रभुः कथयते किञ्चिद्धसित्वा 'भवान्
ब्रूते कीदृशमेतदद्य वचनं सर्वं, नहि ज्ञायते।
चित्ते किं भवतो नवेयमधुना वार्ताऽऽगता, सन्ति यत्-
कल्याणाय विचिन्तितास्त्वतिशयं सर्वे भवन्तस्त्वियत्-।।२३७५।।

नूनं सोऽस्ति धरातले त्वतिमहाभाग,स्तु कुर्यां परं
चैतन्योऽत्र विरुद्धकं कथमहं संन्यासधर्माध्वनः।
कुर्वन्नस्तु जनस्तु कर्म भुवनेऽसंख्यं च यावद्दिनं
कामं दुष्टमथाऽत्र दुष्टमपरं (कर्मार्थमद्धा जनिः)।।२३७६।।

संन्यासी परमत्र कोऽपि कुरुते भूत्वा तथादूषितं
कर्मैकं त्वपि, तर्हि तस्य जनताऽद्धाऽऽलोचनां दुर्वहाम्।
अत्यन्तं विदधाति, चापि धवले वस्त्रे स्फुटं लक्ष्यते
चिह्नं स्वल्पमपीह (सद्व्यवहृतेः कौ साधुता चीयते)।।२३७७।।

सल्लोकापरलोकयोर्भवति तद्धानिस्तु संन्यासिनो
राज्ञो दर्शनतो द्वयो,र्ननु जना नानाविधाऽऽलोचनाम्।
कर्तारो, ननु यातु चान्यजनतावार्ता, गुरुर्मे महा-
राजो भर्त्सयिता तु माऽधिकमयं दामोदरः पण्डितः।।२३७८।।

अस्त्वेतन्निखिलं प्रयातु वचनं, दामोदरः पण्डितो
यद्याज्ञां प्रददीत, तर्हि मिलितुं राज्ञाऽस्म्यहं प्रस्तुतः'।
तद्दामोदरपण्डिताऽऽमुखमसौ मन्दस्मितेन प्रभुः
पश्यन्नस्ति तथा निगद्य (सुहृदः कश्चिद् भवेदाश्रयः)।।२३७९।।

दामोदरो दृशमधो भुवि पण्डितः स्वां
चक्रे, स किञ्चिदपि नाऽऽह महाप्रभुञ्च।
ऊचे महाप्रभुरथ स्वयमेष गौरो
'दामोदर! प्रियसुहृद्! वद, किं ब्रवीषि?'।।२३८०।।

तद् दामोदरपण्डितः कथयते मन्दञ्च मन्दं कृताऽ-
धोदृष्टिः 'कुरुतां यथेच्छति, भवानस्ति स्वतन्त्रेश्वरः।
पृच्छाया विषयेऽत्र मे तु किमहो! वार्ता?, समर्थोऽस्मि किं?
दातुं सम्मतिमेव चात्रभवतो-(ऽद्धा सन्मतिः सम्मतिः)।।२३८१।।

गौराङ्गोऽपदिशन् वचः कथयति भ्रातोऽस्य नो सम्मति,-
वार्तां मुञ्चतु तत्त्विमां' तु सुहृदो नित्योऽबुधंश्चाखिलाः।
भक्ता, यद्धृदयं प्रभोर्द्रुतमहो! राज्ञो गुणै,श्चाधुना
स्नेहोऽप्यस्य बभूव तु प्रति नृपं (स्निह्यन्ति सन्तः स्वतः)।।२३८२।।

किन्त्वत्रैव विलक्ष्य नित्ययतिको वार्तासमाप्तिं तथा
ब्रूते 'तस्य ददातु दर्शनकृते नाज्ञां भवानस्तु, तत्।
एकं चाम्बरमेव तन्निजतनुस्पृष्टं कृतार्थं प्रभो!
दत्वा तं कुरुतां, हि तस्य भविता तोषोऽमुनैवात्मनः'।।२३८३।।

श्रीगौराङ्गमहाप्रभुः कथयति स्नेहस्वरे साम्प्रतं
'बाबा! यत्स्वदते निमायिभवतः कुर्यात्तदेवाधुना।
लोके काष्ठकपुत्तली तु भवतो हस्तस्य वर्ते, यथाऽ-
द्धा मां नर्तयिता भवान्ननु, तथा श्रीपाद! हे! नर्तिता।।२३८४।।

वाञ्छाविपरीतं कर्तुं भवतः किम्।
वर्ते प्रभुरेव?' (स्नेही परतन्त्रः)।।२३८५।।

चैतन्यानुमतिं च तेन विधिना लब्ध्वा च गोविन्दतो
नित्यानन्दसुहृन्महाप्रभुबहिर्वासं तथा प्रच्छदम्।
नीत्वैकं बुधसार्वभौमकरतो नित्यावधूतो महा-
राजस्यान्तिकमेष लम्भयति (संन्यासी परार्थप्रियः)।।२३८६।।

प्रसन्नताऽभून्महती च राज्ञो,
लब्ध्वाङ्गवस्त्रं प्रभुगौरधाम्नः।
सम्मानपूर्वं महदेव चेदं
रक्षन्नभूत्स्वस्य तथा स पार्श्वे।।२३८७।।

रामानन्दसुहृत्तथैकदा ब्रूते 'राजसुतस्तु हे प्रभो!।
आगत्य प्रभुरस्ति दर्शनं कर्तुं किं भवतो निमायिनः?'।।२३८८।।

'अस्त्विच्छा भवतो यथा, च किमहं ब्रूयां भवन्तं तथा
संबन्धेऽत्र, करोतु, वाञ्छति यथा, प्रेमिन्! स्वतन्त्रो भवान्।
दोषस्त्वागमने न कस्यचिदपि स्थाने, परं सम्मुखे
जागर्ति त्वभिमानिनो, निजगतो भावोऽभिमानोऽपि कौ।।२३८९।।

तस्माद्राजकुले निषिद्धमिति कौ संन्यासिनामात्मनां
निर्णीतं गमनं, भवत्वपि न किं मर्त्यात्मनां कीदृशी।
सत्साधुप्रकृतिस्तथाहि, गमनात्सम्मानमानस्थले
त्वायात्येव तमोगुणो मृदुहृदामप्यल्पमल्पं नृणाम्।।२३६०।।

कौ बालास्तु भवन्ति चात्र सरलास्तन्मानसम्मानयोः
शिष्टाचारसमादरस्य मननं तेषां भवत्येव नो।
उद्वेगो नहि जायते जगति तत्कस्यापि तन्मेलने
(संन्यस्तप्रकृतेर्भवे विषयिणस्तूद्विग्नता मानवात्)।।२३६१।।

आगन्तुं यदि चेच्छेत्स्थाने राजसुत,स्तत्।
आनेतुं प्रभुरस्ति ह्यानन्देन भवांस्तम्'।।२३६२।।

लब्ध्वाऽऽज्ञां च महाप्रभोर्निजमहाराजस्य वै तत्क्षणं
रामानन्दसुहृज्जगाम वसतिस्थानं, तदानीं स्थितः।
पुर्यामेव बभूव तन्निजपरीवारेण सार्धं महा-
राजः (सद्घटना तथाहि घटते स्थानेऽनुकूले क्षणे)।।२३६३।।

पुर्यामागमनं पुरा त्रिदिवसाच्छ्रीस्नानयात्रोत्सवात्
कर्तव्यं भवतीति भूपतिकृते, तत्रैव संतिष्ठते।
भूपोऽयं पुरुषोत्तमोत्सवरथश्रीयुक्तयात्रावधिं
(द्रष्टव्यः पुरुषोत्तमो हि पुरुषैः पुर्यां क्षरे स्वेऽक्षरैः)।।२३६४।।

आसीत्तत्र तदागतो ननु महाराजोऽवरोधोऽस्य नो
रामानन्दसदात्मनः क्वचिदपि स्थाने नृपान्तःपुरे।
आसीत्संगमनस्य, स प्रचलितोऽन्तो, राजपुत्रं तथा
प्रोचे तत्प्रभुदर्शनाय (सुतकद्वारा प्रसिद्धिः पितुः)।।२३६५।।

आसीत्पूर्वत एव चेप्सितमिदं राजात्मजस्योभयोः
पित्रोरान्तरिकं तथाऽस्य सुहृदो राज्ञश्च राज्ञ्यास्तथा।
रामानन्दसुहृत्स्म सज्जयति तद्राजात्मजं चाधिकं
(सज्जा दृश्यसुवस्तुनः प्रगणिता शृङ्गारवात्सल्ययोः)।।२३६६।।

आसीद् भूरि स काममेव विपुलं राजात्मजः सुन्दर-
स्त्वेकं, रायमहाशयः कविमनाः शृङ्गारमस्या,त्मनः।
पाणिभ्यां कुरुते पुनः, कमलवन्नेत्रे स्तृते सुन्दरे
चास्तां, राजसुतस्य मस्तकमहो! विस्तीर्णमासीत्पुनः।।२३६७।।

आस्तां चापमिवोन्नते ह्यवनते चोभे तथा भ्रूलते,
दीर्घौ राजसुतस्य कर्णयुगले मुक्तायुतौ कुण्डलौ।
रामानन्दकरायजीसहृदयः संवासयामास तत्-
कण्ठे मौक्तिकहारमङ्गिनि तथा पीताम्बरं सुन्दरम्।।२३९८।।

संजाता बहुमूल्यपीतपटकं प्रावृत्य राजात्मजेऽ-
पूर्वैव त्वधुना च्छटा, कुरलिनः कृष्णांस्तथा कुन्तलान्।
रायो राजसुतस्य च व्यवसितान् कृत्वाऽऽत्मपाणिद्वया-
देकं सुन्दरकं बबन्ध मुकुटं तेषामुपर्यल्पकम्।।२३९९।।

एवमसौ कविरायोऽलङ्कृतकं बहु कृत्वा।
तं नयते निजसङ्गे श्रीप्रभुदर्शनहेतोः।।२४००।।

जातः प्रेम्णि महाप्रभुः सहृदयो दृष्ट्वैव राजात्मजं
चाधीरः, सुहृदः प्रतीतिरधुना स्थाने भवन्ती त्वभूत्।
मन्ये, तस्य तथाऽऽगतोऽस्ति निकटे श्रीकृष्ण एव स्फुटं
(हार्दं वस्तु यथा, तथात्मविषयप्रत्यक्षतस्तत्स्मृतिः)।।२४०१।।

दृष्ट्वैव प्रभुरेष राजसुतकं शीघ्रं तथाह्युत्थितो,
भावे राजसुतोपगूहनमहो! श्रीकृष्णसख्युः पुनः।
गाढं चाकृत, तन्महाप्रभुसतो लब्ध्वैव राजात्मजः
प्रेमालिङ्गनमेष मोदभरितः 'श्रीकृष्ण-कृष्णेति च-।।२४०२।।

उक्त्वोच्चैस्तु ननर्त, चैव युगपत्प्रेम्णोऽखिलाः सात्त्विका
भावास्तन्निखिलाङ्गके समुदिता, रायो रमानन्दजी।
तं संधारयति स्म, तेन च समं वार्ताञ्च कुर्वन्नभूद्-
गौराङ्गः शिशुसन्निभोऽतिसमयं (वार्ता प्रियाऽच्छात्मना)।।२४०३।।

भूयश्चागमनाय सौहृदभरादन्ते पुनर्वै पुन-
श्चोक्त्वा श्रीप्रभुको विसर्जति तु तं, राजा च राज्ञी तथा।
क्रोडे पुत्रमुभौ निषाद्य सुहृदो गौराङ्गकस्य स्वयं
स्नेहस्यानुभवं तथाह्यकुरुतां (स्नेहाप्तये संततिः)।।२४०४।।

प्रायस्ततश्च दिवसान्ननु राजपुत्रः
स्माऽऽयाति नित्यमिह तु प्रभुदर्शनार्थम्।
स्थानेऽभवच्च गणनाऽस्य तथान्तरङ्गे
भक्ते प्रभो-(र्मधुरता सुमनस्कभावः)।।२४०५।।



# गुण्टिचा-(उद्यानमन्दिर-) मार्जनम्

१२४. हृदयं निजमुपवेशनयोग्यं कृष्णस्येह विधेयम्।
स्फटिकोपमनिर्मलसच्चित्ते सुस्फुरति स्वयमात्मा
नैर्मल्याप्तिः सत्सङ्गतितः, सत्सङ्गश्चैतन्यम्।
चैतन्यप्रभुरवनौ निर्मलसहृदयहृदयादर्शः
कृष्णार्पितयच्चरितं कुरुतेऽखिलहृदयं प्रियहृदयम्।।

संसारे घटिता भवन्ति घटना नित्यं त्वसंख्यास्तथा,
प्रायस्त्वत्र मृदामदन्ति शिशवो मातुर्निलीयाऽखिलाः।
सर्वेषामिह चारणाय भुवने गोपालकानां गवां
बाला यान्ति, तथौदनं दधि पुनस्तत्रैव हस्ते निजे-।।२४०६।।

धृत्वाऽदन्ति रसालतेमनयुतं, जाने न गोपीसमा
क्रन्दन्ती कियती निजप्रियतमप्राप्त्यै भवेत्प्रेमिका।
मित्रेभ्यो धनहीनमित्रजनता स्वेभ्यो धनिभ्यस्तथाऽ-
लप्स्यन्त प्रचुरा सुदामसदृशं सम्मानमानश्रियम्।।२४०७।।

तन्नामाऽत्र परन्तु कश्चिदपि नो जानाति, तत्कारणं,
प्रेम्णस्तेषु निमायिनो ननु पराकाष्ठा न सा वर्तते।
आसीत्प्रेमसजीवमूर्तिरवनौ स्पष्टं प्रियप्रेमिणां
श्रीकृष्णो भगवांस्तु तत्र समये, तत्प्रेमसंसर्गतः -।।२४०८।।

सर्वास्तास्त्वमरास्तथाहि घटना जाताः, पुनः प्रेमिणां
भक्तानामभवन्निमायिमनसां सर्वोत्तमं साधनम्।
प्रेम्णो वर्धनहेतुकं, त्वकृतकं प्रेमैव सत्यं, समं
प्रेम्णा तु क्रियमाणमत्र निखिलं कर्माऽमरं जायते-।।२४०६।।

भूमौ प्रेमवदेव तादृशजराहीनं तथा शाश्वतं,
प्राणानामपि चागतो यदि परित्यागक्षणः कौ समम्।
प्रेम्णा, तत्तदपि प्रतीतमयते सत्प्रेमिणां सौख्यदं
(सत्प्रेमान्वितमेव कौ परमभिप्रेतं नृणां जीवनम्)।।२४१०।।

एतेषां मरणेऽपि काविह सह स्वप्रेमिणा जायते
स्वास्वादो मधुरस्तथाहि मधुरः, प्रेम्णः पुरः का व्यथा?।

संतापस्य न नाम तत्र, हृदये वा खिन्नतायाः सता-
मालस्यस्य तथाक्लमस्य भवति स्थाने त्वभावोऽखिलम्।।२४११।।

एकोद्देश्ययुतास्तु चैकमनसः स्युः प्रेमिणो बन्धवः
पञ्चाशद् दश विंशति,र्न गमनाऽपेक्षा तदा जायते।
वैकुण्ठस्य सुखानुभूतिकरणे त्वन्यत्र भूयोऽवने,-
वैंकुण्ठस्य सुखं तथाहि मिलते तत्सङ्गतावेव कौ।।२४१२।।

लोकेऽत्र कर्म यदपि क्रियते मिलित्वा
सत्प्रेमपूर्वकमहो! सह तैः सुहृद्भिः।
सत्प्रेमरूपमवनौ सुहृदां तदेव
त्वानन्दमोदमयमेव भवत्यखण्डम्।।२४१३।।

चक्रे नित्यमथ प्रभुर्नवनवा गौडीयभक्तैः समं
क्रीडा,स्तस्य तु भोजनञ्च भजनं स्नानञ्च संकीर्तनम्।
सर्वं प्रेममयं तथैव च परीहासश्च हासोऽभवत्
(प्रेम्णोऽन्यन्न निमायिनः प्रकरणं प्रेमावतारात्मनः)।।२४१४।।

सर्वो भक्तजनः स्म भोजयति तं नित्यं निमायिप्रभुं
गौराङ्गं क्रमशो निजे ननु निजे स्थाने, चतुर्षु त्रिषु।
एकैकं दिवसं महाप्रभुरपि स्थानेषु मोदार्थकं
भक्तानां कुरुते स्म भोजनमथाल्पाल्पं (प्रियः प्रीतिदः)।।२४१५।।

नीत्वैव सङ्गे स जगाम मन्दिरे
भक्तांश्चकारैव सहाऽऽप्लवं च तैः।
तथोपवेश्यैव निजेऽन्तिकेऽखिलान्
प्रसादमाप्नोत्स्वजगत्परात्मनः।।२४१६।।

आयान्नेवमभून्निमायिकरथश्रीयुक्तयात्राक्षणः
सामीप्ये च शनैःशनैः, सह महालक्ष्म्या रहःस्थानके।
यावत्पञ्चदशाऽथ तस्य दिवसानेकान्तवासात्परं
प्राप्तः सन्निकटं तथैव च जगन्नाथस्य सोऽपि क्षणः-।।२४१७।।

पट्टोन्मोचनकस्य, सोऽपरं कर्तुं प्रेमकुतूहलं प्रभुः।
निश्चिच्ये दिनपूर्वमत्र तु श्रीनेत्रोत्सवकस्य साम्प्रतम्।।२४१८।।

अस्ति श्रीयुतमन्दिराद् भगवतः क्रोशात्मदूरे जग-
न्नाथस्योपवनात्ममन्दिरमथैकं गुण्टिचानामकम्।
आगत्यात्र तथैव तादृशरथश्रीयुक्तयात्राक्षणे
विश्राम्यत्यधिरोहणं भगवतः, सप्ताहमेकं तथा-।।२४१६।।

प्रायोऽत्रैव करोति सोऽथ भगवान् वासं, पुनर्मन्दिरे
स्वे चायाति निवृत्य, सेयमुचिता यात्रा रथस्य श्रियः।
यात्रायाः क्रियते रथस्य सुहृदः पूर्वन्तु नेत्रोत्सवः,
पद्माक्षस्य निमायिनो भगवतस्तस्मिन् दिने जायते-।।२४२०।।

पश्चादेककपक्षकस्य जनतालोकस्य संदर्शनं,
चक्रेऽसौ दिनपूर्वमेव सुमना नेत्रोत्सवस्य प्रभुः।
पुष्पोद्यानकगुण्टिचाभवनकप्रामार्जनाभावनां
(शुद्धिं जागृतिपूर्वमेव कुरुते वासस्य दासः प्रभोः)।।२४२१।।

प्रायः प्राङ्गणमायतं शतगजं सार्धं तथा गुण्टिचा-
पुष्पोद्यानकमन्दिरस्य घटते, तस्मिन् परं मन्दिरम्।
अस्त्येकं त्वपि मूलमन्दिरपरं श्रीमन्नृसिंहप्रभो-
(र्माधुर्ये पुरुषोत्तमः (प्रियतमः) सिंहः प्रभुत्वे नरः)।।२४२२।।

स्यातां ते दश-पञ्च, षोडश गजैरद्धाऽऽयते विस्तृते,
काशीमिश्रकसार्वभौमसुधियौ चाहूय गौरप्रभुः।
चक्रेऽसौ प्रकटं तयोर्निजमनोभावं, परं विस्मयः
सर्वेषामभवन् (निमायिहृदयो लोकोत्तराश्चर्यदः)।।२४२३।।

'श्रीगुण्टिचाभवनमत्र महाप्रभो! हे!
यात्राक्षणे महति मृज्यत एव' काशी।
ब्रूते 'करिष्यति भवान् किमिदं तु कृत्वा,
प्रेमन्! भवांस्तु हरिकीर्तनमेव कुर्यात्'।।२४२४।।

'विद्वान् जल्पति मिश्रजी! हरिजगन्नाथस्य भक्तो भवान्
भूत्वैवं वचनं? हरेर्भगवतः सेवासु किञ्चित्त्वपि।
कार्यं नो लघुकं, भवेद् भगवतोऽद्धा तुच्छतुच्छात्मनः
सेवायास्त्वपि कावदःकरदिशा सौभाग्यमाप्तं, तदा-।।२४२५।।

बोधिष्याम्यहमात्मजीवनमहो! धन्यं, परप्रेयसः
सेवायामणु वा महद् भगवतो न ध्यानमेवाऽऽपतेत्।
यत्कर्माऽपि मिले,त्तदेव सहितो भक्त्या तथा श्रद्धया
कुर्यात् (सौहृदतस्तथाहि विहिता तोषाय सर्वा कृतिः)।।२४२६।।

एवेच्छाऽस्ति ममेत्थं, शीघ्रं सम्प्रति कुर्यात्।
अस्यायोजनमस्मा'-(दिच्छैव व्यवहारः)।।२४२७।।

कृत्वाऽऽज्ञाञ्च महाप्रभोः स्वशिरसि श्रीमिश्रकाशी तथा-
ह्युद्यानस्य तु मार्जनाय कृतवाञ्छीघ्रं प्रबन्धं पुनः।
तत्कण्डोलकमार्जनीप्रभृतिकाऽन्याऽऽवश्यकादेरपि
स्थाने साम्प्रतवस्तुनः (समुचितैरेव क्रिया वस्तुभिः)।।२४२८।।

गौराङ्गो निजसर्वभक्तसहितोऽसौ गुण्टिचामार्जना-
हेतोरद्य महाप्रभुः प्रचलितः, सार्धं निमाय्यात्मना।
रामानन्दकसार्वभौमसुधियौ वाणीकनाथो यथा
संचेलुस्त्वपि गण्यमान्यपुरुषा मुख्याश्च मुख्यास्तथा।।२४२९।।

नीत्वा सम्प्रति मार्जनीः सहृदया हस्ते क्षुरप्रान्, पुन-
स्तत्सर्वप्रथमं महाप्रभुरयं तत्रा,ऽत्र तत्रोद्गतान्।
घासाँल्लावयति स्म, जल्पति पुनः सर्वान् स्वभक्तान् भवा-
'नेकैकां ननु मार्जनीं तु निखिला गृह्णन्तु हस्ते निजे।।२४३०।।

कुर्वन्तस्त्वपमृज्य सन्तु च पृथक् स्वं स्वं तथैकत्रितं
कूटं, सम्प्रति मेलिता सुमनसां दृष्ट्वैव कूटं तथा।
सर्वेषां व्यवहारिणां ननु पुरस्कारः पुनर्वा तिर-
स्कारः' (कौ क्रियते पुरोऽत्र कुशलः सांसारिके कर्मणि)।।२४३१।।

श्रुत्वैवेयदहोऽत्र मार्जनकृतौ सर्वे जनाः संयुता-
श्चोद्यानस्य निमायिनस्तु सुहृदोऽन्योन्यञ्च सर्वेऽभवन्-।
कुर्वन्तः प्रभुसेवनात्मककृतावेकः परेण प्रति-
स्पर्धां, स्याद् गणना (लषन्ति निखिला) मे त्वेव सर्वोत्तमा।।२४३२।।

सर्वेषां वपुषो निमायिसुहृदां स्वेदः स्रवन्नस्ति तद्-
भक्तानां, निरतोऽस्ति कर्मणि परं गौरप्रभुर्यन्त्रवत्।

घर्मात्तस्य तथा परिश्रमवशात्तौ गौरवर्णारुणौ
संजातावरुणौ तथातिशयितं स्थाने कपोलौ प्रभोः।।२४३३।।

ताभ्यां स्वेदकबिन्दवः सुमनसः संक्लेदयन्ति स्म ते
सम्पूर्णं वपुरस्य सौहृदवतो निःसृत्य निःसृत्य च।
गृह्णन्नेष च मार्जनीं निजकरे गौरप्रभुः संचये
कूटस्य प्रयतोऽस्ति (कूटजगतः शुद्ध्यर्थमाप्तिः सताम्)।।२४३४।।

भक्तः कोऽपि यदि प्रमाद्यति तथा संमार्जने, दर्शयेद्
वाऽऽलस्यं, प्रभुरेष तर्हि मधुरं तस्मै ह्युपालम्भनम्।
दत्ते, पत्रमपि क्षमो न पतितं स द्रष्टुमेकं, तथाऽ-
पि प्रोत्साहयति स्म भक्तसुहृदो मध्ये च मध्ये प्रभुः।।२४३५।।

लब्ध्वा तस्य महाप्रभोः सुमनसः प्रोत्साहनं कुर्वते
भक्ताः कर्म निमायिनो द्विगुणितोत्साहेन सर्वे तथा।
उद्यानस्य च मन्दिरस्य निखिलः कूटस्तथैवं गतो
दूरं सत्वरमेव (नेतरि मृदौ मृद्वी हि सर्वा क्रिया)।।२४३६।।

सर्वेषां कुरुते निरीक्षणमसौ कूटस्य भक्तैः समं
श्रीचैतन्यमहाप्रभु,श्च कलने गौरप्रभोरेव तु।
सर्वेषामधिको, निमायिसुहृदामल्पश्च कूटस्तथाऽ-
द्वैतस्याऽत्र विनिःसृत,स्तदुपरि स्थानेऽस्य हासोऽभवत्।।२४३७।।

'अयन्तु भोला' कथयंस्तु 'बाबा'
बभूव गौरो'ऽस्ति, किमेव चास्य?।
प्रयोजनं सञ्चयकर्मणो वै,
संहारकारी ननु विद्यतेऽयम्'।।२४३८।।

हासोऽस्योपरि जातोऽत्यन्तं, तत्र विनोदः।
अन्योऽभूदपि नाना (साधुः साधुविनोदः)।।२४३९।।

उद्यानस्य च मन्दिरस्य विविधं संमार्जनानन्तरं
प्राप्तः साधुहृदां क्रमोऽमलजलप्रक्षालनस्याधुना।
आनीता बहवो घटा नवनवाः श्रीमन्दिरक्षालने,
भक्तास्ते धृतवारिसंभृतघटाः स्माऽऽयान्ति पार्श्वे प्रभोः।।२४४०।।

पाणिभ्यां प्रभुरात्मनोऽस्ति सुमनाः संक्षालयन्मन्दिरं,
चित्ताकर्षि मनोहरं ह्यतिशयं चासीत्तु तात्कालिकम्।
दृश्यं, काममभी भवन्ति वपुषा क्षीणास्तथा दुर्बला
वङ्गीया,स्त्वपि तत्र ते शिथिलतां संमार्जयन्तो गताः।।२४४१।।

ते स्वं धौतपटं तथाहि शिथिलं संस्तम्भयन्तो, घटं
धृत्वैकेन करेण तत्र निकटे स्माऽऽयान्ति गौरप्रभोः।
कस्याप्यत्र कराद् घटोऽपतदतोऽसौ भज्यते, स्तीर्यते
नीरञ्च, त्वरितं परो नवघटं भक्तोऽस्य दत्ते पुनः।।२४४२।।

तन्नीराहरणक्षणे च सरवं नीरे स्खलित्वा स्तृतेऽ-
पप्तत्कोऽपि च कोऽपि, भक्तनिवहस्तं तालिकावादनात्।
दृष्ट्वा तत्र जहास, तत्र बहवो भृत्वाऽऽनयन्ति स्म ते
कासाराज्जलमेव केवल-(महो! केऽपि क्षमाः संग्रहे)।।२४४३।।

आसन् रिक्तघटप्रदानकरणे केचिन्नियुक्ताः परं,
वस्त्रैः श्रीप्रभुणा समन्तु बहवः संक्षालयन्तोऽभवन्।
नीचैश्चोपरि पक्वभित्तिनिवहं, भृत्वाऽऽनयन्ति स्म ते
हुङ्कारेण सहाऽखिला हरि-हरि-ध्वानैर्जलं, च द्रुतम्-।।२४४४।।

नीचैर्निर्गलयन्ति, तेषु बहवोऽद्धा बुद्धिपूर्वं प्रभोः
पादे त्वेव तथार्पयन्ति च जलं कुर्वन्ति भक्त्याऽऽत्मनः।
तत्पानं द्रुतमेव, तत्प्रति मनाङ् न ध्यानमेवाऽभव-
च्चैतन्यस्य महाप्रभोः (सुमनसो हृत्सौमनस्ये सदा)।।२४४५।।

स्वप्रावारपटेन सोऽस्ति भगवत्सिंहासनं क्षालयं-
स्तस्मिन्नेव तथा क्षणे च सरलो भक्तो यथैको द्रुतम्।
आनीयैकघटं जलं प्रभुपदे चिक्षेप, तत्पश्यतां
सर्वेषाञ्च पदाम्बुनोऽस्य सुहृदः पानन्तु कुर्वन्नभूत्।।२४४६।।

दृष्टिस्तत्र महाप्रभोरपि गता, क्रोधं स तस्योपरि
प्रोचे मार्दवविग्रहः प्रकटयन् 'स्थाने त्विमं कीदृशम्।
अन्यायं कुरुते ममोपरि, तथा कर्तुं पुनर्वाञ्छति
श्रीपुर्यां पतितं (स एव स जगन्नाथः प्रणम्योऽखिलैः)।।२४४७।।

उक्त्वेयच्च भवांस्तथातिशयितं भूत्वा पुनर्दुःखित-
स्त्वाह्वत्साधुरवः स्वरूपसुहृदं दामोदरं, तं तथा।
ब्रूते 'पश्य ममोपरीह विहितो घोरस्तथा कीदृशोऽ-
न्यायस्ते ननु सङ्गिना, भगवतोऽद्धा मेऽपराधोऽर्पितः।।२४४८।।

मत्पादाम्बु तु मन्दिरे भगवतः पीतं' स्वरूपः सुहृ-
न्नाबोधत्त्वपराधमेव सुमना दामोदरोऽदः परम्।
दृष्टौ तस्य महाप्रभौ प्रभुजगन्नाथे च किञ्चिद्विधं
नासीदन्तरमेव (सौहृदभराकारो निमायी प्रभुः)।।२४४९।।

भूयोऽप्येष तथानिमायिहृदयं शान्तं विधातुं प्रभुं,
कोपं तत्र तु कृत्रिमं प्रकटयन् संतर्जयामास तम्।
धृत्वा तस्य गलञ्च बाह्यमकरो,त्तत्तस्य भक्तात्मनो
जाता ह्न्मुदिताऽधिका (प्रमुदिता सद्दृष्टिसंबन्धता)।।२४५०।।

पश्चादस्य च भक्तलोककथितः पादे पतित्वा प्रभोः
सोऽयाचत्सुहृदं क्षमां प्रभुमहो! गौरो हसित्वा प्रभुः।
गल्ले तस्य शनैश्चपेटमपरं संमेलयामास, तं
प्राप्य प्रेमचपेटमेष मुदितो भाग्यं शशंसात्मनः।।२४५१।।

एवं मन्दिरमाङ्गनं तदुभयं सम्यक्च संमार्जितं,
जाते सम्प्रति मार्जने प्रभुरयं कर्तुं तु संकीर्तनम्।
आदेशं प्रददौ, निमायिसुहृदोऽभूवंश्च संकीर्तनं
कुर्वन्तः करतालखोलसहिताः (श्रीकीर्तनार्थं स्थितिः)।।२४५२।।

सार्धं कीर्तनवाद्यकैः सुमनसः कुवन्ति नृत्यं तथा
भक्तास्ते निखिलास्तथाहि ननृतुः संकीर्तनेन स्वकम्।
विस्मृत्याऽत्र समं, पपात गुरुकाऽद्वैतस्य पुत्रः क्षितौ
गोविन्दो ननु मूर्च्छितो बहु तथा कुर्वंश्च नृत्यं मुदा।।२४५३।।

दृष्ट्वा तं भुवि मूर्च्छितं स्म दिशते रोद्धुं तु संकीर्तनं
स्वादेशं स महाप्रभु,श्च निखिला नानोपचारं तदा।
गोविन्दस्य तथावधानकरणे कुर्वन्ति भक्ताः, परं
गोविन्दस्य तु भज्यते स्म नहि सा मूर्च्छा निमाय्यात्मनः।।२४५४।।

बुद्धं सर्वजनैर्न सम्प्रति पुनर्गोविन्ददेहः क्षमः
स्थातुं, मूर्च्छितमात्मपुत्रमपरं दृष्ट्वा परं दुःखितः।
अद्वैतोऽपि बभूव, तर्हि सुमनास्तस्योपरि श्रीप्रभु-
र्धृत्वा हस्तमुवाच 'सम्प्रति कथं गोविन्द! नोत्तिष्ठसि?।।२४५५।।

जातोऽतिविलम्बः, क्षिप्रं चल, याम।
स्नानाय' (करोति स्नानं श्रमभङ्गम्)।।२४५६।।

इत्येव प्रभुणाऽथ संनिगदिते श्रीमन्निमाय्यात्मना
गोविन्दस्तु समुत्थितो हरि-हरि-ध्वानं विधाय द्रुतम्।
स्नानाय प्रचचाल सर्वसुहृदो नीत्वा च सङ्गे पुन-
र्भक्ताञ्छ्रीलमहाप्रभुः (सुमनसां सङ्गो निमायिप्रियः)।।२४५७।।

सर्वस्तत्र सरोवरे प्रियजलक्रीडाश्च कुर्वन्नभूद्-
होरा यावदहो! महाप्रभुरयं प्रोल्लुञ्चति स्वात्मनाम्।
भक्तानामुपरीह वारि, मिलिता भक्ताः सहैवाखिलाः
कुर्वन्ति स्म च वारिवर्षणममी श्रीमन्निमायिप्रभौ।।२४५८।।

स्नानानन्तरमेवमागता नेमुः श्रीभगवन्नृसिंहकम्।
स्थाने चाऽऽसत मन्दिरस्य तत्सर्वेऽमी जगमोहने तथा।।२४५९।।

काले तत्र तथैव पञ्चशतकाऽऽभक्ष्यं प्रसादं महा-
राजः प्रेषितवाञ्जनैर्हरिजगन्नाथस्य, गौरप्रभुः।
सार्धं भक्तजनैः प्रसादमघस,न्नासीत्प्रसादस्य तु
स्पृश्यास्पृश्यविचार एव महतो ग्रासे निमाय्यात्मनाम्।।२४६०।।

एकस्यामखिला निषद्य सुहृदः पङ्क्तौ प्रसादं हरेः
सङ्गेनैव तथा महान्तमघसञ्छ्रीसार्वभौमोऽपि सः।
तत्राचारविचारपण्डितगतत्वस्वाभिमानं तथा
विस्मृत्य प्रमुदा प्रसादमघसद् भक्तैः समं साम्प्रतम्।।२४६१।।

अस्मिन् प्रसङ्गे नशिकोऽस्य गोपी-
नाथो बभाषे 'वद कुत्र याता?।
विद्वन्नहो! भट्टमहाशयाऽद्य
स्थानेऽन्तिकाचारविचाररीतिः'।।२४६२।।

ऊचे प्रसन्नरवपण्डितसार्वभौमः
'पाके विचारसरणौ भ्रमितं मदीये।
चक्रं महाशय! भवत्कृपया, समस्तं
स्थाने भवान्मम तु मार्जयति स्म पापम्'।।२४६३।।

एतत्क्षणे कथयति प्रभुरेव 'भट्टा-
चार्योपरीह जनिता भगवत्कृपाऽद्य।
चित्तेऽपि नः सततसङ्गतितोऽस्य चाल्पं
सञ्चारणं तु भवदस्ति निमायिभक्तेः'।।२४६४।।

श्रुत्वैवेयदसौ जगाद तरसा श्रीसार्वभौमो बुधो
'नाभूच्चेद् भगवत्कृपा, तु भगवान् सौभाग्यमेवात्मनः।
सेवायास्त्वभिमानिने चरणयोरस्मै प्रदाता कथं?
(सौभाग्यं हि निमायिनो भगवतः प्राप्तिः कृपायाः क्षितौ)।।२४६५।।

अस्तीदं भगवन्निमायिककृपास्पष्टप्रमाणं तथा
साक्षादस्ति तु भोजयंश्च भगवान् पार्श्वे निषाद्याऽऽत्मनः'।
सन्त्येवं हि परस्परं सुमनसो गुप्तप्रशंसास्थितौ,
कुर्वन्तो निखिला हरेर्ध्वनिमथाऽन्ते भोजनस्योत्थिताः।।२४६६।।

उच्छिष्टं हरिदासकाय तु ददावादौ प्रसादं प्रभो-
र्गोविन्दो, व्यभजन् परेऽपि सुहृदोऽल्पाल्पं निमायिप्रियाः।
सर्वेभ्यस्तदनन्तरं निजकराब्जाभ्यां स मालां स्वयं
भक्तेभ्यः प्रददौ तथाऽयुजत तद्भाले प्रभुश्चन्दनम्।।२४६७।।

एवं तत्र दिनेऽमूं कृत्वा त्वद्भुतलीलाम्।
सार्धं भक्तजनैः स स्वस्थानं प्रभुराप्तः।।२४६८।।



# श्रीजगन्नाथ-रथयात्रा

१२५. नर्तनमिह सृष्टौ जीवानां विविधं भवति प्रकृतेः।
किञ्चिन्निजसंस्कारमहिम्ना चान्यत्परभावनया
ईशेच्छातो निखिलचराचरनर्तनमिह चलदनिशम्।
प्रियतमकेवलरञ्जननर्तनमात्मसुखार्थं कृतिनाम्
गुप्तं रहसि प्रचलति सततं चित्रविचित्रे लोके।
रथयात्रायां दयितरथाग्रे कीर्तनमण्डलमध्ये
गौरात्मेच्छाद्भुतनर्तनतो जगता चकितो नाथः।।

आसीन्मार्जनकद्वितीयदिवसे नेत्रोत्सवो गुण्टिचो-
द्यानश्रीयुतमन्दिरस्य, सहितः सर्वैः स्वभक्तैः प्रभुः।
यातो दर्शनहेतुमेष च जगन्नाथस्य, चाद्येक्षणं
जातं त्वेककपक्षकानवसरस्योर्ध्वं प्रियस्यात्मनः।।२४६९।।

हर्षोऽभूदमुना प्रभोः सुमनसश्चित्ते महानेव, स
श्रीनाथस्य मुखारविन्दमपरं प्रत्येकदृष्टिः प्रभुः।
पश्यन्नस्ति, तथाऽस्य नेत्रयुगलाद् धाराद्वयं चाश्रुणो
गौरस्यास्ति सरन्-(निमायिनयनं स्वैकप्रियव्याकुलम्)।।२४७०।।

तस्यौष्ठावरुणौ नवौ किसलयौ संकम्पमानौ यथा
चास्तां, तौ तु शनैः शनैः प्रियजगन्नाथं किमप्यूचतुः।
एतावद्दिवसात्मकाय सुहृदो मन्ये वियोगाय तौ
प्रेम्णा दुःखनिवेदनं स्म कुरुतः (प्रीतावुपालम्भनम्)।।२४७१।।

चैतन्यस्त्वनिमेषलोचनयुतः कुर्वन्नभूद् दर्शनं
यावन्मध्यदिनं प्रभुर्भगवतः, भूयो भवानागतः।
स्वे स्थाने सुमनाश्च भक्तसहितो लब्ध्वा प्रसादं पुनः
श्रीमत्पूतकथासुकीर्तनरतः (सच्छ्रीकथाकीर्तनम्)।।२४७२।।

आसीदत्र, दिने परत्र निखिलश्रीमज्जगन्नाथजी-
यात्राया दिवसो रथेन, सुहृदो नानन्दसीमा प्रभोः।
तस्मादस्ति, तथैव चाधिकमसौ प्रातःक्षणायाऽऽकुलो
भूत्वाऽऽसी,त्प्रमुदाऽस्य चानिशमहो! निद्रैव तन्नागता।।२४७३।।

कुर्वञ्जागरणं तु चास्ति सुमनाः स प्रेम्णि मत्तस्तथाऽऽ-
रात्रिं, शेषघटीद्वये ननु भवान् सत्येव रात्रिक्षणे।
उत्थाय स्वयमास्थितो,ऽपि निखिलान् संबोधयामास तद्-
भक्तान् (बोधयतीह पूर्वमुदितः सूर्योऽखिलप्राणिनः)।।२४७४।।

सर्वैः समं प्रचलितश्च निवृत्य शौच-
स्नानात्तु पाण्डुविजयेक्षणहेतुमेषः।
(साधुर्निमायिसुमना विशदान्तरात्मा
कल्याणमूर्तिरवनौ परमप्रयत्नः)।।२४७५।।

ज्येष्ठस्येन्दुमतीतिथेर्हि भगवानाषाढकाऽमातिथिं
यावत्संवसति प्रभुर्निजमहालक्ष्म्या विविक्ते समम्।
तच्छुक्लप्रतिपत्तिथौ भगवतो नेत्रोत्सवो जायते,
सर्वेषाञ्च तदैव माधवजगन्नाथस्य संदर्शनम्।।२४७६।।

आरुह्यैष रथं द्वितीयदिवसेऽद्धा वा तृतीयातिथौ
श्रीमद्राधिकया समं दयितया वस्तुं विधत्ते हरिः।
सप्ताहाधिकमत्र सुन्दरगिरिप्रस्थानमेष प्रभुः
(श्रीकृष्णो भवति श्रिया भुवि परं रम्ये स्थले राधया)।।२४७७।।

पुर्यां सैव रथस्य तद्भगवतो यात्रोत्सवः कथ्यते,
यस्मिन् याति रथो (वदन्ति) समये, यात्रां रथस्येह ताम्।
विश्रामस्य च मन्दिरं प्रति यदा पश्चात्परावृत्य स
त्वायातीह रथो, रथस्य ननु तां व्यत्यासयात्रां जनाः।।२४७८।।

यात्रायाञ्च रथत्रयं भवति वै तस्यां, रथो वर्तते
सर्वादौ सुहृदस्तु माधवजगन्नाथस्य, पृष्ठे ततः।
श्रीमद्रामरथस्तथाहि भवतो देवीसुभद्रारथः
(श्रीनाथे पुरतः स्थितेऽवनिपथे भद्रस्य भद्रा स्थितिः)।।२४७९।।

अत्यन्तं भगवद्रथो भवति तु स्थाने विशालो, भवे-
न्मन्ये पर्वत एव कोऽप्यणुमहान्, हेम्ना रथोऽलङ्कृतः।
सम्पूर्णो भवति प्रभोर्भगवतो, घण्टाः सहस्रं तथा
किङ्किण्योऽत्र च घर्घरा मधुरवा बद्धा भवन्ति ध्रुवम्।।२४८०।।

छत्रं तस्य विशालमुन्नतमहोऽत्यन्तं तथा वर्तते,
धूयन्ते बहुरूपमेव विविधं तस्मिन् पताका ध्वजाः।
अल्पस्थूलमसौ यथैव नगरं त्वेकं तथा विद्यते
चोत्स्थातुं प्रभवन्ति तत्र शतशो लोकास्तु सामान्यतः।।२४८१।।

काचाः सन्ति तथाऽऽयताश्च परितः संलम्बमानाः, सित-
स्वच्छानि व्यजनानि तत्र शतशः संचालयन्तो जनाः।
उल्लोचा बहुमूल्यकौशिकपटाश्चैतस्य, नानाविधैः
पूर्णश्चित्रपटैश्च शोभनतयाऽत्यन्तं रथः सज्जितः।।२४८२।।

अग्रे तस्य भवन्ति चातिशयितं दीर्घा दृढा रज्जवो
बद्धा, या मनुजास्तथैव सुहृदः कर्षन्ति, तात्कालिकम्।
भूयो दृश्यमपूर्वमेव भवति, त्वाकृष्य तं गुण्टिचो-
द्यानश्रीभवनं नयन्ति मनुजा ह्येव प्रियस्यन्दनम्।।२४८३।।

सिंहद्वारि तथाहि तिष्ठति रथः प्रातः, समानीय तं
श्रीनाथं दयितागणास्तु सुहृदं संवेशयन्ति प्रभुम्।
यत्काले ह्युपवेश्यते स भगवांस्तूत्थाय सिंहासना-
च्छ्रीमत्यत्र रथे, स 'पाण्डुविजयो' नाम्ना जनैरुच्यते।।२४८४।।

श्रीप्रेम्णो 'दयिता' भवन्ति च जगन्नाथस्य वै सेवका,
ह्यस्त्येका दयिता तु जातिरवरा कामं, परं कुर्वते।
सम्मानन्तु विशेषमेव भगवत्सेवाधिकारिस्थिते-
स्तेषां सर्वजनाः (कृतेरनुसृतेः सम्मानमानस्थितिः)।।२४८५।।

तच्छ्रेणीद्वयमस्ति, तत्र दयिताः शूद्रोपमा एव ते
सामान्यास्तु भवन्ति, सन्ति तु परं ये ब्राह्मणास्तेषु, ते।
कथ्यन्ते 'दयितापति,र्भगवतो मिष्टान्नकस्यार्पणं
ते कुर्वन्ति तु तादृशेऽनवसरे तद्बालभोगे दिने।।२४८६।।

निर्दिश्याऽस्य निमायिनो भगवतः स्वास्थ्यं तथा दूषितं
भैषज्यं त्वपि चार्पयन्ति, दिवसात्स्नानस्य यावत्पुनः।
प्रत्यावृत्तिदिनं रथस्य भवति स्थानेऽधिकारोऽधिकः
सेवायां सुहृदां निमायिकजगन्नाथस्य तेषामहो!।।२४८७।।

सिंहासनात्परममी भगवन्तमेतं
संवेशयन्ति विधिना ननु केनचित्तु।
रज्ज्वा रथे, कटकभूपतिरत्र काले
तत्र स्वयं भवति वै समुपस्थितः सः।।२४८८।।

भक्तैः स्वैः सममेष पाण्डुविजयश्रीदर्शनार्थं प्रभुः
प्राप्तो, दर्शनहेतुमस्य च महाराजश्चकार प्रभोः।
हेतोः श्रीलनिमायिसौहृदवतः सम्यग् व्यवस्थां, ततः
सौविध्येन चकार तत्र भगवत्संदर्शनं तु प्रभुः।।२४८९।।

सन्नद्धश्चलितुं च सम्प्रति रथस्तद्दर्शनानन्तरं,
प्राप्ताः सन्ति विभिन्नराज्यजनता यात्रां रथस्याधुना।
द्रष्टुं भारतवर्षकस्य सुहृदो लक्षाधिकाः, शुश्रुवे
व्योमव्यापिजयध्वनिस्तु परितो "जीयाज्जगन्नाथजी"।।२४९०।।

सत्यस्मिंस्तु विराजिते भगवति स्थाने रथे स्वे महा-
राजो हाटकमार्जनीभिरपरो रुद्रप्रतापोऽकरोत्।
पन्थानन्तु परिष्कृतं सहृदयश्चिक्षेप हस्तान्निजा-
न्नीरं चन्दनमिश्रितं (हि चिनुतेऽसामान्यकार्यं महान्)।।२४९१।।

सेवायां समुपस्थितास्त्वगणितास्तिष्ठन्ति यस्य प्रभोः
स्थाने देवपतिप्रजापतिमनुब्रह्मादयः सर्वदा।
निम्नां तस्य विधाय चेद् भुवि महाराजस्तु सेवां निजे
स्थाने वर्धयति प्रतापयशसी, त्वाश्चर्यमत्रास्ति किम्?।।२४९२।।

वार्तैवास्ति तु सम्मुखेऽस्य सुहृदो राज्ञां तथा का महा-
राजानां? निखिलप्रजापतिरपि त्वेकोऽस्ति साधारणः।
जीवः, कोऽपि च कर्तुमेव ननु किं सम्मानमानश्रिया
सेवां तस्य तथा क्षमोऽस्ति सुहृदः? (सत्सेवकः स स्वयम्)।।२४९३।।

यत्तुच्छादपि वस्तुनोऽखिलजगत्सर्वप्रतिष्ठा पुर-
स्तुच्छा तस्य तु वर्तते, स्वयमहोऽद्धा विद्यते तु प्रभुः।
स्थानं साम्प्रतमुद्गमस्य नियतं मानप्रतिष्ठायशः-
कीर्तीनां (स हि वाक्क्षमास्मृतिधृतिश्रीकीर्तिमेधापतिः)।।२४९४।।

ऐश्वर्येण च वस्तुभिस्तथा कुर्यादेव किमस्य पूजनम्।
कश्चि,त्स क्षुधितस्तु केवलं भावस्यास्ति (निमायिहृत्प्रभुः)।।२४६५।।

पूजाऽर्चापथशोधने सति महाराजेन, तत्राऽऽगताः
सद्गौडावनिसाधुभक्तजनता नार्यो बहुभ्यो नराः।
प्रान्तेभ्यश्च तथाहि भारतभुवः श्रद्धालवः प्रेमिणो
रज्जुं तद्भगवद्रथस्य जगृहु-(र्बन्धस्पृहाः प्रेमिणः)।।२४६६।।

उच्चैस्ते मिलिता जयं प्रभुजगन्नाथस्य सर्वेऽवदन्,
सार्धं तु ध्वनिना जयस्य युगपद् घण्टास्तथा किङ्किणीः।
टालान् सम्प्रति वादयन्नगणितान् कुर्वन् रवं घर्घरं
नाथश्रीभगवद्रथस्तु चलितो (घोषप्रयाणो महान्)।।२४६७।।

तत्पृष्ठे हलिनो रथावपि तथा भ्रातुः सुभद्रास्वसुः
संयातौ, च रवो जयस्य परितस्त्वासीद् भवन् साम्प्रतम्।
सम्पूर्णः सिकतामयः प्रियपथः स्थानेऽभवत्सुन्दरः
(सर्वं सुन्दरसुन्दरस्य महसः संवर्तते सुन्दरम्)।।२४६८।।

श्रीमद्राजपथस्य काममधिकं पार्श्वद्वये तु प्रती-
यन्ते सुन्दरसुन्दराः स्म तरवोऽद्धा नारिकेलस्य ते।
तत्काले सरतस्तु सुन्दरगिरिं श्रीमद्रथस्य च्छटाऽ-
पूर्वैवाऽस्ति निमायिनो भगवतः (शोभाऽखिला तस्य भा)।।२४६९।।

वेगेन प्रचचाल कर्हिचिदहो! मार्गे रथः साम्प्रतं
श्रीनाथस्य शनैः कदापि तु शनैस्तस्थौ कदापि स्थिरः।
पूर्णत्वेन, पुनः ससार पथि नो लक्षप्रयत्नादपि
त्वग्रे (को ननु वाहकोऽखिलजगत्संवाहकस्याऽपरः?)।।२५००।।

कामं यस्य निमायिनोऽस्ति जठरे कोटिर्न कोटिद्वयं,
ब्रह्माण्डं निभृतं तथाप्यगणितं, संकर्ष्टुमेव क्षमाः।
एते कीटपतङ्गवद्दुर्बलभृतः किं मानवास्तं प्रभुं?
(श्रीसंकर्षण एव तु स्वयमहो! संकृष्यते प्रेमिभिः)।।२५०१।।

अस्ति श्रीभगवन्निमायिहृदयो हीच्छामयः स स्वयं,
छन्दस्तस्य तु जायते ननु यदा, सोऽयं चलत्येव तत्।

नो तु श्रीप्रभुरेष यत्र घटते तत्रैव तिष्ठन्, पुन-
र्युञ्ज्याल्लोकभरो बलं कियदपि त्वग्रे रथो याति नो।।२५०२।।

भक्तास्तदोत्कलभुवस्तु वदन्ति लक्षं
गालीः कृते भगवतो, भगवान्न जाने।
कस्मात्प्रसीदति तु गालिभिरेष, गालीः
श्रुत्वैव सम्प्रति रथः प्रचलन् विभाति।।२५०३।।

अग्रेऽग्रे च रथस्य गौरसुमना नृत्यंश्चचाल प्रभुः,
सर्वेषां सुहृदां रथस्य चलनात्पूर्वं निमाय्यात्मनः।
पाणिभ्यां परिधापयत्ययमहो! मालां तथा मस्तके
स्थाने योजयति स्म चन्दन-(मलं भा वस्तुनः स्थानतः)।।२५०४।।

श्रीसंकीर्तनमण्डलीस्ततो भागेषु व्यभजत्स सप्तसु।
(सङ्गीतस्वरकास्तु सप्त ते, सप्ताङ्को भगवत्प्रकर्षकः)।।२५०५।।

तत्राऽद्धाऽग्रिममण्डलीसुमनसां मुख्यस्तथागायको
गौराङ्गस्य परस्वरूपमभवद् धन्यः स्वनाम्ना प्रभोः।
स्थाने सुन्दरकस्वरूपसहितो दामोदरो,ऽमुष्य तद्-
गाने पञ्च सहायकाः प्रभुकृताः (साहाय्यसिद्धिः कृतिः)।।२५०६।।

आसन् राघवपण्डितः प्रथमतो गोविन्ददत्तः परः
श्रीनाथप्रभुकीर्तने सहृदया गोविन्दनन्दस्तथा।
ते दामोदरक-(द्वितीयसुमना) नारायणः पञ्चमो
(धत्ते यः प्रभुकस्वरूपमपरा स्यादेव तन्मण्डली)।।२५०७।।

अद्वैतः प्रमुखो महामहिम-ना तन्मण्डलीनर्तको,
वृद्धः सन्नपि नर्तनेऽसरदसावग्रेऽथ संकीर्तने।
भक्तेभ्यो ननु सुष्ठु-सुष्ठुतरुणेभ्योऽप्यत्र भूयोऽधिकं
(नायुः कारणमस्ति सौहृदभरव्यक्तौ सुभावः परम्)।।२५०८।।

नृत्यं बभूव मधुरं बहु तस्य चैव,
श्वेतं स्वबालनिवहं ननु हल्लयन् सः।
श्रीमण्डलीकपुरतो विदधच्च नृत्यं
सत्ताण्डवं सहृदयः शिववत्ससार।।२५०९।।

श्रीवासः परमण्डलीसुमनसां मुख्योऽभवद्गायकः,
स्थूलं तस्य वपुर्बभूव, मुखतस्तेजस्तथाऽऽसीत्क्षरत्।
आसीद्वाचि गभीरता सरसता, गृह्णन् करे झल्लरीं
तिष्ठन्नस्ति तथा स सिंहसदृशः (श्रीवासतः सिंहता)।।२५१०।।

गङ्गादासकरामपण्डितयुतः श्रीमांस्तथा पण्डितो
(भिन्नोऽयं) हरिदासको ननु शुभानन्दश्च, गौरस्त्विमान्।
चक्रे पञ्च सहायकान् सुमनसः श्रीवासकस्य प्रभु-
स्तच्छ्रीमण्डलमुख्यनर्तकवरः श्रीपादनित्योऽभवत्।।२५११।।

कायेन लम्बवपुषा प्रभुनित्यनन्दो
नृत्यं निजेन विदधद् बहु भद्रमेव।
काषायवस्त्रमुपरि त्वकृताऽथ नृत्यं
ह्युत्थाप्य सोऽत्र मधुरं बहुशोऽवधूतः।।२५१२।।

आसीद् दत्तमुकुन्दको मधुरगन्धर्वावतारस्तथा
मुख्यश्चात्र तृतीयमण्डलगतः संगायकः पण्डितः।
गोपीनाथमुरारिगुप्तसहितः सेनान्वितो वल्लभः
श्रीकान्तो ननु वासुदेवसुमनास्तस्याभवन् सङ्गिनः।।२५१३।।

मण्डल्यामिह तन्महामहिमको दासो महात्मा हरि-
र्मुख्यो नृत्यकरो बभूव, स तनुं कूर्चं निजं हल्लयन्।
प्लुत्वोत्प्लुत्य मनोहरं सहृदयो नृत्यन्नभूत्तद्वपु-
र्नृत्ये स्थूलकगोलगोलमभवद् वल्गत्तथा गेन्दवत्।।२५१४।।

सरति स धुन्वन् पथि निजशीर्षम्।
'हरि-हरि' जल्पन् प्रियहरिनामा।।२५१५।।

आसीत्तत्र तुरीयमण्डलगतो गोविन्दघोषस्तथा
मुख्यः कीर्तनगायकः, सहृदयास्ते राघवो माधवः।
अप्यासन् हरिविष्णुदाससहितोऽद्धा वासुदेवस्तथा
तत्साहाय्यकृतौ (सहायकरणं सत्त्वात्मनां लक्षणम्)।। २५१६।।

एतत्कीर्तनमण्डलीरुचिरतासंवक्रतोत्पादको
नृत्येनात्मगतेन चास्ति सुमना वक्रेश्वरः पण्डितः।

आसीन्नृत्यमपूर्वमेव सुहृदोऽमुष्यात्र, कुर्वन्नसौ
नृत्यं भूमितले बभूव लुटितो (भावात्क्षितौ लोटनम्)।।२५१७।।

एवं तेन तथाक्षणेन तु चतुःसन्मण्डलीनां प्रभु-
श्चक्रे संघटनं, बभूव घटितं सन्मण्डलीकत्रयम्।
स्थाने पूर्वत एव सौहृदरथश्रीयुक्तयात्रोत्सवे
(सम्मर्दे हरिधीमतां विरलता किं गायकानां सताम्?)।।२५१८।।

तत्रैका तु तथा कुलीनपदकग्रामस्य सन्मण्डली,
रामानन्दकनामकः सहृदयो यन्मुख्यसंगायकः।
नृत्यं चापि स सत्यरावसहितः कुर्वन्नभू,त्तेऽखिला
भक्ता ग्रामकुलीनवासिसुजनास्तत्कीर्तने सङ्गिनः।।२५१९।।

तत्रैका तु पराऽस्ति शान्तिपुरकश्रीमण्डली, तद्गुरो-
रद्वैतस्य सुतः प्रधानपदके यत्राऽच्युतानन्दजी।
तस्यां नृत्यकरोऽपि नामपदतो धन्यः स एवाऽऽत्मनः,
सर्वे शान्तिपुरस्य भक्तसुजनाः साहाय्यकार्येऽस्य च।।२५२०।।

मुख्यस्तत्र तृतीयमण्डलपदे तौ नर्तको गायको
विद्येते रघुनन्दनो नरहरि,श्चासंस्तयोः सङ्गिनः।
सर्वे खण्डनिवासिनस्त्वनुगताः, संयुक्तसंकीर्तनं
तत्रैवं भवदस्ति सप्त भगवच्छ्रीमण्डलीनां सताम्।।२५२१।।

मण्डल्यस्तु रथस्य तद्भगवतोऽग्रेऽग्रे चतस्रोऽभवन्
कुर्वत्यो हरिकीर्तनं सुमनसामेकाऽभवद् दक्षिणे।
वामेऽन्या च, रथाग्रसारणकृतौ पृष्ठे च पृष्ठेऽपरा
सिद्धाऽभूत्तु सहायिका स्वतुमुलध्वानेन नाथप्रभोः।।२५२२।।

स्थाने सप्तसु मण्डलीकसुहृदां खोलाः सहैवाऽध्वनन्,
युक्तस्तत्करतालखोलनिनदे मञ्जीरकाणां पुनः।
नानानां ननु मिष्टमिष्टनिनदो मार्गे तथोत्पादय-
न्नेकं तत्र रसं विचित्रमभव-(च्छ्रीमान् विचित्रः स्वतः)।।२५२३।।

भक्तास्तत्क्षणखोलवादकजनाः संवादयन्तस्तथा
खोलांश्च द्विगुणा बभूवुरधुना, ते वादयन्तोऽनमन्।

खोलान् पृष्ठदिशं, क्षितौ परमदःपादा बभूवुः स्थिराः
(पृथ्वीसुस्थिरपादतो रसयति प्रेमाऽमृतं सन्नरः)।।२५२४।।

प्लुत्वोत्कूर्द्य तथा प्रदर्श्य विविधान् भावांश्च नानाविधं
कुर्वन्तस्त्वभवन् सुनृत्यमपरं भक्तास्तथानर्तकाः।
नृत्यं कीर्तनमण्डलीषु सुमनाः सर्वासु गौरप्रभुः
कुर्वन्नस्ति (निमायिसौहृदभरो नो सीमितस्तिष्ठति)।।२५२५।।

एकस्याः क्षणतो महाप्रभुरहोऽद्धा मण्डलीतस्तथा
मण्डल्यामयमाययौ सहृदयोऽन्यस्याञ्च कुर्वन्नभूत्।
नृत्यं तत्र, कदा प्रगम्य सुमनाः कुर्वन् परस्यामभू-
न्मण्डल्यां स च नृत्य,मस्य न तदा बोधोऽपि कस्याप्यभूत्।।२५२६।।

बोधन्ते निखिलाः, करोति सुमना नस्त्वेव गौरप्रभु-
र्मण्डल्यां ननु नृत्यमत्र, सुहृदः पश्यन्ति यात्रीजनाः।
आश्चर्येण समं प्रभोः सुमनसो नृत्यं, ददर्शाऽपि यः,
पश्यन्नेव निमायिसौहृदभरस्तत्रैव पश्यन्नभूत्।।२५२७।।

नो कस्यापि तथा महाप्रभुदिशो दूरीकृतौ नेत्रयो-
रैच्छन्मानसमेव, किं ननु नृणां वार्तैव, दृष्ट्वा प्रभोः।
नृत्यं संचकितो बभूव तु जगन्नाथोऽपि साक्षात्तथा
पश्यंस्तत्प्रभुनृत्यकृच्छविमभूत्संरुध्य मार्गे रथम्।।२५२८।।

नृत्यात्प्रभुसतो मन्ये स चलनम्।
आश्चर्यचकितोऽभूद्विस्मृत इव।।२५२९।।

दृष्ट्वा सार्धमथात्मनः परिकरै रुद्रप्रतापो महा-
राजोऽप्यद्भुतनृत्यमेतदधुनाऽऽसीत्स प्रसन्नो भवन्।
आत्मन्यात्मनि चैव, नेदृशमहो! गौरप्रभोरद्भुतं
नृत्यं क्वापि तथेक्षितं सुमनसः केनापि चाद्यावधिम्।।२५३०।।

शृण्वञ्छंसनमेव सौहृदवतो योऽभूत्तथाद्यावधिं
लोको, नर्तनकारिणं स सुहृदं दृष्ट्वा निमायिप्रभुम्।
मुग्धोऽस्योपरि सोऽभवत्सहृदयः क्रोशन्नभूदुच्चकै-
श्चोक्त्वाऽद्धा 'हरि-बोल-बोल-हरि-हे!' (प्रेमी तथोद्दीपकः)।।२५३१।।

एवं जगन्नाथरथस्ततोऽग्रे
शनैः शनैस्तत्र ससार मार्गे।
संकीर्तनप्रेम्णि तथाहि मग्नाः
पृष्ठेऽस्य चेलुः प्रभुगौरभक्ताः।।२५३२।।

एकां कीर्तनमण्डलीं पुनरसावेव स्वतन्त्रां प्रभु-
श्चक्रे सम्प्रति मण्डलीः सहृदयस्ताः सप्त चैकत्रिताः।
श्रीवासश्च रमायिपण्डितयुतो गोविन्ददासो हरे-
र्दासोऽस्यां रघुनाथमाधवयुतो गोविन्दनन्दस्तथा।।२५३३।।

गोविन्दश्च मुकुन्ददत्तसहितो मुख्यास्त्वमी गायका,
जातो गौरमहाप्रभुश्च सुमनाः श्रीनृत्यकारी स्वयम्।
खोलानां सुहृदां चतुर्दश नभोभेदिध्वनिः प्रेमिणां
भक्तानां सममेव हृद्रसनिधिं चक्रे समुद्वेलितम्।।२५३४।।

तत्रोन्मादिसुनृत्यतोऽस्य चकिताः सर्वे प्रभोर्दर्शका,
मौनं ते त्वनिमेषचित्रलिखिता भूत्वा यथाऽलौकिकम्।
नृत्यं संददृशुर्यथाऽपि गगने कोलाहलः शुश्रुवे
(रौति व्योम वसुन्धराभगवतीधात्रीप्रभावाद्ध्रुवम्)।।२५३५।।

आरुह्य प्रभुनृत्यदर्शनकृते स्वे स्वे विमाने तु ते
व्योम्नि स्युः सुहृदः स्थितास्त्वपि सुरा मन्ये, निमायिप्रभुम्।
कुर्वन्तः परिवृत्य नृत्यमभवन् सर्वे च भक्ताः, क्षणा-
दल्पान्नृत्यमसौ रुरोध, निखिलं वाद्यं निरुद्धं ततः।।२५३६।।

पूर्णत्वेन समन्ततो जनभरे निःशब्दता व्यापृता,
कुर्वन्नस्ति पिकस्वरेण सुमनाः कण्ठेन तर्ह्यात्मनः।
कारुण्येन सहाऽधिकेन तु जगन्नाथस्य गौरः स्तुतिं
भक्ताः स्माऽपि च मेलयन्ति सुहृदोऽमुष्य स्वरे स्वस्वरम्।।२५३७।।

१२६. जयति श्रीकृष्णो गोपालः।
मेघश्यामलकोमलकायो मधुरमनोहरमूर्तिः
दयितमुकुन्दः सकलचराचरपरमानन्दाकरः।
जयति जयति संततमिह जयति प्रियकरुणात्मा सुहृदाम्
देवकिनन्दनभक्तभयभञ्जनगोगोपीप्रियकान्तः।।

१२७. आत्मनि भावे सिध्यति दास्यम्।
जडचेतनयोः प्रकृतिपुरुषयोर्दृश्यमिदं सम्मिलनम्
चेतनकेवलसाक्षी स्वात्मा नरतायामिह साध्यः।
अक्षरकूटस्थः पुरुषस्तत्परमात्मोत्तमपुरुषः
क्षरतोऽतीतोऽक्षरपुरुषस्त्विह ततोऽपि यस्योत्तमता
स प्रथितः पुरुषोत्तमपदतो लोके वेदे गीतः।
आत्मसाधना परमा तन्मधु,रं पुरुषोत्तमभजनम्
दयितमुरारिमुकुन्दगोविन्दपुरुषोत्तमता मधुरा
तच्छ्रीगोपीभर्तुः सोऽहं दासदासानुदासः।।

अस्मिन् खोलमृदङ्गझल्लकभरा 'दासानुदासः' पदे
सम्पूर्णे स्वत एव सम्प्रति पुनर्मार्गे ध्वनन्तोऽभवन्।
तद्वद् गौरमहाप्रभुः पुनरसावुद्दामनृत्यं तथा
कुर्वन्नस्ति (निमायिनो भगवति प्रेम्णः सनृत्या स्तुतिः)।।२५३८।।

तत्सम्पूर्णतनौ तु कम्पपुलकस्तम्भाश्रुवैवर्ण्यक-
प्रस्वेदस्वरभङ्गकप्रभृतयः सर्वे विकाराः प्रभोः।
संजाता ननु सात्त्विका,श्च वपुषस्तस्योद्गतं पूर्णतः
सर्वं रोम, परस्परं कट-कट-ध्वानं रदाः कुर्वते।।२५३९।।

पूर्णत्वेन महाप्रभोः सुमनसो भङ्गः स्वरस्याभवन्-
नो शब्दो बहु चेष्टयाऽपि मुखतः सम्यक्ससाराऽधुना।
नेत्राभ्याञ्च ससार सौहृदवतो धाराद्वयं त्वश्रुणः,
स्वेदप्रच्छनमेव नो तु किमपि (प्रेमी रसाम्भोनिधिः)।।२५४०।।

मन्ये स्वर्णसुमेरुनामगिरितोऽसंख्या सरेयुस्तथा
नद्यो, निःसरति स्म तस्य मुखतः फेनः, कदाचित्क्षितौ।
लोटत्येष, पुनः क्षणेन च तथोत्तस्थौ पुनर्भ्राम्यति
स्थाने चायमलातचक्रसदृशः (किं प्रेम्णि नो जायते)।।२५४१।।

गौराङ्गस्य पुना रथस्य चलनं तूद्दण्डनृत्येन तद्-
रुद्धं, भक्तगणो महाप्रभुदशां दृष्ट्वा विचित्रामिमाम्।
भीत्याऽकम्पत, नृत्यदर्शनकृतेऽद्धा दर्शनार्थी प्रभो-
राचक्राम तथैव, चाधिकमभून्नित्यप्रभोः संभ्रमः।।२५४२।।

आयानेव महाप्रभोरुपरि संमर्दो जनानां तथाऽऽ-
सीत्तद्वर्तुलमण्डलीं स्वसुहृदामेकान्तु नित्योऽकरोत्।
मध्येऽस्याः कृतवान् प्रभुं ननु, महाराजोऽपि चाज्ञां ददौ
तत्कालं निजसेवकान् (सहृदयः स्थाता तटस्थो नहि)।।२५४३।।

'एतद्वर्तुलमण्डलं सुमनसां यूयं द्रुतं सर्वतो
भक्तानामवरुन्ध, सम्प्रति यतो नो पीडयेयुः परे।
सम्मर्देन तु भक्तमण्डलमिदं' संपालिता तन्महा-
राजाज्ञा क्षणतो (हरिप्रतिनिधिः सर्वत्र राजा मतः)।।२५४४।।

रक्षोपायमकार्षुस्तत्कालं नृपभृत्याः।
(सेवा भागवतानां भाग्यं दास्यहितानाम्)।।२५४५।।

स्वामात्यस्य शिरोधराधृतकरो रुद्रप्रतापो महा-
राजः श्रीहरिचन्दनेश्वरसतो मुख्यस्य पश्यन्नपि।
आसीदत्र महाप्रभोः सुमनसस्तूद्दण्डनृत्यं तथा
(लोकस्य स्पृहणीयवस्तु नयने कस्यात्र नाकर्षति?)।।२५४६।।

श्रीवासः पुर एव सम्प्रति महाराजस्य भावाकुल-
स्त्वासीद् दीर्घवपुः स्थितो, ननु महाराजश्च नृत्यं प्रभोः।
पश्यन्नस्त्यनिमेषतः, परमसौ वासः पुनर्वै पुन-
र्विघ्नं प्रेङ्खणतः करोति तु महाराजस्य तद्दर्शने-।।२५४७।।

भूयः श्रीहरिचन्दनेश्वरसुधीस्तं राजमन्त्री ततो
भूयोऽसौ विलिलेख वाससुहृदं, चक्रेऽपसर्तुं ततः।
सङ्केतञ्च, परं तथारसमदे मत्तः स भक्तो हरेः
श्रीवासो ननु कं शृणोति (भगवन्मत्तस्थितिः सुस्थितिः)।।२५४८।।

मन्त्रीजी भविता महान्ननु नरो, राज्ये निजे तद्भवेद्,
भक्तानामिह सर्व एव तु समः, स्थाने पुनर्वै पुनः।
पुर्यामत्र विलेखने सति सतः श्रीवासभक्तात्मनो
भावावेशगतस्य चास्य सपदि क्षोभस्तथाह्युद्गतः।।२५४९।।

किञ्चिन्न त्वविचार्य सोऽस्य महता वेगेन वासो ददौ
राजामात्यकचन्दनेश्वरसतो रक्ते कपोले प्रिये।
एकां गाढचपेटिकां, तु लगिते तस्मिंश्चपेटे दृढे
मन्त्री तत्र महोदयः स निखिलां स्वां मन्त्रितां व्यस्मरत्।।२५५०।।

गल्लः सम्प्रति लोहितोऽधिकतया भूयो गतो, झण्झणी
सम्पूर्णे प्रसृताऽङ्गके, ननु नृपामात्यः स संभ्रान्तवत्।
सन् पश्यन् परितोऽस्ति, तत्र समये मानापमानद्वय-
ध्यानं नाभवदस्य किञ्चिदपि चाऽसंज्ञास्थितौ मन्त्रिणः।।२५५१।।

पश्चाद्रक्तमहो! विलोक्य लगिते गाढप्रहारे यथा
दुःखक्षोभसमुद्गति,स्त्विह तथाऽसौ राजमन्त्री यदा।
अद्राक्षीत्परितो निजं जनभरे भुक्त्वा चपेटं, तदाऽ-
मुष्यात्मन्यपमानबोधनमभू-(दात्मप्रतीतिः स्थितिः)।।२५५२।।

तस्मिन्नेव ततः क्षणे प्रकटयंस्तेजस्वितां प्रस्तुतो
मन्त्रित्वस्य निजस्य, तत्परिणतिस्वादप्रदानाय सः।
श्रीवासस्य कृते स्वकर्मपुरुषेष्वाज्ञां ददानोऽभव-
त्क्रूरां तत्समये तु (सात्त्विकगुणः सोढुं क्षमः केवलम्)।।२५५३।।

कुर्वञ्छान्तममुं परं ननु महाराजोऽवदद् बुद्धिमा-
'नेतत्कीदृशमत्र जल्पति भवान् वाक्यं?, न किं पश्यति ?।
भावेऽयं निरतोऽस्ति, चास्ति भवतः सौभाग्यमेतत्परं
(सौभाग्यानुभवोऽस्तु सम्यगवनौ, चेष्टाऽखिला तत्कृते)।।२५५४।।

एवं यद्भगवत्प्रियोऽत्र भगवद्-भावे कपोलस्य ते
चक्रे स्पर्श,मियं तवोपरि तथाऽसीमा कृपैवाऽस्य तु।
स्याल्लब्धोऽस्य निमायिनः सुमनसोऽसौ यच्चेपेटो मम,
स्वं तर्ह्यद्य तथाऽमनिष्यम परं सौभाग्यशालिश्रियम्।।२५५५।।

शान्तं कुरुतां स्वं रोषं, प्रभुगौरात्।
च स्वादयतु श्रीसंकीर्तनसत्त्वम्'।।२५५६।।

शान्तोऽभूद्धरिचन्दनेश्वरमहामन्त्री तथैवं महा-
राजेन प्रतिबोधितो, न तु पुना रङ्गे तदैव क्षणात्।
भङ्गोऽस्मिन् समपत्स्यता,ऽथ विषये ज्ञातेऽभवल्लज्जितः
श्रीवासोऽधिकमेव तत्र (हृदयं साधु स्वतो लज्जते)।।२५५७।।

एतेषां वचसां तु किञ्चिदपि न ज्ञानं बभूव प्रभोः,
कुर्वन्नस्ति तथैव सोऽत्र विधिना तूद्दण्डनृत्यं प्रभुः।
लोकानां न तथा प्रतीतिरधुना राज्ञो न तन्मन्त्रिण-
स्तस्यासीद् (विरलात्मनो भगवति स्थाने हि गाढस्थितिः)।।२५५८।।

नृत्यन्नस्ति तथोच्चकैः स, कुरुते त्वालिङ्गनं कर्हिचित्-
कस्यापीह, करोति चुम्बनमहो! गौरप्रभुः कस्यचित्।
धृत्वैवैष करं कदापि सुमनाः कस्यापि नृत्यत्यलं
(स्वानन्दं सुमनास्तथा वितरति स्थाने जनौघे प्रिये)।।२५५९।।

उत्थाप्याऽस्य रजस्त्वधश्चरणयोस्तद्दर्शनार्थी जनः
स्वे शीर्षेऽर्पयतीह, भक्तनिकरोऽदःपादरेणुं तथा।
देहे लिम्पति तं निजे ननु निजे, गौरप्रभुस्तादृशं
कुर्वन्नृत्यमभूत्तथातिसमयं (प्रेयोऽर्पितः, स क्षणः)।।२५६०।।

कुर्वन्नृत्यमसौ ससाद सुमनाः स्थाने परिश्रम्य, त-
च्छ्रीगौरः सुहृदं स्वरूपमदिश'त्किञ्चित्पदं गायतु'।
गोस्वामी तदनु स्वरूपसुमना दामोदरो गायना-
चार्यो गायति गौरशीतलकरः स्थाने द्वितीयः सुहृत्-।।२५६१।।

१२८. कलितः स तु नाथः प्राणानाम्।
सूक्ष्मः प्राणो धारयतीदं स्थूलं श्वासक्रियया
केन ध्रियते स त्विति मार्गणकर्मणि केचित्कृतिनः।
सर्वो नाथं भजते परमिह नाथनाथसंभजने
अपरप्रेमामलजलसरितां सुहृदां संततसरणम्।
यस्य प्रेममदनदहनेन प्लुष्टः संसृतिचक्रे
रसमयमधुरः स तु सम्मिलितः प्लुष्टहृदो मम दयितः।।

वाद्यानामिह सार्धमेव निवहः सार्धं पदेनाऽध्वनत्,
नृत्यन्ति स्म निमायिनो हरि-हरि-ध्वानैश्च भक्तास्तथा।
अग्रे श्रीलरथः ससार च जगन्नाथस्य, चापि प्रभुः
कुर्वन्नृत्यमथाग्रतोऽस्य चलितो (नृत्यप्रियः श्रीरथः)।।२५६२।।

श्रीराधासखिभावतोऽभवदहो! भावान्वितस्तु प्रभुः
सम्प्रत्येष, तथाप्रतीतिरधुना मन्येऽस्य जाता, यथा।
श्रीश्यामप्रियसुन्दरो बहुदिनप्रव्यापिनोऽनन्तरं
विश्लेषस्य समागतस्तु मिलितुं (प्रेमी प्रियस्यातुरः)।।२५६३।।

भावेन त्वमुनैव स प्रियजगन्नाथं प्रति श्रीप्रभु-
र्हस्ताभ्यां प्रदिशंस्तथाहि विविधं स्वप्रेमभावान् पुनः।
नृत्यन्नस्ति, तथा प्रतीतममुना त्वागत्य मे सोऽधुना
श्रीकृष्णो मिलितो (निमायिसुहृदः संभावना भावना)।।२५६४।।

किन्त्वस्ति तत्सुखमहो! मिलनेऽत्र नो, यद्
वृन्दावनस्य पुलिनस्य बभूव कुञ्जे।
अस्मिंस्तथैव विकलो विरही स भावे
काव्यप्रकाशरसपद्यमिदं पपाठ-।।२५६५।।

१२६. चेतो ह्युत्कण्ठितमिह पुनरपि रहोमिलनदेशार्थम्।
आलम्बनमुद्दीपनमुपनतमुभयं पुराऽनुभूतम्
आश्रयभावः सैवाऽस्म्यहमपि, किन्तु ममान्तःकरणे।
तन्मिलनस्थानार्थं चेतो विभवति परमुत्कण्ठम्
परमं स्थानं, यद्दीपनमिह, स्थाने भवति स्थिरता।।

ब्रूते स्थानविशेषके तु मिलितुं ह्युत्का पुनर्नायिका-
'रेवारोधसि, यत्र यो मम मनः कौमारकालेऽहरत्।
अस्त्यस्मिंस्तु स एव मे ननु पतिः काले, मनोहारिणी
सैव श्रीमधुमासकस्य रजनी (योगो हि सद्योगतः)।।२५६६।।

अत्रोन्मीलितमालतीसुमनसामस्मन्मनोमोदका-
श्चायान्तीह त एव ते परिमला, वायुः स एवाऽधुना।
अस्ति स्पृष्टकदम्बपुष्पिततरुः शीतः सरन् गन्धितो
मन्दं (वातविशेषकावरणतः स्थानं विशेषायते)।।२५६७।।

वर्ते सम्प्रति नायिकाऽपि सुरतव्यापारलीलाकरी
सैवाऽहं च समं प्रियेण, विधितः स्वाप्तः स एवास्त्यसौ।
मच्चेतोहरनायकोऽपि, चपलं चेतोऽलितुल्यं ममाऽ-
द्धा संतुष्यति नो तथापि (सुमनोभृङ्गो रहो भ्राम्यति)।।२५६८।।

तस्यैवोत्कमिदं प्रियस्य तु कृते रेवातटस्याधुना
मच्चेतो भवदस्ति' हन्त! विरह! स्थानेऽस्त्यरे! प्रेमिणाम्।
संसारे बलिहार एव तु पुनः संमेलनस्यात्र ते
(संयोगाद् विरहस्थितिस्तु मधुरा काव्ये चिता भावकैः)।।२५६९।।

ब्रूते पद्यमिदं निमायिसुमना भावेन केन प्रभुः,
कोऽप्यन्यस्त्वमुमेव बोद्धुमिह नो शक्तः स्वरूपं विना।
आसीत्सर्वजनस्य बोधविषया वार्ताऽपि नो, तद्बहिः-
प्राणा बोद्धुमपि क्षमः सहृदयो दामोदरस्त्वेव सः।।२५७०।।

एकस्मिन् दिवसे महाप्रभुपुरोऽपि श्लोकबद्धं पुनः
कृत्वा भावममुं स्वरूपसुमनाश्चक्रे तथोपस्थितम्।
श्रुत्वा श्लोकमिमं बभूव चकितोऽत्यन्तं तु गौरप्रभु-
(र्गूढज्ञं प्रति चात्मनश्चकितता स्वाभाविकी जायते)।।२५७१।।

स्नेहेनातिशयेन तस्य सुमनाः पृष्ठे करं चालयन्
ब्रूते गौरशशी 'स्वरूप! तु जगन्नाथप्रभोः सम्मुखे।
श्रीमद्भद्ररथस्य नृत्यकरणे काले मदीयं कथं?
भावं तु त्वमवे-(र्जनः सहृदयः साधारणीव्यापृतेः)।।२५७२।।

कृत्वा त्वं प्रतिबिम्बमेव तु मनोभावस्य मे पूर्णतोऽ-
धाषाः श्लोकममुं' स्वरूपसुमनास्त्वीषत्स्वरे लज्जिते।
ब्रूते मन्दमथ 'प्रभो! तव मनोभावं विना त्वत्कृपां
कश्चिच्छक्ष्यति बोद्धुमेव तु कथं' (बोधः कृपातः प्रभोः)।।२५७३।।

श्लोकस्य तस्य बहुशो विदधत्प्रशंसां
ब्रूते महाप्रभु'रहो! कियदस्ति चारु।
भावो, भवानिह कवित्वपथेन सत्यं
भावप्रदर्शनपरावधिमेव चक्रे'-।।२५७४।।

*"प्रियः सोऽयं कृष्णः सहचरि ! कुरुक्षेत्रमिलित-*
*स्तथाहं सा राधा, तदिदमुभयोः सङ्गमसुखम्।*
*तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे*
*मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति"।।*

१३०. सहचरि ! मधुपतिवृन्दामिलनस्थितिरन्यैव क्षोण्याम्।
कृष्णमुरलिकारणनं यमुनावृन्दाविपिने कुरुते
श्यामलनिर्गुणभावोद्दीपनमन्तःकरणेऽस्माकम्
यादृग्, भुवि तादृङ् न स एव श्रीकृष्णोऽप्यन्यस्मिन्।
तन्मुरलीमधुरववृन्दायै मद्राधाहृत्स्पृहयति।
प्रियसंगोत्सुखप्रतीतिः, परमिह घटतेऽसौ यदि
स्थानविशेषे, तत्सच्छरणं, ह्यन्ते धामाश्रयणम्।।

श्रीकृष्णे मिलिते पुनर्ननु कुरुक्षेत्रेऽगदद्राधिका
'कालात्सम्प्रति मत्प्रियः सहचरि! श्रीप्राणनाथो मम।
कृष्णो हृद्रमणः स एव मिलितः स्थाने कुरुक्षेत्रके
सैव श्रीवृषभानुकीर्तितनया राधाऽहमप्यस्मि च।।२५७५।।

सौख्यं सङ्गमजं त्वपीह मिलनादन्योन्यमाप्तं द्वयो,-
र्ब्रूमः किन्तु सखि ! प्रिये ! स्वमनसः सत्यं वचः साम्प्रतम्।
हार्दं यत्र वने ध्वनन्मुरलिकायास्तु स्वरं पञ्चमं
संतानं मुरलीमनोहरपरप्रेयःप्रियस्य श्रुतम्।।२५७६।।

लालायितं मम मनो मधुपोऽस्ति तस्मै
वृन्दावनाय यमुनापुलिनस्थिताय।
अत्यन्तमेव तदपि' (प्रियवंशिकेशो
वृन्दाऽवनौ हि तनुतेऽपरभावभावम्)।।२५७७।।

पूर्णं त्वनुरूपो भावोऽयमथाऽऽसीत्।
भावस्य हृदन्तो गौरप्रभुधाम्नः।।२५७८।।

भावानेवमसौ बहून् प्रकटयञ्छ्रीराधिकायाः पुन-
श्चाग्रेऽग्रे चलितो रथस्य सुमना नृत्यन्निमायिप्रभुः।
आसीदस्य तु नर्तनेऽद्यघटिते शक्तिर्जगन्मोहिनी
(प्रेमाऽऽसीत्स्फुटितं प्रभुप्रभुजगन्नाथद्वये ह्यद्वयम्)।।२५७९।।

कुर्वन्नृत्यमथैकदा प्रभुरहो! रुद्रप्रतापस्य स
प्राप्तः पूर्णतयैव चोत्कलमहाराजस्य तस्यान्तिकम्।
लब्ध्वाऽमुं नृपतिस्तथा स्ववसरं जग्राह पादौ प्रभो,-
र्बाह्यज्ञानमभूत्क्षणे सुमनसस्तत्रैव साध्वात्मनः।।२५८०।।

'स्पर्शो मे विहितो नृपेण, ननु धिङ् मज्जीवनं साम्प्रतं'
जल्पंश्चेदमसौ ततस्त्वपसृतोऽग्रे, तेन राज्ञोऽभवत्।
क्षोभोऽमुष्य महाञ्जगाद सुमनास्तं सार्वभौमस्तदा
(सर्वेषां समुदेति जीवनपथे सत्सान्त्वनायाः क्षणः)।।२५८१।।

'न क्षोभं कुरुतां भवां,स्त्वियमहोऽसीमा कृपैव प्रभोः
श्रद्धालोर्भवतस्तथोपरि, यतो यावत्त्वदःस्थानकम्।
प्राप्तः सम्प्रति कर्तुमेव सुमना धन्यं भवन्तं प्रभुः'
सन्तोषो वचसाऽमुना हृदि महाराजस्य चास्याभवत्।।२५८२।।

गौराङ्गोऽथ परिक्रमां स्म कुरुते श्रीमद्रथं चाभितः,
पाणिभ्यां स्वयमात्मनस्तु सुमनाः सन्नोदयामास सः।
चैतन्योऽथ रथं, रवं हडहडं कुर्वंस्तथा घर्घरं
त्वग्रे चासरदुच्चकैर्हरिरथो (नोदी निमाय्यद्भुतः)।।२५८३।।

नृत्यं भद्ररथस्य सम्मुखमसौ गौरः कदापि प्रभुः
सौभद्रस्य रथस्य कर्हिचिदहो! चक्रे, रथस्यामुखे।
भूयः क्वापि निमायिनो निजजगन्नाथस्य चात्रागतो
(बालाः सन्तु परत्र, किन्तु समये ह्यायान्ति मातुः पुरः)।।२५८४।।

एवं रथेन सहितो 'बलगण्डि'माप्तो
नृत्यन्, रथश्च बलगण्डिमितस्त्वतिष्ठत्।
भोगस्य तद्भगवतस्त्विह सज्जताऽभूद्
(भोगप्रसादरसनं व्रतमास्तिकानाम्)।।२५८५।।

श्रद्धावालुपदस्थलस्य घटते मध्ये तथाऽर्धासिनी-
देव्याः स्थानमथैकमत्र, नियमो भोगस्य यत्र प्रभोः।
तत्स्थानं 'बलगण्डि', तत्र लभते कोटिप्रकारात्मनां
वस्तूनामखिलप्रियप्रभुजगन्नाथो रसास्वादनम्।।२५८६।।

येऽपि स्त्री पुरुषस्तथाहि धनिको निःस्वश्च राजा प्रजा
स्थाने तत्र भवन्ति, ते निज-निजश्रद्धानुसारं प्रभोः।
सर्वे भोगमथार्पयन्ति सुहृदः सर्वप्रियश्रीपतेः
(सामर्थ्यं लभते यतो,ऽल्पमपि ना कुर्यात्ततोऽस्यार्पणम्)।।२५८७।।

इच्छा यस्य यथाऽस्तु, यो भगवतो भोगार्पणे स्यात्क्षमो
यस्याप्यत्र तु वस्तुनोऽर्पयति स स्थाने तदेव प्रभोः।
सिद्धान्नस्य न चात्र मन्दिरसमं भोगार्पणं जायते
(श्रीमन्मन्दिरमध्यपाकघटितः सिद्धः प्रसादोऽपरः)।।२५८८।।

स्थानं यस्य च लभ्यतेऽपि यदहो! वामे पथो दक्षिणे
पृष्ठेऽग्रे, सुमनोवने सुमनसो यत्रापि तत्रैव सः।
भोगं संनिदधाति, तत्र समये ह्योघो महाञ्जायते
लोकानां, कठिनं नियन्त्रणमथात्यन्तं भवत्यस्य तु।।२५८९।।

दृष्ट्वा विश्रमितुं चचाल सुमनाः संमर्दमेष प्रभु-
स्तूद्याने निकटस्थगे, च चलितः पृष्ठे निमायिप्रभोः।
भक्तानां निवहोऽपि, सुन्दरतरोरेकस्य तच्छीतल-
च्छायायां प्रभुगौरचन्द्रसुमनाः शिश्ये क्षितावेव सः।।२५९०।।

आनन्दस्तु सुगन्धितस्य सुहृदो मन्दस्य शीतस्य च
स्पर्शेन त्वनिलस्य सौहृदवतोऽत्यन्तं बभूव प्रभोः।
एकस्मिन् स धृतद्वितीयचरणो गौरः शयानोऽभव-
च्चैतन्यः सुखपूर्वकं (श्रममनु स्थाने भवेद्विश्रमः)।।२५९१।।

श्रमस्य हेतोः शयितस्तदाऽसौ
निधाय शीर्षं मृदुले स्वबाहौ।
अत्यन्तमेव प्रियकं प्रतीतो
(दशासु सर्वासु हि भाति भव्यः)।।२५९२।।

वाटिकाप्रतितरोरधस्तथै-
कः सुहृच्च शयितोऽथवाऽधिकाः।
लोपयन्ति हरिकीर्तनश्रमं
(कार्यमस्ति हरिकीर्तनं सताम्)।।२५९३।।



# महाराजप्रतापरुद्राय प्रेमदानम्

१३१. मान्यो, यो भुवि सद्ग्रहणार्थं मुञ्चति निखिलं स्वत्वम्।
उन्नतकुलधनविभुतादीनां जन्मत एव प्राप्तिः
सन्मार्गस्य प्रायो बाधा, सरलो नहि तत्त्यागः।
कोऽपि भवति तादृशवरपुरुषो, निजतादृशसंस्कारात्
सन्मार्गप्रतिकूलं सर्वं त्यक्तुं सपदि क्षमते।
श्रीचैतन्यानुग्रहलब्ध्यै प्रतापरुद्रो राजा
मुमुचे तादृशबाधकमखिलं, साधोरपि तन्मान्यः।।

बाबाः स कवीरः सत्यं परमूचे-।
(सत्यन्तु महद्भिः साक्षादनुभूतम्)।।२५६४।।

१३२. परमा प्रियतममिलनपिपासा।
तृषितः प्राणी नानायोनिषु कालमनन्तं भ्राम्यति
तृषाशमनरूपं वास्तविकं क्वचिद् वेत्ति सत्कृपया।
तत्प्रियमिलनात्तृषाशान्तिरिह, नान्यः पन्थाः शान्त्यै
कश्चिच्चलति प्रियमिलनार्थं त्यक्त्वा बन्धनमखिलम्।
प्रियतममिलनं सुगमं तेषां, स्याद्यत्तादृशचलनम्
या निश्चलिता नर्तनहेतोः, कथमवगुण्ठनमस्याः।।

सत्यं यत्र तथाऽपटी, तु मिलनं स्यात्तत्र वै कीदृशं ?
मध्ये यत्र तथास्ति (दर्शनसुखं तत्र क्व?) भित्तिः स्थिता।
एव स्याद् भवितुं न वास्तवसुखं यत्रान्तरायस्तथा
(निर्बाधं मिलने समस्थितिहृदोस्तत्त्वं सुखं प्राणिनोः)।।२५६५।।

यावद्द्रव्यकुटुम्बयोरभिमतिर्वृत्तिप्रतिष्ठाश्रियोः
पण्डित्यस्य च पौरुषस्य, गमनं तावत्प्रियस्यान्तिके।
अत्यन्तं कठिनं, त्वहंकृतिखनिः खाताऽस्ति यावद् दृढं,
तावत्स्वप्रियसौधलम्भनमहो! वक्रं पुनः पायसम्।।२५६६।।

नो याति प्रियपादपद्मनिकटे सर्वाभिमानं तथा
त्यक्त्वा यावदहो! निमायिहृदयो भूत्वा च निष्किञ्चनः।
स्यात्तावद् भवितुं क्षमोऽत्र मनुजस्तस्य प्रसादं प्रभोः
प्राप्तुं कोऽपि न, तज्जगाद वचनं दासः कवीरोऽपरम्।।२५६७।।

१३३. मानप्रेम्णोः सङ्गेऽसङ्गः।
मानं कुरुते स्वप्रियसुहृदि प्रेमी बालो मातरि
सर्वेषां भावानां मूलं रतिरेवेह स्थायी।
किन्तु प्रेमरसे प्रेमिणि यो भवति स मानोऽमानः
एकस्मिन् कोशे नहि तिष्ठति खड्गद्वयममलात्मनि।।

आसीत्तादृशराज्यगौरवमहामानाऽभिमाने महा-
राजो यावदथोत्कलस्य सुजनो रुद्रप्रतापः स्थितः।
सन्देशं प्रभुसन्निधौ पर-परैर्लोकैस्तथा प्रेषयन्,
तावद्वञ्चित एव स प्रभुकृपादृष्टेरतिष्ठन्नृपः।।२५९८।।

त्यक्त्वा सर्वमसौ यदा सहृदयो निष्किञ्चनस्येव सद्-
भक्तस्य प्रभुपादपद्मशरणं जग्राह, जातस्तदा।
राजा भागवतः परः स तु महाभाग,स्तथास्याभवद्
भक्तेषु प्रियवैष्णवेषु गणना (नम्रो महान् गण्यते)।।२५९९।।

विश्रामं बलगण्डिपुष्पविपिने कुर्वन् सुखेन प्रभु-
स्त्वासी,त्कीर्तननृत्ययोः श्रमवशादङ्गानि सर्वाणि च।
तस्याऽऽसन् शिथिलानि, पद्मसदृशे नेत्रेऽल्पमुन्मीलिते
ह्यास्तामस्य च मीलितेऽल्प-(ममनाः स्थाने क्षणे प्रीयते)।।२६००।।

आसीत्साम्प्रतमर्धनिद्रितदशः शीतानिलस्पर्शत-
श्चैतन्यः परमप्रमोदममना गौरो यथाऽऽस्वादयन्।
तन्मध्ये कटकाधिपः सहृदयो रुद्रप्रतापो महा-
राजः पण्डितसार्वभौमसुहृदः सङ्केतमाप्त्वाऽचलत्।।२६०१।।

गौराङ्गप्रभुदर्शनाय, च महाराजस्तनो राजसं
स्वं वस्त्रं त्ववतारय,च्च मुकुटं छत्रं तथा चामरम्।
सम्पूर्णं निजराजचिह्नमपि स स्थानेऽत्यजत्साम्प्रतं
(गन्तव्यं यतिदर्शनाय सुहृदा सौम्येन वेषेण वै)।।२६०२।।

सामान्येन पटेन नग्नचरणस्त्वेकेन स प्रावृतः
स्वस्थानात्प्रभुदर्शनाय चलितः, पृष्ठेऽस्य पृष्ठे पुनः।
संचेलुर्नियमानुसारमपरे तेऽप्यङ्गसंरक्षका,-
स्तान् सङ्गाऽऽगमनात्परन्तु नृपतिः संवारयामास सः।।२६०३।।

स प्रभुपार्श्वे त्वेकल एव। यन्नधुनाऽऽसीद् भूपतिरुद्रः।।२६०४।।

आनन्दे निरता द्रुशीतसुखदच्छायासु (दृष्टं महा-
राजेन) प्रलसन्ति तत्र शयिता विश्राममेतेऽधुना।
कुर्वन्तः सुहृदोऽखिला,स्तु नमनं चक्रेऽखिलानां महा-
राजो बद्धकरो,ऽस्य दृष्टिरपतद्यस्मिन्निमाय्यात्मनि।।२६०५।।

अर्धोन्मीलितदृष्टिमत्र शयितं दूरेऽल्पमेष प्रभुं
स्थानेऽपश्यद,भूत्सुखेन शयितो गौरो निमायिप्रभुः।
भीतोऽल्पन्तु पुरा, पुनः स शनकैर्गत्वाऽस्य पादौ महा-
राजोऽधात्तु महाप्रभोः (प्रभुपदाऽऽलम्बो हि भक्त्याश्रयः)।।२६०६।।

संपीडयन् सुखदमस्ति निमायिपादौ
तौ सुन्दरारुणमृदुस्वकरद्वयेन।
गायन्नभूच्चरणसेवनकेन गोपी-
गीतं समं दशमभागवतोक्तमेषः।।२६०७।।

श्रीकृष्णो रसिकोत्तमः स सहसा रासक्रियामण्डला-
दन्तर्धानमितो, वियोगविकलास्तद्गोपिकास्तस्य ताः।
संबन्धे मधुरप्रभोर्मृदुलताकुञ्जान् पशून् पक्षिणः
पृच्छन्त्यो विलपन्ति (सौहृदरसस्वादक्षुधा भावुकाः)।।२६०८।।

अस्ति श्रीविरहस्य वर्णनमहो! तस्यैव तद्गोपिका-
गीते संविहितं पुनर्दश-नव-श्लोकैस्तथाह्युत्तमैः।
'हे कृष्ण! प्रिय!, जन्मना जयति ते स्थानेऽधिकं कौ व्रज'-
स्तद्गीतेऽयमुपक्रमः (प्रथमतो जन्मक्षितिः कीर्त्यते)।।२६०९।।

अत्यन्तं मधुरस्वरेण तु महाराजोऽस्ति गायन्निमा-
ञ्छ्लोकान्, प्रेमसमाधिरस्य लगितस्ताञ्छृण्वतस्तु प्रभोः।
प्रेमावेशदशस्य तस्य किमपि ध्यानं न तस्थौ सतः,
'कः संपीडयतीह मे मृदु पदे? (प्रेमस्थितिः स्वस्थितिः)।।२६१०।।

को यः पाययतीह चामृतरसं शान्तिप्रदं मे हृदं
त्वत्यन्तं' प्रभुरर्धमूर्च्छितदशो 'भद्रं तु भद्रं तथा।
आमामत्र पुनः पुनर्वद तथाऽग्रेऽग्रे वद' ह्यस्ति स
त्वेवं शब्दमथ ब्रुवन् (प्रियतमः श्रोतव्य एव स्वरः)।।२६११।।

गायन्निह महाराजो ननु यदा।
संगायति तथाऽमुं श्लोकमधुना-।।२६१२।।

*"तव कथामृतं तप्तजीवनं*
*कविभिरीडितं कल्मषापहम्।*
*श्रवणमङ्गलं श्रीमदाततं*
*भुवि गृणन्ति ते भूरिदा जनाः"।।*

१३४. भूरि श्रीदाता को भुवने ?
भुक्त्वा पीत्वा धृत्वाऽनन्तं पुनरपि मनुजोऽतृप्तः
भ्राम्यति भुवने, नानाजन्मनि, विकलो मूढो भ्रान्तः।
तेषामाप्तश्रुतिसन्देशः "श्रोतव्योऽरे वात्मा"
श्रुत्वा मननात्संधरणादथ परमानन्दस्वास्थ्यम्।
आत्मसाधनाऽसुकराऽसरसा तत्केषाञ्चित्साध्या
परमात्मश्रीपुरुषोत्तमरतिगतिरखिलानां सहजा।
प्रियतमपुरुषोत्तमरतिदीपनमिह तद्वृत्तश्रवणम्
विशति श्रवणद्वारा विषयो हृदयस्यान्तः सम्यक्।
संसृतितप्तानां मनुजानां श्रीभागवताऽऽख्यानम्
जीवनममृतं श्रवणमङ्गलं निखिलकल्मषध्वंसम्।
अक्षरमधुरविलासं श्रीयुतमाततमथ कविगीतम्
परमोदाराः सुहृदां मध्ये भुवि ये तत्कथयन्ते।।

उत्थायैष तदा निषद्य सहसा कुर्वंस्तथोच्चैर्महा-
राजस्याऽऽपरिरम्भणं कथयते गौरो 'महाभाग! हे!।
धन्योऽस्तीह भवान्नहो,ऽत्र ऋणतो भावी कदाप्यस्मि नो
शुद्धोऽस्माद्भवत-(स्तथाहि भगवद्वार्ताकरोऽनन्तदः)।।२६१३।।

श्रीमत्प्रेमरसामृतं सहृदयोऽद्धा पाययित्वा भवां-
श्चक्रे मां कृतकृत्यमद्य, ननु मेऽमूल्यं तु रत्नं ददौ।
देयं मे भवतेऽस्य किं विनिमये,ऽदस्त्वेव मत्सन्निधौ
प्रेमालिङ्गनमस्ति, सोऽस्मि भवते स्थाने ददामि त्वदः।।२६१४।।

मह्यं निजं परिचयं तु ददातु, कोऽस्ति ?
स्थाने भवा,न्मयि कथं कृतवानहेतुम्।
एवं कृपां सहृदयः सुमनाः सदात्मा'
(स्थानेऽस्फुटं निवसतीह महान्महात्मा)।।२६१५।।

अत्यन्तं विनयेन चोत्कलमहाराजो जगाद 'प्रभो!
दासानां भवतोऽत्र दासभवनाऽऽकाङ्क्षी तथाऽकिञ्चनः।
एकोऽहं ननु सेवको,ऽद्य नहि किं प्राप्तं मया साम्प्रतं,
प्रेमालिङ्गनके प्रभोस्तु मिलिते भूयस्तथा मत्कृते।।२६१६।।

वस्तु प्राप्यमथैव कौ किमवसद् ? धन्योऽहमद्याऽभवं,
संजातं तु मनुष्यजन्मधरणं मे सार्थकं साम्प्रतम्।
एतावद्दिवसप्रियप्रभुजगन्नाथस्य सेवापुर-
स्कारो मेऽधिगतो (नृणां भुवि सतः प्रीतिः प्रसादात्प्रभोः)।।२६१७।।

स्नेहो भवच्चरणयोर्ननु वर्ततां मेऽ-
क्षुण्णो, निमायिभवतो हृदयस्य कोणे।
अल्पेऽपि तिष्ठतु तथा क्वचन स्मृतिर्मे,
याचे त्वदश्चरणयोर्भवतः पतित्वा'।।२६१८।।

प्रेमालिङ्गनमेवमस्य सुहृदस्त्वाप्त्वा तथा श्रीप्रभो-
र्लाभं सन्मुदितास्थिते,श्चरणयोः कृत्वा प्रणामं पुनः।
सद्यातः कटकाधिपो वरमहाराजः, प्रशंसां महा-
राजस्यास्य च भूरि-भूरि सुहृदो भक्तास्तथा चक्रिरे।।२६१६।।

यात्वाऽसौ बलगण्डिकाभगवतः (पार्श्वे) प्रसादं (प्रभो-)
र्वाणीनाथकरेण तत्क्षणमहो! संप्रेषयामास सः।
आसीद्वस्तु शताधिकं भगवतस्तस्मिन् प्रसादे तथा
(सर्वं संघटितं स्वयं भगवता, लौकैः परं यन्त्रितम्)।।२६२०।।

पञ्चाशद्विधमेव तल्लघुबृहज्जात्या विभिन्नात्मकं
त्वासीदाम्रफलं तथैव कदलीनारङ्गमङ्गल्यकम्।
नानाऽन्यानि फलान्यपीह विविधं शुष्कं तथाऽऽसीत्फलं
पञ्चाशद्गणितं (भवेत्कथमहोऽपक्वा प्रसादे स्थितिः)।।२६२१।।

द्राक्षाऽञ्जीरकचारबीजसहितं वाताममक्षोटकं
खर्जूरी च मुकूलकं प्रियरसस्वाद्वी रसाला तथा।
काजू माखनकं तथाहि विविधं मिष्टान्नकं स्वादुकं
नाना पेयपदार्थजातममितं (पेयादपि क्षुच्छमः)।।२६२२।।

तन्नानाविधवस्तुभिर्भवनकं तद्वाटिकायास्तथाऽऽ-
पूर्णं, साम्प्रतमीदृशं भगवतो दृष्ट्वा प्रसादं मुदः।
जाता गौरनिमायिनस्त्वतिशयं, कुर्वन् प्रसादार्पणं
भक्तेभ्यः स बभूव तन्निजकराभ्यामेव गौरप्रभुः।।२६२३।।

प्रत्येकं दश विंशतिं दलपुटान् भक्ताय दत्ते प्रभुः,
सर्वं वस्तु तदापि तेषु पुटकेष्वल्पाल्पकं नाऽऽययौ।
बुद्ध्वा भक्तजनं प्रभुः सहृदयः श्रान्तन्तु संकीर्तना,-
त्पर्याप्तं सुमनाः प्रसादममनाः स्थाने ददानोऽभवत्।।२६२४।।

आज्ञां तद्ग्रहणाय तद्वितरणं कृत्वा प्रसादस्य स
प्रादात्सर्वजनाय, को ननु परं पूर्वं प्रसादं प्रभोः।
शक्नोति स्म तु लब्धुमेव, तदसौ मुख्यान् स्वभक्तान् प्रभुः
सङ्गे तत्र विधाय चाऽऽस्त सुमना लब्धुं प्रसादं सतः।।२६२५।।

भक्तैः पूर्णतया तथाह्यतिशयं लब्धः प्रसादोऽखिलैः,
सर्वानाग्रहपूर्वकं प्रभुरहो! संभोजयामास तान्।
तत्राभ्यागतसज्जने वितरितः शेषः प्रसादस्तु यो
भक्तेभ्यो ननु वञ्चितो (जनभरे भाज्यः प्रसादोऽधिके)।।२६२६।।

तत्पश्चात्सर्वेऽमी कुर्वन्तो विश्रामम्।
जाताः (श्रीमद्भक्ताः स्वप्रेयोविश्रामाः)।।२६२७।।

आप्तश्च त्वियति क्षणे चलनकः कालो रथस्य श्रिय-
श्चाज्ञां चालयितुं तथोत्कलमहाराजो ददौ श्रीरथम्।
स्थाने लक्ष जनाः सहैव मिलिताः कर्षन्ति, नायं परं
स्वस्थानाच्चलितो मनागपि रथः (सर्वो हि विश्राम्यति)।।२६२८।।

अत्यन्तं सुजनस्तदोत्कलमहाराजोऽभवच्चिन्तित-
स्तस्मिन्नेव तथा क्षणेऽत्र सहितो भक्तैर्निमायी निजैः।
आप्तः श्रीरथसन्निधौ, हरि-हरि-ध्वानं स कुर्वन् प्रभु-
श्चक्रे नोदनमुच्चकैर्हरिरथे (नामोक्तितो बोधनम्)।।२६२६।।

वेगात्संचलितो रथो घर-घरं कुर्वंस्तथोच्चै रवं,
सर्वेषां मुदिताऽभवत्त्वतिशयं, गौडीयभक्तास्तथा।
आकाशं ध्वनयन्ति ते जय-जय-ध्वानैर्जगन्नाथजी-
श्रीकृष्णात्मनिमायिगौरशशिनश्चैतन्यचन्द्रश्रियः।।२६३०।।

एवं तत्क्षणतो रथो भगवतः प्राप्तोऽधुना गुण्टिचा-
प्रासादस्य समीप,मत्र भगवानावेशितो मन्दिरे।
अर्चाजीवनपूजकैर्भगवतो नीराजनादिर्जग-
न्नाथस्य त्वतिथेः कृतो (हि समुदाचारो विधेयोऽतिथेः)।।२६३१।।

आरब्धं प्रभुणा च मन्दिरपुरस्त्वेव प्रियं कीर्तनं,
स्थानेऽतिक्षणमत्र कीर्तनमभू,त्सर्वैश्च भक्तैः पुनः।
गौरः सम्मिलितः प्रभुर्भगवतो भोगे तथाऽऽरात्रिके
सान्ध्ये,ऽकारि निमायिनो भगवतः सर्वैः स्तुतिर्वन्दना।।२६३२।।

तत्स निवासं सम्प्रति चक्रे। गुण्टिचकाया मन्दिरपार्श्वे।।२६३३।।

तत्रैकस्मिन्नाईटोटानामोद्याने।
भक्तैः सार्धं रात्रिं व्याप्य श्रीगौराङ्गः।।२६३४।।

उत्सवोऽत्र जायते नवाहं गुण्टिचाकमन्दिरे सुरम्ये।
तावदेष चैव तत्र तस्थौ श्रीमहाप्रभुः सहाऽपि भक्तैः।।२६३५।।



# पुर्यां भक्तैः सार्धमानन्दविहारः

१३५. मुखरो यथा तथा परिजल्पतु।
भौतिकभावे लौकिकनियमे वर्तन्ते सामान्याः
आत्मरतिः श्रीपतिपदभक्तिर्व्यवहारेऽसामान्यः।
भुवि चिन्तयते किं न कथयते तद्विषये जनवर्गः
आत्मरतानां हरिमत्तानां हृदि तु न तेषां ध्यानम्।।

आनन्दस्य मुदश्च लोकमनसो विध्वंसकर्त्री तथा
चिन्तैवास्ति तु राक्षसी, व्यवहृतौ मार्गेऽत्र चिन्तागृहम्।
संसारो, धनमानयोस्त्विह भवे स्वस्त्रीशिशूनां पुन-
श्चिन्ताः संलगिता भवन्ति शतशः संसारिणामात्मनाम्।।२६३६।।

आनन्दो गृहिणां तु नश्यति भवेऽद्धा कारणादेव त-
च्चिन्ताना,मिव ते तथा भुवि विपद्ग्रस्तात्मनः स्वात्मनः।
कुर्वन्तोऽनुभवं भवन्ति सततं, संसारिभोगात्मनो
यच्चिन्ताऽध्वनि संग्रहस्य, भुवने तेषां क्व सत्त्वं सुखम्?।।२६३७।।

आनन्दस्य तु ते विदन्तु किमहो! स्वादं वराका,स्तथाऽऽ-
नन्दस्य प्रियतान्वितां मधुरतां वेत्तुं क्षमः केवलम्।
भोगेच्छारहितस्तथाप्रणयवान् कौ वीतरागी प्रभो-
रानन्दस्पृहयैव (संग्रहपरित्यागौ हि मार्गावुभौ)।।२६३८।।

आनन्दो नहि भोगवस्तुनि, हृदा तेषामनिच्छाकृता-
वेवास्तीह, विधाय तादृशपरित्यागं ततः साधवः।
भोगानां, परमार्थमार्गपथिका वा पुण्यतीर्थे वने
गत्वा संनिवसन्ति (सद्रतिकृते सेव्यं विशिष्टं स्थलम्)।।२६३९।।

नूनं संपतति प्रभावमहिमा संसारिलोकेऽप्यदः-
पुण्यस्थानभुवो, मिलाम धनिनः कस्यापि गत्वा गृहे।
तत्पत्नीसुतयोः कुटुम्बजगतो मानापमानात्मन-
श्चिन्तोत्पादकवायुनाऽऽवृतमहो! तं लोकयामो वयम्।।२६४०।।

अस्माभिर्न तु तत्र सार्धमधिकप्रेम्णा मिलत्येव स
स्थाने, नो मुदितात्मना च कुरुते संवादमेव स्फुटम्।

तेनैवात्र महात्मनः सुमनसः साधोर्विरक्तस्य च
स्थाने, पावनदेवसद्भुवि, जगन्मान्ये पवित्रस्थले-।।१२४१।।

वा कुत्रापि यदा गृहस्थधनिना प्रायो मिलामो वयं,
सारल्येन तदाऽधिकेन मिलते सोऽयं च बालोपमः।
वार्तां निष्कपटं करोति हसति क्रीडत्यलं संततं
(प्राप्तिर्निष्कपटस्वरूपबलतः कौ जायते सन्मुदः)।।२६४२।।

आनन्दस्य (तथाऽस्य कारणमिदं) त्वंशस्तदन्तस्तथा
चिन्तायास्त्वपि विद्यते, ननु गृहे प्राबल्यतस्तिष्ठति।
चिन्तायाः परमाणुसूक्ष्मजगतस्तस्यैव सोऽयं वशी-
भूतो-(ऽद्धा परमाणुजालजटिलं वैशेषिकं दर्शनम्)।।२६४३।।

आनन्दस्य यदि स्पृहाऽस्य हृदये पूता भवेदेव नो,
गच्छेदेव महात्मनो ननु तदा पार्श्वे सदाचारिणः।
एकान्तप्रियसज्जनस्य स कथं?, पार्श्वे पवित्रात्मनां
लोकानां गमनात्प्रतीतिरयते (स्पष्टप्रतीतिः कृतेः)।।२६४४।।

सत्याऽऽनन्दकृतेऽपि सोऽस्ति भुवने ह्युत्कश्च भावस्तथा
तस्यानन्दमयो महानरसतां संपूर्णतः सङ्गतौ।
आगत्यैव परिस्फुटो भवति, तत्सूक्तं–सदाचारिणा
कल्याणोन्मुखगेहिनापि च सता वर्षस्य मध्ये ध्रुवम्-।।२६४५।।

द्वावेकं ननु मासमत्र भुवने क्वापीह पूतस्थले
संसर्गेऽथ महात्मनः सुमनसः स्थेयं तु कस्यापि वा।
तेन स्यात्परमार्थकाऽध्वनि तथा साहाय्यमस्याधिकं
संप्राप्तं, भवितुं मनागनुभवोऽदःस्थानसंसेवानात्-।।२६४६।।

तस्य स्यान्ननु सत्याऽऽनन्दस्यापि पृथिव्याम्।
(आनन्दक्षुधयैव प्राणी भ्राम्यति नाना)।।२६४७।।

स्थातुं मासचतुष्टयं सुमनसो हित्वा गृहद्वारयो-
श्चिन्तामत्र तथाऽऽगताश्चरणयोर्गौडीयभक्ताः प्रभोः।
एकं ते ननु काममेव भगवद्भक्ताश्च, तत्राप्यलं
ह्यासन् वैष्णवहृन्महाप्रभुकृपापात्राणि सत्प्रेमिणः।।२६४८।।

पूर्णत्वेन निमायिनश्च सुहृदः संसारिभोगादुदा-
सीनाः, श्रीपुरुषोत्तमाभपरमक्षेत्रे पवित्रेऽभवत्।
एतावद्दिवसं तदेव वसतेः सौभाग्यमेषां प्रभो-
श्चैतन्यस्य तु सङ्गतावधिगतं प्रेमावतारस्य सत्।।२६४६।।

आनन्दस्य तु मूर्तिरेव सुमनाश्चैतन्यदेवोऽभवत्,
तेनासीदनिवार्यमेव परमानन्दस्य तत्सङ्गतौ।
आस्वादानुभवोद्भवः, सह चतुर्मासं निमाय्यात्मना
भक्तानां प्रभुणाऽवसत्त्विह तथाऽऽनन्दो महानेव तत्।।२६५०।।

नवनवं सुकौतुकं महाप्रभुरपीह तैः समं प्रियम्।
स विदधद् बभूव दैनिकं विविध-(मच्छलो निमायिहृत्)।।२६५१।।

श्रीमन्नाथविशालदृग्रथबृहद्यात्रोत्सवस्योर्ध्वकं
याऽऽयाति त्विह पञ्चमी, वदति 'हेरापञ्चमी' तां जनः।
स्वं कान्तं भगवन्तमत्र तु महालक्ष्मीर्दिनेऽस्मिंस्ततो
ह्यर्थाब्धेरति सा गवेषयति 'हेरापञ्चमी' सा तिथिः।।२६५२।।

श्रीपुर्यामिह वैभवेन ननु हेरापञ्चमीकोत्सवोऽ-
प्यत्यन्तं क्रियते, यथा प्रभुजगन्नाथस्य नीलाचलम्।
भाषन्ते पुरि मन्दिरं सहृदया,स्ते मन्दिरं गुण्टिचो-
द्यानस्य त्विह सुन्दराचल-(महो! नीलायते सुन्दरः)।।२६५३।।

भाति श्रीभगवांस्तु सुन्दरगिरावेवाऽह्नि तस्मिन्, परं
श्रीनीलाचल एव वै भवति हेरापञ्चमीकोत्सवः।
ऊचे वंशपुरोहितं निजमदोवर्षे विधातुं महा-
राजः शोभनवैभवेन सह हेरापञ्चमीकोत्सवम्।।२६५४।।

काशीमिश्र,मथाऽऽज्ञया च नृपतेर्नानाप्रकारेण तद्-
वर्षेऽस्मिन्ननु मन्दिरं भगवतो लक्ष्मीपतेः सज्जितम्।
स्वप्रासादपरिच्छदान् स्वयमदात्सज्जाकृतेऽयं महा-
राजः साम्प्रतमुत्सवस्य, कृतवान् स्थाने प्रबन्धं तथा-।।२६५५।।

श्रीमद्दर्शनहेतुमस्य सुहृदः कल्पाद् विशेषात्प्रभोः,
प्रातर्वेलमथात्मभक्तनिवहं नीत्वा स्वसङ्गे प्रभुः।

द्रष्टुं श्रीविजयोत्सवं प्रथितहेरापञ्चमीश्रीतिथे-
राप्तः सुन्दरसुन्दराचलपदाच्छ्रीनाथनीलाचलम्।।२६५६।।

चक्रे पूर्वत एव तस्य सुहृदः सत्तुं प्रबन्धं महा-
राजः सुन्दरमत्र, तत्र च समं भक्तैर्निषण्णः प्रभुः।
एतन्मध्यमथैव चातिशयितां त्वेकां तथा सुन्दरीं
श्रीदोर्लामधिरुह्य तं मृगयमाणाऽऽप्ता हरिं स्वं पतिम्।।२६५७।।

दासीभिः सहिताऽऽत्मनः सहृदया सर्वाभि,रत्र क्षणेऽ-
पूर्वैवास्ति हरेर्निमायिललनालक्ष्म्यास्तु शोभाच्छटा।
सम्पूर्णावयवेषु सन्ति विविधाः शोभायमानाः श्रियोऽ-
लङ्कारा बहुमूल्यकाः (कलमदो दृश्यं श्रियोऽलङ्कृतिः)।।२६५८।।

आयान्ति स्म तथाच्छटाभरभृतोऽद्धा देवदास्यः श्रियो
नृत्यन्त्यः पुरतो, हि वाद्यनिकरस्तस्याश्च नानाविधः।
अग्रेऽत्र ध्वनति स्म, तत्र च जगन्नाथस्य दास्यः श्रियः
प्राप्ता एव तु सेवकान् भगवतोऽबध्नंश्च मुख्यांस्तथा।।२६५९।।

बद्ध्वा चक्रुरुपस्थितान् सहृदयाश्रीसम्मुखे तानमू-
र्दास्यस्तान्ननु सेवकान् भगवतः संताडयन्त्योऽपि च।
यान्ति स्म, प्रभुरत्र पृच्छति 'वचः किं विद्यतेऽदोऽस्ति किं
लक्ष्मीजी कुपितेयती?' सहृदयो दामोदरो भाषते-।।२६६०।।

'क्रोधस्य वार्ताऽस्ति महाप्रभो!, स्व-
प्राणप्रियात्कस्य वियुक्तजन्तोः।
अपारदुःखं भविता भवे न'
(प्राणः शरीरं दधते प्रियस्तम्)।।२६६१।।

'इच्छामि बोद्धुमिदमस्मि, कथं प्रयात-
श्चौरोपमो निभृतकं भगवांस्तु कृष्णः।
वृन्दावनं स हरिरेकल एव, लक्ष्मीं
सङ्गे निनाय न कथं स रमैककान्तः'।।२६६२।।

'एवाधिकारो व्रजगोपिकानां
श्रीरासलीलासु तथा प्रभो ! हे !।

सौभाग्यसौख्यं त्विदमस्ति भाग्ये
लक्ष्म्या न' (लक्ष्मीर्जगदीशमाया)।। २६६३।।

अस्मिन्नेव महाप्रभुः सहृदयः कुर्वन् स वार्तामभू-
त्सम्बन्धे बहुकालमत्र सुमना दामोदरेणाऽधुना।
श्रीवासेन समं तथैवममना, दाक्ष्येण धृत्वा तथा
लक्ष्मीपक्षमथ स्वरूपवचसो वासोऽकरोत्खण्डनम्।। २६६४।।

एवं प्रेमयुतश्चलन्नयमभूत्कालं विवादो मनाग्
भूयोऽप्यत्र, तदन्तरे च वचने दत्ते हरेः सेवकैः।
'आनीय द्रुतमेव सौहृदभरात्स्थानाद् भवत्स्वामिनं
कृष्णं, सम्मिलनं तथा सह भवत्या कारयिष्यामहे'।। २६६५।।

तेषां बन्धनकं रमा सहृदया तून्मोचयामास सा
स्वं स्थानं च हरिप्रिया निववृते, लक्ष्मीप्रसादं प्रभुः।
नीत्वा सम्प्रति सुन्दराचलमयं चापि न्यवर्तिष्ट तु
(श्रीलीलेक्षणहेतवे भगवतः साधुः सदोत्कण्ठितः)।। २६६६।।

सन्ध्याऽऽरात्रिकदर्शनं समं भक्तैस्तत्र चकार, चाधिकम्।
यावद्रात्रिमभूत्सुकीर्तनं (प्रेमी हि प्रियकीर्तनप्रियः)।। २६६७।।

अत्रानन्दविहारमेष सुमनाः कुर्वंस्तथाष्टौ दिना-
न्यासीत्सुन्दरपर्वते, त्विह जलक्रीडां स नित्यप्रति।
इन्द्रद्युम्नसरोवरे स्म कुरुते भक्तैर्निमायी समं
(क्रीडाकौतुकमत्र साधुजगतः श्रीसाधनैकक्रिया)।। २६६८।।

तत्रोल्लुञ्चति वारि कोऽपि सुमनाः कस्यापि शीर्षोपरि,
त्वध्यारोहणमेव कोऽपि कुरुते कस्यापि देहोपरि।
भक्ता वारिणि वृन्दशः सहृदयाः कुर्वन्ति वर्षा गणं
कारङ्कारममी जलस्य सुहृद,स्त्वेकः परस्योपरि-।। २६६९।।

अम्बूत्क्षेपममी निमायिहृदयाः कुर्वन्ति, गत्वाऽऽप्लवं
गृह्णन्त्यन्यपदं परस्परमिमे, भूयो मिलित्वा तथा।
द्वौ च द्वौ जलयुद्धमत्र कुरुतोऽन्योन्यं निमायिप्रियौ
(क्रीडाकौतुकमद्भुतं भवति कौ प्रेमैकभावात्मनाम्)।। २६७०।।

गौडीयैर्बहवः प्रतिष्ठितनरा राज्यस्य चान्येऽपि, तेऽ-
भूवन् संमिलिता महाप्रभुजलक्रीडासु गौरप्रियाः।
रामानन्दकसार्वभौमसुधियौ गोपीप्रियाख्यो बुध-
(श्चैतन्यप्रियता स्वतः सुमनसां, सामान्यतोऽच्छात्मनाम्)।।२६७१।।

आसीद्रायमहाशयस्य सुहृदोः श्रीसार्वभौमस्य च
द्वन्द्वं, तौ जलयुद्धमत्र कुरुतोऽन्योन्यं च नानाविधम्।
एकस्मिन्ननयोर्द्वयोः सुमनसोर्दृष्ट्वा च कौतूहलं
भागे गौरयतिर्महाप्रभुरभूत्तिष्ठन्निमायी हसन्।।२६७२।।

गोपीनाथबुधं कदापि सुमना ब्रूते निमायिप्रभु-
'र्नेमौ वारयते कथं नहि भवानाचार्य! सन्तावुभौ।
क्रीडन्तौ तु किमालपिष्यति जनो दृष्ट्वा तथार्भोपमा-
वेतौ, स्तः पुरुषौ प्रतिष्ठितपदौ द्वावेव मान्याविमौ'।।२६७३।।

आचार्यश्च विहस्य तत्कथयते'ऽसीमो यदाऽनुग्रहोऽ-
स्त्येतावाननयोर्द्वयोरुपरि ते, तच्छ्रेष्ठतामात्मनः।
बद्ध्वेमौ विहरिष्यतस्तु सततं सङ्गे किमेव क्षितौ?,
ह्यस्तीदं भवतस्तथैव निखिलं प्रेमन्! कृपायाः फलम्'।। २६७४।।

उच्चैर्वारि च सार्वभौमसुमतिस्तूत्क्षेपयन् भाषते
'मत्ता गौरनिमायिसौहृदरसाल्लोके नटामो वयम्।
उन्मत्ता ननु वातुला भुवि वयं भूता निमायिप्रिया'
(यल्लोकाऽऽश्रयतस्तथाहि मदताऽलोकस्थितेः किं वचः?)।। २६७५।।

अस्मिन्नेव तथाक्षणे सहृदयस्तं सार्वभौमं स्वयं
कृत्वाऽधोऽधिरुरोह सौहृदभरात्तस्योपरि श्रीप्रभुः।
गौरं शाययति प्रभुं स्ववपुषि श्रीशेषवत्सोऽपि तं
(गौराङ्गोऽत्र कलौ युगे हरिरहो! प्रेमावतारः प्रभुः)।।२६७६।।

आनन्दोऽयमथाऽत्र नित्यमभवत्प्रायस्तु, सन्ध्याक्षणे
चोद्याने कुरुते महाप्रभुरयं स्थानेऽत्र टोटाऽभिधे।
गौराङ्गोऽभिनयं तथा प्रतिदिनं श्रीकृष्णलीलाश्रियां,
भक्तानां मिलति स्म यद्बहु सुखं (सौख्यं निमायीक्षणम्)।। २६७७।।

प्रेमानन्दविहारमष्टदिवसा याताः सतां कुर्वता-
मेवं शीघ्रमथ प्रतीतमभवत्कस्यापि नैवाधुना।
प्राप्ताः कर्हि वयन्तु सुन्दरगिरिं कर्हि व्यतीतानि च
ह्यष्टावत्र दिनानि (तत्सुखदिनं, याति स्वतो यत्क्षणात्)।।२६७८।।

आनन्देन समं तथाष्टदिवसान् वासक्रियाऽनन्तरं
नाथस्य त्वधुनाऽऽगतो ननु रथव्यत्यस्तयात्राक्षणः।
प्राप्स्यत्येष तु सुन्दराचलमथ त्यक्त्वाऽद्य नीलाचलं
श्रीनाथो भागवां(स्तु निर्गुणदशो नीलस्वरूपस्थितिः)।।२६७९।।

तस्मात्सम्प्रति सेवका भगवतः स्थाने रथस्योपरि
प्रत्यारोहणकप्रयत्नमधुना कुर्वन्ति, बद्ध्वा प्रभुम्।
श्रीनाथं दयितागणो ननु रथे चारोहयन्ति प्रियं
पट्टप्रेमगुणैः (सतः सगुणता सत्प्रेमहेतोः सताम्)।। २६८०।।

तत्काले भगवत्पुरीप्रभुरथप्रारोहणस्य क्षणे
त्वेकः पट्टगुणोऽत्रुट,त्सुमनसो दुःखं बभूवाऽधिकम्।
तस्मिन् गौरमहाप्रभोः, कथयते खाँसत्यराजं भवान्
रामानन्दमहो! कुलीनपदकग्रामस्य तौ वासिनौ-।। २६८१।।

'सर्वे सन्ति तथासमर्थधनिनः स्थाने भवन्त,स्तथा-
सद्‌योगस्त्वयमेव सौहृदवतः साधोर्धनस्य श्रियः।
सेवायाञ्च सतोऽर्चने भगवतः स्यात्तद्‌धनस्य व्ययः,
कार्यस्यास्य निजोपरीह धरतां भारं भवन्तौ स्वतः।। २६८२।।

निर्माय पट्टगुणकं प्रतिवर्षमात्म-
ग्रामात्कृते भगवतो दृढसुन्दरञ्च।
सङ्गे रथोत्सवतिथौ ध्रुवमानयेतां'
(साक्षान्निमायिकृतयेऽपर एव युक्तः)।। २६८३।।

एतां मूर्ध्नि निजे प्रभोरकुरुतामाज्ञाञ्च भक्तावुभा-
वेतौ सद्‌धनिकौ स्वभाग्यजगतोऽकार्ष्टां तथा शंसनम्।
वर्षात्तत्परतश्च तौ भगवतोऽद्धा पट्टरज्जुं प्रिया-
मानैष्टां प्रतिवर्षमात्मसहितां (धत्तेऽपरः सद्‌वचः)।। २६८४।।



नाथस्यार्चनके तु पाण्डुविजये जाते रथाऽऽरोहणे
श्रीनीलाचलमन्दिरं प्रति रथः श्रीमांश्चचालाऽधुना।
भक्तैः सार्धमपि प्रभुः सहृदयः कुर्वंश्च संकीर्तनं
त्वग्रेऽग्रे चलितो रथस्य (रतिमानालम्बनं सेवते)।। २६८५।।

श्रीनीलाचलमन्दिरे भगवति स्थाने तथा संस्थिते
कृत्वा दर्शनमस्य सम्प्रति निजं स्थानं प्रभुस्त्वागतः।
सार्धं भक्तजनैर्निमायिसुमना लब्ध्वा प्रसादं तथा
विश्रामं कुरुते (पुनर्नवगतिर्विश्रामतो जायते)।। २६८६।।

भिक्षामात्मनि कारयन्ति सुहृदं गौडीयभक्ताः क्रमा-
त्स्थाने नित्यममुं, महाप्रभुरपि प्रेम्णाऽखिलानां तथा।
भक्तानां वसतौ करोति सुमना भिक्षां, गृहद्वारयोः
संबन्धे विविधं कुटुम्बविषये प्रश्नांश्च तान् पृच्छति।।२६८७।।

याते मासि पुनस्त्वनेन विधिना जन्माष्टमी (श्रावणे)
प्राप्ता, भक्तजनैः समं प्रभुरयं जन्माष्टमीकोत्सवम्।
उल्लासेन निमायिना तु महताऽद्धा मानयामास, (हि
श्रीकृष्णो व्रजतां व्रजेऽवतरितः पाथेयमूर्ध्वात्मनाम्)।। २६८८।।

सङ्गे गोपशिशून्निधाय सुमना गौडीयभक्तात्मकान्
लीलां नन्दमहोत्सवस्य कृतवान्नन्दोत्सवस्याह्नि सः।
तस्यामुत्कलवासिनोऽपि मिलिताः स्थानीयभक्तास्तथा
चासन्मन्दिरकर्मचारिसुजना (लीलाऽभिनेता सुहृत्)।। २६८९।।

कानाई ननु खूटिया त्वभवतां नन्दो, यशोदा जग-
न्नाथो माइति च, प्रभुः स्वयमहो! लट्टं गृहीत्वा करे।
लीलायां युवगोपवेषसहितो नृत्यं चकाराद्भुतं
(लोकः संसृतिनर्तकस्तु निखिलः, कोऽपीह सन्नर्तकः)।। २६९०।।

लट्टभ्रामणकौशलं सुमनसो दृष्ट्वाऽखिला दर्शका
जातास्तत्र तु विस्मिताः, सहृदयो रुद्रप्रतापो नृपः।
तत्काले बहुमूल्यवस्त्रमपरं शीर्षे बबन्ध प्रभो-
र्भावावेशदशास्वथैव च जगन्नाथप्रसादं तथा।।२६९१।।

सर्वे साम्प्रतसङ्गिनः किल-किलाऽऽरावं विधाय प्रभो-
र्गोपालाः शिशवस्तथाहि ननृतु,र्नन्दो यशोदाऽत्र यौ।
भक्तौ चाभवतां, गृहे निज-निजे संविश्य तौ वस्तुतो
विप्राऽभ्यागतयोर्निजाखिलधनं संलोटयामासतुः।।२६६२।।

प्रसन्नताऽतः परमाऽस्य जाता
महाप्रभोस्तस्य दिनस्य लीला।
सानन्दमेवं बहु सा समाप्ता
(ह्यानन्दलोकः सुहृदां समाजः)।।२६६३।।

संप्राप्ता विजयामिधानदशमी जन्माष्टमीकोत्सवे
याते, स स्वयमेव तत्र तु महावीरो हनूमानभूत्।
भक्तान् साम्प्रतमृक्षवानरगणं कृत्वा चचाल प्रभु-
र्लाभार्थं विजयस्य राक्षसनृपे लङ्काधिपे रावणे।।२६६४।।

आयाता नियतं तदा हनुमतो वातात्मजस्य प्रभौ
भावव्याप्ति,रयं प्रभुः किल-किलाऽऽरावं करोति स्म च।
गौरो हस्तगृहीतवृक्षविटपो, भावं प्रभोरद्भुतं
दृष्ट्वाऽमुं चकितास्तथाहि निखिला (भावाभिनेतोत्तमः)।।२६६५।।

आकाशं ननु गुञ्जयन्ति तुमुलध्वानैर्जयोक्तिश्रियो,
लीला भक्तजनैस्तथैव मिलितो दीपावलीपर्वणः।
देवोत्थानतिथेश्चकार सुमनाः सर्वक्षणानां तथा
गौरः श्रीलरथोत्सवस्य (सुहृदः श्रीनाथलीलाप्रियाः)।।२६६६।।

न ज्ञातः सहवासकस्य समयोऽद्धाऽसौ समाप्तः कदा
पुर्यां कस्यचनाऽपि गौरसुहृदा, स्वं स्वं तु सर्वे गृहम्।
पूर्णत्वेन कुटुम्बबन्धुनिवहं स्थानेऽधुना व्यस्मरन्
(संसाराऽऽरतितो निमायिभगवन्नाथात्मनो विस्मृतिः)।।२६६७।।

तेषां चित्तमभूद्रतं प्रभुजगन्नाथे पदोश्च प्रभोः
सर्वेषामनिशं, महाप्रभुरदादाज्ञां स्वभक्तात्मनाम्।
प्रत्यावृत्तिकृते गृहं प्रति तथा स्वं स्वं निमायिप्रियः
(संन्यासी ननु सन्नपीह सुमना न स्याद् विवेकच्युतः)।।२६६८।।

वाक्ये तथाऽस्मिञ्छ्रुत एव मन्ये
लघौ लघौ स्यात्पतितस्तुषारः।
मृदौ तरौ, हार्दिकमत्र दुःखं
तत्सर्वभक्तस्य तथैव जातम्।।२६६९।।

# भक्तानां प्रस्थापनम्

१३६. विरहक्लेशो यत्सम्मिलनम्।
योगवियोगौ जीवानामिह सततं भवतो नियतम्
तद्बन्धा जायन्तेऽन्योन्यं प्राकृतकृत्रिमसहजाः।
अस्तु प्रतिपलमेषां मिलनं, परमिह यत्सम्मिलनम्
तत्सम्मेलनविरहक्लेशस्वादयिता तद्विरही।
तनयाविरहक्लेशाऽऽख्यात्री काव्यप्रतिभा ख्याता
"किं भविता गृहिणां वैक्लव्यं?,यदेदृशं भुवि वनिनाम्"।।

भक्तानां समयागतः सुमनसां प्रस्थानकालोऽधुनाऽ-
त्यन्तं स्नेहपुरस्सरं तु महता गौरो ममत्वेन सः।
एकान्तेऽत्र पृथक् पृथक् स्म मिलते सर्वान् स्वभक्तान् प्रभुः
(संवादो ननु हार्दिकः सुमनसोः स्थाने रहो जायते)।।२७००।।

वार्तां तन्मनसः स्म पृच्छति तु तान्, वार्तां भवान्मानसीं
स्वां ब्रूते, कुरुते निमायिसुमनास्तेषामथाऽऽलिङ्गनम्।
तेषामेष निजात्मनां स्म लभते स्तोकं प्रसादं करात्,
तेभ्यश्च स्वयमाः! प्रसादममना दत्ते करेणात्मनः।।२७०१।।

एवं प्रेम तदा प्रदर्शितमसौ कृत्वा तु नानाविधैः
कुर्वन्नस्ति हि सर्वभक्तसुहृदं सन्तुष्टमत्र प्रभुः।
सर्वेषामनुभूतिरेवमभव,त्स्यादेव तावत्क्वचित्
कुर्वन्नस्तु परत्र, यावदधिकं गौरो मयि स्निह्यति।।२७०२।।

आसीद्गर्व इवाऽस्य तत्र वचसः, सर्वस्य, सर्वाधिकाऽ-
पेक्षायां ननु वर्ततेऽस्य सुहृदः स्नेहो ममैवोपरि।
तस्यासीदियमेव तु प्रकृतितो भूम्नो महत्ता प्रभो-
(र्द्रव्येण क्रियया कृता रुचिरता भावेन साधु क्रमात्)।।२७०३।।

सर्वप्राणिषु चात्र यत्र समये ह्यात्मीयसद्भावना
संसारे ननु जायते, भुवि यदा सर्वं निजप्रेयसः।
रूपं साम्प्रतमीक्ष्यते, ननु तदाऽऽश्लेषस्पृहा जायते
सर्वस्यैव हृदा (निमायिहृदयस्थाने तथाऽऽत्मीयता)।।२७०४।।

संकुर्वन् भवतीह तद् हृदयवान् भक्तोऽखिलो भावुकः
प्रीतिं तेन निमायिना सुमनसा, सर्वस्तु तं बोधते।
आत्मानं निजमेव, तत्सुमनसस्तस्यां क्व मोहः स्थितौ ?
शोकः सम्प्रति कीदृशो-(ऽप्रियदशा भावे परत्वे स्थिते)।।२७०५।।

आनन्दः सुहृदां तथा सुमनसामानन्द एवाऽभितो,
यस्मिन् पश्य तथैव तत्र घटते प्रेमैव शुद्धं दृशोः।
शङ्केर्ष्या ननु मत्सरश्च भुवने तत्प्रेम्णि भावस्तु स
क्वापि प्राणिनि तिष्ठतीह सुहृदां नाल्पत्वबोधात्मकः।।२७०६।।

संसर्गे महतां तथेदृशां स्थित्वा सर्वजनः स्ववृत्तिकाः।
दुष्टा विस्मरतीह, ते सदा मत्ताः प्रेम रसे भवन्ति च।।२७०७।।

नित्यानन्दयतिं प्रभुः प्रथमतः श्रीपादमेवाह्वयत्,
चैकान्ते बहुकालमेष विदधद् वार्ता बभौ तेन तु।
गत्वा गौडभुवं तथाहि भगवन्नाम प्रचाराय तं
चक्रे संमत-(मीश्वरोऽपि सुमनाः कान्तोपदेशक्रियः)।।२७०८।।

आज्ञामस्य भवान् ददौ सहृदयो 'गत्वा तु गौडावनी-
माविप्रश्वपचं तथाहि भगवन्नामोपदेशं कुरु।
सर्वेषां, तव कर्मणीह बहवोऽमी रामदासस्तथा
दातारश्च गदाधरप्रभृतयो भक्ताः स्वयोगश्रियम्।।२७०९।।

कल्याणं कुरुतां स मङ्गलश्रीरूपो भगवांस्तवाऽनिशम्।
स्थाताऽहं त्वपि सार्धमेव ते श्रीपादाऽध्वनि गुप्तरूपतः'।।२७१०।।

अद्वैतं पुनरत्र जल्पति भवाना'चार्य! मान्योऽग्रणी-
रस्माकं गुरुरस्ति सर्वसुहृदां पूज्यो भवानेव च।
कुर्वन्नस्तु सदैव तादृशमथोद्योगं, न संकीर्तनाद्
भक्ताः स्युर्विमुखा यतः (सहृदयः, श्रेष्ठानुसारी जनः)।।२७११।।

प्रोत्साहितमेतं सर्वं सततं त्वम्।
संकीर्तनहेतुं कुर्वन्ननु भूयाः' ।।२७१२।।

अस्यानन्तरमागतोऽत्र सुमनःश्रीवासगेहिक्रमो,
ब्रूते 'पण्डितजी'! प्रभुस्तमधुना-'नो मुक्त एव क्षमः।

संसारे त्वृणतस्तवात्र भवितुं क्वाप्यस्मि?, सत्यं तथा
क्रीतोऽहं भवता तु (सौहृदवता, धन्यः सता क्रीयते)।।२७१३।।

यदापि तस्माद् भवदाङ्गणे श्री-
संकीर्तनं भावि, तु गुप्तभावात्।
अवस्थितस्तत्र सदैव भावी
तथाङ्गणेऽहं विदधच्च नृत्यम्'।।२७१४।।

भूयः 'पण्डितजी!' भवान् कथयते संभृत्य वाष्पं दृशो-
'स्तच्छ्रद्धास्पददुःखितासहृदयावृद्धाजनन्याः पदोः।
ब्रूतां मत्प्रणतिं पुनर्ननु पुन,स्त्यक्त्वा तु तामेकला-
मायातो, विहितो मयाऽप्रणयिना स्थानेऽपराधो महान्।।२७१५।।

संकुर्यान्मम पक्षतो ननु भवान्मातुः क्षमायाचनां,
नित्यं तद्रचितं (गृणातु जननीं) नैवेद्यमश्नाम्यहम्।
स्मृत्वा पर्वदिनेषु रोदिति यदा सा मां निमाय्यात्मजं
गत्वा तत्र तदा तथाद्मि विविधान् पक्वान् पदार्थांस्तथा।।२७१६।।

तस्यै यच्छतु सान्त्वनां ननु, भवान् मन्मातरं तां समा-
चारं मद्वपुषस्तथाहि कुशलं ब्रूतां, तथाऽऽगत्य च।
ईहे सत्वरमेव तच्चरणयोः कर्तुं पुनर्दर्शनं'
(पाथेयं परमं निमायिसुमनःसन्देशवाक्यं सताम्)।।२७१७।।

उक्त्वाऽदोऽयं निमायी च श्रीजगन्नाथपूत-
श्रीमद्वस्त्रप्रसादं तस्य प्रसादान्नमेवम्।
पुत्रोऽदत्त स्वमातु,स्ते वस्तुनी पण्डितस्तु
श्रीवासो यत्नपूर्वं बध्नाति (यत्नोऽवधानम्)।।२७१८।।

भूयो भागवतं ह्युदारमनसं सेनं शिवानन्दम-
त्यन्तं स्नेहगिरा भवान् कथयते 'भूत्वा गृहस्थोऽपि तु।
चिन्तां सेन! महाशयाऽल्पमपि नो गेहस्य धत्ते भवान्-,
नेदं तूचितमस्ति, साधुसुहृदां सेवा विधेया सता-।।२७१९।।

गेहस्यापि परं तथाल्पमधिकं ध्यानन्तु धत्तां भवान्,
यत्त्वायात्यपसारयत्यलमहो! तस्मिंस्तदेव क्षणे।

अस्त्यावश्यकता धनस्य नियमाद् गार्हस्थ्यहेतोरपि
त्वल्पं संचयनस्य’ (सात्त्विकचयी गेही भवेदेव कौ)।।२७२०।।

अस्यानन्तरकं कुलीनपदकग्रामस्य तौ वासिनौ
रामानन्दकसत्यराजधनिनावूचे पुनः स्मारयन्।
‘निर्माय प्रतिवर्षमेव भगवत्संपट्टरज्जुं तथा-
भव्यामानयतां (प्रियप्रियगुणैः कृष्णः शिशुर्बध्यते)।।२७२१।।

श्रीरथयात्रायां प्रतिवर्षम्। संमिलितव्यं भक्तजनैश्च’।।२७२२।।

भूयः (खाँगुनराज-मत्र) सुमना मालाधरं तद् वसुं
दृष्ट्वाऽयं प्रतिभाषते ‘वसुमहाभागप्रबुद्धेस्तु किम्?।
संबन्धे कथनीयमेव, घटतेऽत्यन्तं कविः सुन्दरो,ऽ-
दःकाव्यं श्रुतमस्ति कृष्णविजयं (व्यक्तेरभिज्ञा कृतिः)।।२७२३।।

सम्पूर्णं ननु काव्यमस्ति रुचिरं कामं, प्रतीतं परं
तस्यैकं महदेव चारु तु पदं, भव्यं कियद्धा! पदम्-।
“श्रीकृष्णो ननु नन्दनन्दनशिशुर्मे प्राणनाथः” प्रभुः,
पार्श्वस्थं वदति स्वरूपमि‘दमाः! पूर्णं पदं कीदृशम्?’।।२७२४।।

शनैः शनैः स्वरूपकः समं लयेन गायति-।
(निमायिगौररूपकः स्वरूपदामकोदरः)।।२७२५।।

*“एकभावे बन्द हरि जोड़ करि हाथ।*
*नन्दनन्दन-कृष्ण मोर प्राणनाथ।।”*

१३७. नन्दं नन्दयति त्वपि नीलः।
नन्दति मोदते प्रीयते चेतन इह यो निजसद्भावात्
तमपि नन्दयति परमानन्दः प्रियगुणनीलप्रतिमः।
कमनीयाकृतिमरणीयाप्तिस्पृहणीयस्मृतिसम्पत्
मधुराणामपि मधुरप्रकृतिः प्राणः प्राणानामपि।।

ऊचे गौरहरिः ‘कुलीनपदकग्रामस्य’ किञ्चित्क्षणं
स्थित्वा ‘ह्यस्ति वचस्तु किञ्चिदपरं, भक्ता हि सर्वे तथा।
तत्रत्याः पुरुषास्तु, तत्र मुखतः स्थाने मधु श्रूयते
सर्वेषां हरिनामकीर्तनरवः (स्थानं रवाच्चीयते)।।२७२६।।

तद्ग्रामवृकारिस्तन्मे त्वपि वन्द्यः'।
(स्थाने सति पूतेऽद्धा तिष्ठति पुण्यम्)।।२७२७।।

एवं संगदिते कुलीनपदकग्रामस्य वासी प्रभो
रामानन्दकसत्यराजसुमनःसद्वैष्णवादिर्जनः।
व्रीडाऽधःकृतशीर्षको ननु शनैः पप्रच्छ गौरं शनैः
(सङ्कोचो निजशंसनश्रवणतः सत्सत्त्वभावप्रमा)।।२७२८।।

'उद्धारो ननु संभवः प्रभो! रीत्या नोऽपि कयापि गेहिनाम्?।
कर्तव्यं हि किमस्ति न,स्त्विदं वाञ्छामो ननु बोद्धुमत्र कौ'।।२७२९।।

'यूयं सर्वमिदं तु वित्थ, वचनं युष्मत्तथा विद्यते
किं त्वन्तर्हितमेव?, सेत्स्यति पुनः स्थित्वाऽखिलं पूजनम्।
गार्हस्थ्ये भजनं, वचस्त्रयमिदं मुख्यं तथा गेहिनां-
(सिद्धिः साधनया तथाहि नियमात्सर्वत्र वर्णाश्रमे)।।२७३०।।

श्रद्धापूर्वकमात्मभावभगवत्सेवार्चनं सर्वदा
मिष्टश्रीहरिनाम कीर्तनमथ स्थाने मुखेनाऽस्तु च।
संकुर्वंश्च समागतस्य निजकद्वारे यथाशक्ति ना
कुर्यात्सेवनमेव, वैष्णवसतां श्रद्धां विदध्यात्पदोः'।।२७३१।।

सत्यकराजः पृच्छति गौरम्। 'कौ किमभिज्ञा वैष्णवसाधोः?'।।२७३२।।

'यस्याननात्सुमनसस्त्वपि चैकवारं
श्रीकृष्णनाम मधुरं भुवि निःसरेद्धि।
श्रीवैष्णवो ननु स एव, तथेयमेका
स्थूला प्रतीतिरिह सिध्यति वैष्णवस्य'।।२७३३।।

सन्तुष्टान् सुमनाः कुलीनपदकग्रामस्य तान् वासिनः
कृत्वा गौरहरिश्च खण्डपदकग्रामस्य लोकान् प्रति।
पश्यन्नस्ति, मुकुन्ददत्तसुजनस्तल्लोकवृन्दे पिता,
तत्पुत्रो रघुनन्दनो, नरहरिर्मुख्यास्त्रयोऽमी जनाः।।२७३४।।

एवाऽऽसीद्रघुनन्दनो भगवतो भक्तस्तथा वस्तुतो,
दत्तस्यात्मजसङ्गतो ननु पितुः श्रीभक्तिलाभोऽभवत्।

ताभ्यामेष विचिन्त्य गौरसुमनास्तामेव वार्तां प्रभु-
र्जिज्ञासां कुरुते हसन् (स्मितपुरोभाषी हि संभाव्यते)।।२७३५।।

'भ्रातरौ! लषामि वेत्तुमत्र वां द्वयोः सतोस्तु।
कः पिताऽस्ति, कः सुतोऽस्ति?' (संशयोऽस्फुटस्थितिस्तु)।।२७३६।।

एवं प्रश्नमथ प्रभोः कथयतेऽमानी मुकुन्दः 'प्रभो!'
श्रुत्वा धीरगभीरवाचि 'तु पिता संविद्यते साम्प्रतम्।
याथार्थ्ये रघुनन्दनस्तु, वपुषो ह्येतस्य संबन्धतः
स्यामस्म्यस्य तु काममेव जनकः, श्रीकृष्णभक्तिस्तु मे।।२७३७।।

अस्मात्तु लब्धा, त्वनुकम्पयाऽस्य
ह्यभूत्पुनर्जन्म ममाऽत्र, तस्मात्।
पिता यथार्थस्त्वयमेव मे कौ'
(हिते नियुङ्क्ते स पिताऽवनात्मा) ।।२७३८।।

एवं तूत्तरकं मुकुन्दसुहृदः श्रुत्वा बभूवाऽधिकं
सन्तुष्टश्च महाप्रभुः कथयति 'प्रादान्मुकुन्दोत्तरम्।
स्वस्येदं त्वनुरूपमेव च भवाञ्छीलप्रकृत्योस्तथा,
धेयैवं नरि भावनाऽत्र भगवद्भक्तैस्तु भक्तिप्रदे-।।२७३९।।

साधौ सत्पुरुषे महात्मनि तथाऽवस्थासु जातौ कुले
विद्यायां लघुरेव नो किमथवा कामं स माने पुनः।
संबन्धेऽत्र भवेत्स्वतः' संहृदयश्चोक्त्वा तथेयत्प्रभुः
सर्वान् दत्तमुकुन्दभक्तिविषये भक्तान् पुनः श्रावयन्-।।२७४०।।

चैतन्यः कथयन् बभूव सुमनाः स्थाने तथैकां कथा,-
मूचे गौरहरिर्मुकुन्दसुहृदः शंसाक्रियानन्तरम्।
'अस्य श्रीप्रियकृष्णभक्तिरपराऽपूर्वाऽस्ति चात्यन्तकं
(कौ वस्तुक्रिययोः स्तुतिस्त्वलमहो! भावस्तुतिर्दुर्लभा)।।२७४१।।

आसीत्पूर्वत एव चास्य कुलजोऽद्धा राजवैद्यो,ऽप्यसौ
वैद्यो मुस्लिमबादशाहसमिता,वासीन्निषण्णो दिने।
एकस्मिन्निजबादशाहनिकटे, त्वस्मिन् क्षणे सेवको
नीत्वैको व्यजनं नृपाऽनिलमना मायूरमत्राऽऽगतः-।।२७४२।।

मायूरच्छददर्शनात्तु भगवन्मौलिस्मृतिर्ह्युद्गतै-
तस्य, प्रेम्णि विचेतनश्च पतितस्तत्रैव संमूर्च्छितः।
भूत्वाऽयं, ननु बादशाहसुजनो जातोऽधिकं विस्मितो,
नाना तर्ह्युपचारमस्य विधितोऽद्धा कारयामास सः।।२७४३।।

चैतन्येऽस्य तथाऽऽगतेऽवदद्भूपः खेदमहो! प्रकाशयन्।
"स्यात्कष्टं भवतोऽभवद् बहु" (स्थानेऽपि व्यथते चिकित्सकः)।।२७४४।।

भावादन्यमनस्कः सोऽयं जल्पति वैद्यः
"नो राजन्! मम कष्टं किञ्चिन्न त्विह जातम्"।।२७४५।।

पृच्छति भूपस्तद् "भवतोऽदः। जातमकाण्डे रोगविदः किम्?"।।२७४६।।

गूहन् भावमसौ जगाद निजकं "रोगस्तु मे विद्यतेऽ-
पस्मारः, सहसा तथोद्गतमदस्तस्याधुनाऽऽवर्तनम्"।
भूपो यद्यपि सर्वमेव बुबुधे, नोवाच किञ्चित्त्वयं,
कुर्वन्नादरमस्य सोऽभवदहो! तस्मात्प्रभूतं दिनात्'।।२७४६।।

श्रुत्वा गौरहरेः स्वशंसनमसावेवं मुकुन्दो मुखा-
ज्जातो लज्जितवन्मनाङ् ननु, ततः प्रोवाच गौरश्च तम्।
'द्रव्यं त्वर्जतु काममेव विपुलं, सक्तं परं मुञ्चतु
स्वं पुत्रं रघुनन्दनं तु भजने कृष्णस्य चैवानिशम्।।२७४८।।

भक्तो जन्मत एव हि त्वयमहो!, घोरेऽपि शीतक्षणे
स्नात्वा पुष्करिणीजले, भगवतः कादम्बपुष्पैरभूत्।
कुर्वन् पूजनमेष, चात्रभवतोऽद्धा ह्युद्धरिष्यत्यसौ
सम्पूर्णं कुलमेव' (सौभगभरात्कश्चित्कुले वैष्णवः)।।२७४६।।

अस्यानन्तरमेष गौरसुमना गुप्तं मुरारिं प्रभू
रामोपासनभक्तिसंततकृतेरेवोपदेशं पुनः।
चक्रे, श्रावितवांश्च तत्प्रियदृढश्रीरामनिष्ठाकथा-
मुक्त्वा तत्र समस्तभक्तसुहृदो (रामोऽनुकार्यः प्रभुः)।।२७५०।।

भूयः स च विद्यावाचस्पतिभौमौ।
कृष्णस्य तु भक्तिं संकर्तुमथोचे।।२७५१।।

दृष्ट्वा वासुकदेवदत्तमपि स प्रोवाच गौरः पुन-
'श्चेदेवं दश विंशतिस्त्वपि नरा भक्ता भवेयुर्भवे।
उद्धारोऽस्य भवेद्भवस्य तु ततः' श्रुत्वा प्रशंसां निजां
भूत्वा स त्रपितः प्रभोर्वदनतोऽद्धा वासुदेवोऽधिकम्-।।२७५२।।

दैन्येनाह'पदे प्रभोऽत्रभवतस्त्वेकामहं प्रार्थना-
मीहे कर्तुमहो! दयालुरपरः स्थाने भवांस्त्वस्ति हे!।
दृष्ट्वा मद्धृदयं तथास्ति विदलज्जीवानिमान् दुःखितान्
(क्रौञ्चद्वन्द्ववियोगशोककविता वल्मीकजन्मात्मनः)।।२७५३।।

एषैवास्ति ममार्थना,ऽखिलमघं सम्पूर्णजीवात्मना-
मागच्छेद् वपुषीह मे, विनिमये सर्वस्य दुःखं तथा।
एकाकी त्वहमेव चात्र भुनजै, त्वेषैव मे हार्दिकी
वाञ्छा, हीदृशमेव यच्छतु भवानाशीर्वचो मे प्रभो!।।२७५४।।

कर्तुमत्राखिलम्। वै समर्थो भवान्'।।२७५५।।

भावाद्भूतदयात्मकात्प्रभुरतस्तस्य प्रसन्नोऽधिकं,
तद्भक्ताश्चलितुं निमायिहृदयाः सर्वेऽधुना ह्युद्यताः।
स्थातुं गौरसमीपमेव सुमनाः स्थाने मुकुन्दोऽलषद्
(वाद्यं सार्थकमस्ति सौहृदवतः संवादकस्यान्तिके)।।२७५६।।

आज्ञामदादथ स सेवयितुं तु गोपी-
नाथं मुकुन्दसुहृदेऽत्र यमेश्वरेऽस्मै।
कृष्णस्य सेवनमभूदथ कीर्तनं च
क्षेत्रे त्विहैव विदधत्सुमनाः स्थितः सः।।२७५७।।

भक्ता न स्म लषन्ति गौरसुहृदं तु त्यक्तुमेव प्रभुं,
तेषां सम्प्रति कम्पते स्म हृदयं, गन्तुं तथा सज्जिताः।
भूत्वा ते स्म भवन्ति तत्र विवशा, गौरप्रभोर्नेत्रयो-
रासीद्वारि तु संभृतं (करुणता प्रेमात्मनो लक्षणम्)।।२७५८।।

कुर्वन्ति स्म च रोदनं सहृदया भक्तास्तथोच्चस्वरात्,
सर्वेषां परिरम्भणं स्म कुरुते गौरः पृथग्वै पृथक्।
किञ्चिन्न्यूनमथ प्रभोश्चरणयोर्भक्ता विलुठ्याऽधुना
कुर्वन्ति स्ववियोगदुःख-(मपरं दुःखं वियोगात्सतः)।।२७५९।।

अत्यन्तं तु यथा-तथा सहृदयाः स्वं गौडदेशं समं
दुःखेन ह्यचलंश्च भक्तनिवहा, यावच्च दूरं प्रभुः।
तत्संप्रापणहेतुमेष चलितः, स्थानं निवृत्य प्रभु-
स्त्वाप्तः स्वं च विसृज्य भक्तसुहृदः (स्थानं, प्रियः स्यात्पुरः)।।२७६०।।

श्रीकाशीश्वर-भारती-यतिपुरी-गोविन्द-दामोदर-
प्रेयःपण्डितक-स्वरूपमतिमद्दामोदरैरन्वितः।
कुर्वन्नस्ति निवासमेष ससुखं, गौडीयभक्तास्तथा
केऽप्यन्येऽल्पदिनार्थमस्य निकटे गौरस्य चासन् स्थिताः।।२७६१।।

महाप्रभुः प्रेषितवांस्तु नित्या-
नन्देन सार्धं भगवत्सुनाम्नाम्।
प्रचारहेतोरखिलान् प्रियांस्तान्
स्वे गौडदेशे सुमनाः स पश्चात्।।२७६२।।



# सार्वभौमगृहे भिक्षा तथाऽमोघोद्धारः

१३८. करुणा वत्सलतापरिणामः।
क्रौञ्चीक्रन्दनजनिता करुणा सहृदयमुनिवाल्मीकेः
सीतासंरक्षणफललवकुशवत्सलतायां रसिता।
करुणासागरभगवल्लीलाचित्रविचित्रतरङ्गे
जीवजगति वत्सलताप्रकृतिः प्रतिपलमिह परिस्फुरति।
अङ्गीकुरुते निजनिन्दकमपि गौरकृष्णचैतन्यः
परमापेक्षोपेक्षास्थानेऽपुण्यवतः प्रति सुहृदाम्।।

आगत्य प्रभुसन्निधौ स्म कुरुते गौडीयभक्तेष्वहो!
संयातेषु निवेदनं सहृदयोऽद्धा सार्वभौमः 'प्रभो!।
भक्तानां ननु कारणात्तु कथने सङ्कोचमद्यावधिं
चक्रेऽहं, परमद्य ते तु चलिताः (स्थानानुबद्धा नराः)।।२७६३।।

ईहे कर्तुमहं तथार्थनामेकां सम्प्रति सा निमायिना।
स्वीकार्या भवता ध्रुवं मम' (स्थाने हि क्रियते हृदर्थना)।।२७६४।।

किञ्चित्प्रेमपुरस्सरं स विदधद्व्यङ्ग्यं जगाद प्रभुः
'सर्वेषां ननु पूर्वमेव वचसां संकारयेत्स्वीकृतिम्।
संजल्पेच्च तदा,ऽभवत्त्विदमपि स्थानेऽत्र किञ्चिद्वचो?,
ब्रूतां किं वचनं तथाऽस्ति? (वचनं ग्राह्यं तथौचित्यवत्)।।२७६५।।

मन्तव्यं भविता चेन्नूनं तर्हि मनिष्ये।
नो मन्तव्यमथ स्या,त्कर्ता तर्हि निषेधम्'।।२७६६।।

'न, नो वचोऽस्ति तादृशं, तु मान्यमेव विद्यते'।
(न कथ्यते सुगेहिना यतेः सतोऽप्रियं वचः)।।२७६७।।

'ज्ञातं यदा पूर्वत एव विद्यते,
वचोऽस्ति मान्यं, विहितः कथं तदा?।
सन्देह एवाऽस्तु, तथास्ति किं वचः
पुनस्तु भद्रं शृणुयामपि ध्रुवम्'।।२७६८।।

भट्टाचार्यसुहृज्जगाद शनकैः किञ्चित्तथा चिन्तयन्
'वाञ्छा मेऽपि तथाऽस्ति, सा बहुदिनैः पृष्ठेऽस्ति लग्ना मम।

षाठी-(भट्टसुधीकनिष्ठतनया-)-माताऽपि मद्गेहिनी
(गार्हस्थ्ये गृहिणस्तथासुकृतिनः संवादिनी गेहिनी)।।२७६९।।

कालं संततमेव वै कतिपयं त्वानीय गेहे निजे
भिक्षां गौरहरिं निमायिसुहृदं संकारयेम प्रभुम्।
नो भिक्षान्तु भवांस्तथाधिकदिनं यावन्निमायिप्रभो!
स्वीकर्तैव कथं? (निमायिपुरुषः संरुध्यतेऽमायितः)।।२७७०।।

न्यूनात्परं न्यूनमथैकमासं
स्वपादरेणोर्मम नूत्नगेहम्।
पूतं करोत्वेव तु गौडसाधो!
तथेयमेवास्ति हृदर्थना मे'।।२७७१।।

उच्चैर्गौरहरिर्हसन् कथयते 'पूर्वं बभाषे भवान्,
मन्तव्यं वचनं तथास्ति, भुवने कामं वचोऽदो भवेत्।
संन्यासी ननु कोऽपि मूर्तविरतिः स्वीकर्तुमेव क्षम,-
स्तिष्ठेत्संततमेकमासमवधिं भिक्षां स कुर्वंस्तथा-।।२७७२।।

एकस्य चैव गृहिणोऽत्र गृहे, प्रमातुः
संन्यसिनो, मधुकरीं तु गृहाद् गृहाच्च।
संयाच्य कौ ह्युदरपूर्तिविधानमस्ति'
(स्थाने गृहे नियमितो विधिनाऽत्र गेही)।।२७७३।।

'सर्वं वचोऽदस्त्यजतु प्रभो! हे!,
स्वीकृत्य याच्ञान्तु भवांस्तथेमाम्।
करोतु वाञ्छाभरणं निमायिन्।
मे मत्कुटुम्बस्य तथाऽखिलस्य'।।२७७४।।

'आचार्य'! प्रभुरेष तत्प्रकटयन्नाश्चर्यवद् भाषते
'कर्ता मां विवशं भवानपि यदा संन्यासिनं पण्डितः।
ईदृग्धर्मविरुद्धकर्मविषये, तन्मूर्खभक्तात्मनां
का वार्तैव तु? (शोभनं भवति नो संन्यासिधर्मे हठः)।।२७७५।।

एकस्याथ दिनद्वयस्य कथयेद् भिक्षां तु कुर्यामपि'
ह्यन्ते पञ्च सुनिश्चिता यतिसतोर्भिक्षा दिनानां द्वयोः।
पश्चाद् वादविवादयोर्बहु तयोः, स्थाने रहस्तु प्रभुं
भट्टो भोजयितुं गृहे स्म लषते (भावो रहो व्यज्यते)।।२७७६।।

तस्मात्तु प्रभुसङ्गिनः परे ह्यन्यान्याह्वि महात्मसाधवः।
स्वे गेहे गृहिणा निमन्त्रिताः (संमर्दे त्रपते सुभावना)।।२७७७।।

भट्टाचार्यगृहे प्रभुश्च नियते काले तथोपस्थितोऽ-
द्धा भिक्षाकरणार्थमेष, गृहिणो भट्टस्य चैका सुता।
षाठी नाम च चन्दनेश्वरपदोऽस्याऽऽस्तां तथैकः सुतः
(सन्तानैः परिचीयतेऽत्र भुवने गेही तथापेक्षितैः)।।२७७८।।

भौमस्यैव विपश्चितश्च निकटे भट्टस्त्वमोघोऽवसत्
षाठीनामसुतापतिः, प्रकृतितोऽश्रद्धो महान् नास्तिकः।
आसीदेष महाशयस्तु, तदसौ भौमो गृही तं प्रभो-
र्भिक्षायाः समये बहिः स्म कुरुते कार्यान्तरे कुत्रचित्।।२७७९।।

एकान्ते ह्युपवेश्य भौमसुमतिर्गौरप्रभुं कारयन्
भिक्षामस्ति च, सार्वभौमगृहिणी भोज्याश्च नानाविधाः।
सामग्रीस्तु महाप्रभोः स्म पचते भिक्षाकृतेऽमायिनः
(श्रद्धालोर्गृहिणी गृहागतकृते पाके प्रवीणायते)।।२७८०।।

आसंस्तत्र तथाहि विंशतिविधाः शाकास्तु नानाविधं
निष्ठानं च तथाऽम्लमिष्टममितं पाके फलोपस्कराः।
मिष्टान्नं विविधं निमायियतये नानाविधास्तण्डुलाः
पञ्चाशद्विधमन्यवस्त्वपि तथा-(ऽनन्ते तथाऽनन्तता)।।२७८१।।

किञ्चित्तु स्वगृहे पपाच जननी षाठ्यास्तथा मन्दिरात्
किञ्चिद् ग्राहयति स्म तद्भगवतो वस्तु प्रसादात्मकम्।
पञ्चाशत्परिवेषणं स्म कुरुते पात्रेषु गेही च तद्-
वस्तूनां तु पृथक् पृथक् प्रभुपुरोऽसौ सार्वभौमः सुधीः।।२७८२।।

दृष्ट्वा तानियतो बभूव मुदितोऽत्यन्तं पदार्थान् प्रभु-
श्चाश्चर्यं मुदितां तथा प्रकटयन्नूचे'ऽस्ति वार्ता परम्।
आश्चर्यस्य तु, चन्दनेश्वरसुता वस्तूनि सद्गेहिनी
ह्येकस्मिन् दिवसे पपाच तु कथं चैतानि चेयन्ति सा।।२७८३।।

निर्मातुं न शतान्तिकास्वपि पृथक्स्थाने पृथक् विंशति-
र्नार्यः स्युर्भुवने क्षमाः प्रकृतितो वस्तूनि चेयन्ति तु।

धन्यो भट्टमहाशयस्तु, भगवद्भोगे क्षितावर्प्यते
यद्गेहे ननु वस्तुजातमियदाः! (धन्योऽर्पितात्मा गृही)।।२७८४।।

को वस्तून्यतिता न्वियन्ति तु परं, ह्येभिस्तु मर्त्यात्मनां
स्यात्पूर्णं जठरञ्च विंशतिनृणां, शेषाणि भूयस्तथा।
स्थास्यन्तीह, ततोऽल्पमल्पमधुना त्वेभ्यो भवान् पण्डितो
न्यूनं संकुरुतां' (त्यजेन्नहि यतिर्भिक्षान्नमुच्छिष्टकम्)।।२७८५।।

'नास्त्यत्र त्वधिकं प्रभो!, बहु परं तु न्यूनमेवास्ति षट्-
पञ्चाशद्विधभोगवस्तुनिवहाच्छ्रीमन्दिरस्यात्मनः।
भूयस्तत्र तु विंशतिक्रमतया भोगोऽर्प्यते,ऽत्र त्वहं
ह्यल्पाल्पं परिवेषणं तु कृतवानेकैकवारं परम्।।२७८६।।

धन्यं कुरुतां मां लब्ध्वा त्विदमेव'।
(गेही कृपणोऽद्धा संन्यासिसमक्षम्)।।२७८७।।

गृह्णन् गौरहरिः प्रसादमभवच्छ्रीसार्वभौमाऽऽग्रहाद्,
यद्वस्त्वर्धमथ प्रभोः स्म भवति न्यूनं तदेव द्रुतम्।
भट्टाचार्यगृही पुनः सहृदयः संपूरयामास स
(क्षुत्प्रीतिर्निजभुक्तितोऽधिकमहो! सद्भोजनाऽऽलोकनात्)।।२७८८।।

अप्यासीत्परिवेषणस्य समये प्रेयोनिमाय्यात्मने
जामातुर्निजकस्य चास्य गृहिणो ध्यानं ह्यमोघस्य तु।
एतस्मात्परिवेष्य वस्तु तरसा द्वारे स गत्वाऽऽस्त, यत्-
कुर्याद्विघ्नमुपस्थितं कमपि नाऽमोघोऽत्र चागत्य तु।।२७८९।।

आयान्तं च ददर्श भौमविबुधोऽमोघं तथात्रान्तरे,
दृष्ट्वैवैष तु दूरतो दिशति तं गन्तुं परस्मिन् गृहे।
सोऽमोघस्तु तदा ययौ परगृहे, नेतुं तु किञ्चिद्ययौ
गेहेऽन्यत्र यदा बुधः प्रभुकृते, तच्छीघ्रमेवाऽऽगतः-२७९०।।

सोऽमोघः प्रभुसन्निधौ, प्रभुपुरोऽमोघो ब्रुवंश्चाभवद्
दृष्ट्वा व्यञ्जनसञ्चयं शतविधं कृन्तंस्तु जिह्वां रदैः।
'संन्यासी, प्रतिमूर्तिरिष विपदोऽन्यो, बाप! रे बाप!, वा
(मूर्खोऽतृप्तमनास्तथाहि विकलः सर्वत्र तु स्थूलदृक्)।।२७९१।।

भूमौ कर्तुमियत्तु भोजनं नो शक्षयन्त्यपि विंशतिर्जनाः।
कर्तेयत्कथमेष भोजनं?' (भुङ्क्ते सीमितमेव मानवः)।।२७६२।।

आगत्य द्रुतमेव तत्र वचनं श्रुत्वैव चेदं गृही
भट्टाचार्यकसार्वभौमसुमना जातस्तथोपस्थितः।
व्यत्यस्तं सरलं वचो दश तथाऽमोघं निशाम्य, प्रभुं
गेही याचति च क्षमामपि कृतेऽमुष्याऽपराधस्य सः।।२७६३।।

सारल्येन समं तथैव महता स्थाने जगाद प्रभु-
'श्चक्रेऽस्मिन्नपराधमेव किमहोऽमोघस्तु सत्यं वचः।
एतेनोक्त,मियद्धि वस्तु भुवने संभोज्य संन्यासिनं
कामं, कोऽपि कथं प्रतीच्छतु—सदाचारी स तिष्ठेत्तथा।।२७६४।।

सत्यं मामधिकं त्वियन्ननु भवान् संभोजयामास यन्-
नो शक्यं भवदस्ति भूमितलतस्तूत्थानमप्यत्र मे।
उक्तं वास्तविकं वचो मृदुहृदाऽमोघेन, कुर्याद्भवान्
प्राज्ञस्तस्य नहि प्रतारण-(मलं स्वाद्योऽष्टमो विस्मयः)।।२७६५।।

क्षोभो मनागपि न तद्विषये ममाऽस्ति,
त्वन्यद् भवान् किमपि बोधतु नो निजान्तः'।
उक्त्वा महाप्रभुरियच्च विलभ्य भिक्षां
स्थानं निवृत्य सुहृदामृषभः स्वमाप्तः।।२७६६।।

जातं दुःखमतोऽधिकं तु घटनातः सार्वभौमस्य तत्-
सत्पत्न्याः, क्षुभितावमोघमुभयौ स्थानेऽपमानात्प्रभोः।
क्रोशन्तौ च बभूवतुः, सहृदयौ भट्टश्च तद्गेहिनी
नात्तां किञ्चिदपी-(ह भावकहृदो दुःखं परार्थाश्रयम्)।।२७६७।।

भट्टाचार्यसुता स्म गर्हयति सा षाठी तु देवी निजं
भाग्यं, सा भगवन्तमेव सततं ब्रूते 'दयालो! प्रभो!।
अस्त्यच्छं पतिहीनजीवनमलं पत्युर्ममैवंविधा-
दन्तं मद्वपुषस्तु वाऽस्य कुरुतां (सच्छंसितं, जीवनम्)।।२७६८।।

संसारे पतिमेव वाऽथ कुरुतामेवं पशुघ्नं पृथक्
साधुद्रोहिणमत्र मत्करुणया'ऽमोघो बहिर्निर्गतः।
दृष्ट्वा स्वश्वसुरस्य तादृशसतोऽद्धा रक्तरक्ते दृशौ,
प्रत्यावृत्य गृहं न तत्र दिवसे प्राप्तो निशायामपि।।२७६९।।

भट्टाचार्यकगेहे चक्रे भोजनमद्धा।
कश्चित्तद्दिवसे नो (मर्त्यो भोजनशाली)।।२८००।।

पश्यत्वत्र निमायिनो भगवतो लीलां विचित्रां परं,
प्रत्यक्षं मिलितं फलं निजकृतेरस्याममोघस्य कौ।
अन्यत्रैव विषूचिकाऽस्य दिवसे रोगोऽभवद्भीषणः
(कौ रोगप्रसृतिस्तमोगुणहृदः स्वाभाविकी बाधते)।।२८०१।।

श्रुत्वैवाऽऽह मुदं मनाक्प्रकटयञ्छ्रीसार्वभौमस्त्विमं
वृत्तान्तं 'चल भद्रमेव घटितं, पापस्य पुण्यस्य च।
अत्युग्रस्य फलं त्विहैव मिलते पृथ्व्यां क्षणेनात्मनां,
लब्धं तादृशमेव तस्य विहितं स्पष्टं त्वमोघेन यत्'।।२८०२।।

आनिन्युर्ननु सार्वभौमभवनं चोत्थाप्य लोकास्तथाऽ-
मोघं, श्रावितवान् महाप्रभुमिदं वृत्तं च गत्वा सुहृत्।
गोपीनाथबुधो, महाप्रभुरथ श्रुत्वैव धावन् द्रुतं
त्वायातः प्रियसार्वभौमवसतिञ्चागत्य तेनेक्षितम्-।।२८०३।।

पल्यङ्के त्वपसंज्ञोऽमोघः संपतितोऽस्ति।
नो तज्जीवनकाशाऽप्याऽऽस्ते कस्यचनाऽपि।।२८०४।।

तत्पल्यङ्कसमीपमेष सुमना यातस्तदा तु प्रभु,-
र्धृत्वा चोरसि तस्य जल्पति करं 'भूमावहो! कोमलम्।
बालानां हृदयं कियद् भवति वै, भूयः कुलीनात्मनां
विप्राणां कथनीयमेव ननु किं? (विप्रो महान्मार्दवात्)।।२८०५।।

लोकेऽन्तःकरणं निमायिमनसां स्वच्छं तथा निर्मलं
वासस्यैव निमायिनो भवति कौ योग्यं द्विजानां प्रभोः।
मात्सर्यं ननु राक्षसोऽयमपरो जाने न विष्टः कुतोऽ-
दोऽमोघस्य हृदन्तरे' (ननु तमोविष्टिः किमर्कान्तरे?)।।२८०६।।

स्थित्वा मौनमथाल्पकक्षणमयं भूयो बभाण प्रभु-
'र्भट्टाचार्यकसार्वभौमभवनेऽमोघस्य संवासिनः।
स्थानेऽन्तःकरणे प्रवेशकरणेऽभूत्साहसं ते कथं?,
रे मात्सर्य! तथाहि दुष्ट! (लभते ध्वान्तं दिवाऽपि स्थितिम्?)।।२८०७।।

शीघ्रं विद्रव सार्वभौमभयतः स्थानात्पलाय्याऽधुना'
चोक्त्वेयत्पुनरत्र जल्पति तथाऽमोघं तु संबोध्य सः।
'चाण्डालोऽपसृतस्त्वदीयहृदयान्मात्सर्य,मद्य द्रुतं
त्वं तूत्थाय विधेह्यमोघ! मधुरं श्रीकृष्णनामाऽऽलपम्'।।२८०८।।

श्रुत्वैवेयदमोघो निद्राणोऽत्र यथा ना।
उत्थाय द्रुतमेष स्थानेऽभूच्च समुत्थः।।२८०९।।

१३८. नृत्यति कुर्वन्नामालपनम्।
उच्चैः, श्रुतिमधुरं हृत्तर्पणमत्यन्तं कल्याणम्
श्रीमद्भगवन्नामोद्गानं संबोधनरसकलितम्।
श्रीकृष्ण! गोविन्द! हरि-मुरहर! नाथ! प्रिय! नारायण!
वसुदेवात्मज! नन्दनन्दन! स्वस्मरणं मे यच्छतु।।

दृष्ट्वा तस्य दशामिमां व्यतिहृतां सर्वे च भूत्वाऽद्भुता-
माश्चर्याच्चकिता महाप्रभुमुखं पश्यन्ति, चैव प्रभोः।
बोधन्ते परमं प्रसादमिममाः! पादे पतित्वा प्रभो,-
स्तं सन्तं स्वकृतापराधविषयेऽमोघोऽप्ययाचत्क्षमाम्।।२८१०।।

कृत्वा तं स्वगले महाप्रभुरहो! तस्मै ददौ सान्त्वना-
मेवाऽमोघमतौ महाननुशयो जातः कुकृत्ये निजे।
स्मृत्वा स्वं त्वपराधमेष निजयोरेव ह्युभाभ्यां तथा
हस्ताभ्यां तु कपोलयोः करतलाऽऽघातानभूत्ताडयन्।।२८११।।

तस्यानेन बभूवतुः स्फुटतया गल्लौ सशोथावुभौ,
गोपीनाथसुहृन्न्यवारयदहो! तत्कर्मणस्तं तदा।
गौरः कृष्णसुकीर्तनस्य सुमनास्तस्योपदेशं ददौ
(श्रीचैतन्यनिमायिनोऽवतरणं श्रीकृष्णसंकीर्तनम्)।।२८१२।।

जातो भागवतस्ततस्तु परमोऽमोघो दिनाद् वैष्णवो,
भक्तेषु त्वभवत्प्रभोश्च गणना तस्यान्तरङ्गेष्वलम्।
गोपीनाथबुधं दिदेश सुमना गौरस्तदा 'त्वं स्वयं
गत्वा भोजय सार्वभौमगृहिणं पत्नीं च तस्य द्रुतम्'।।२८१३।।

लब्ध्वाऽऽज्ञां सुहृदः प्रभोः सहृदयः संभोजयामास ता-
वाचार्यो,ऽस्य निमायिनः कथनतोऽमोघक्षमां चाकरोत्।

प्रीतिं तत्र तथाऽधिकां स्म कुरुते श्रीसार्वभौमो दिना-
त्तस्मात् (प्रीतिसरस्वती प्रभुकृपापात्रे स्वतः स्यन्दते)।।२८१४।।

प्रीतिं प्रभुपादेऽमोघोऽपि च चक्रे।
अत्यन्त-(मिह श्रीप्रीतिर्निरसिद्धिः)।।२८१५।।



# श्रीनित्यानन्दद्वारा गौडदेशे भगवन्नामवितरणम्

१४०. प्रभुश्रीपादो नित्यानन्दः।
गौरवर्णकृशलम्बशरीरो बाल्यावधूतप्रकृतिः
मिलितो गौराङ्गाग्रजरूपो 'श्रीपाद!' प्रभुकलितः।
भगवत्प्रभुपरमात्मभावना केवलमथ चैतन्ये
यस्य श्रीसंकीर्तनविहरणपूता गौडावनिरिह।।

नित्यानन्दयतेः सदैव सुहृदस्त्वासीत्स्वभावो यथाऽ-
बोधस्यैव शिशोः, स्थितोऽयमभवद् बाल्येऽत्र पुर्यामपि।
भावे त्वेव सदा, भवेयुरपरे तस्मिन्ननन्ता गुणाः,
किन्त्वेको निखिलोत्तमो ननु गुणस्तस्मिंस्तथासीद्यतौ।।२८१६।।

स्वप्राणादपि चाधिकं प्रभुमहो! संकामयामास स,
प्रीतिस्तस्य महाप्रभोश्चरणयोरासीत्प्रगाढा यतेः।
बोधत्येव न स स्म किञ्चिदपरं लोकेऽतिरिक्तं प्रभो-
(र्निष्ठैकत्र हि लोभभीतिरहिता प्रेमाऽऽप्लुता कस्यचित्)।।२८१७।।

आसीत्तस्य कृते यतेर्यदपि कौ किञ्चित्परात्मा पुन-
र्ब्रह्म श्रीभगवांस्तथाहि कलितश्चैतन्य एव प्रभुः।
वार्तां स प्रभुणा यतिः स्म कुरुते सार्धं तु बालो यथा
(बालो निश्छलभावनः, सहृदयः स्वस्थायिभावाग्रही)।।२८१८।।

तस्याऽऽसीद्भ्रमणस्य पूर्वसमयादेव स्वभावो यते,-
रानन्दानुभवं चकार शिशुभिः सर्वाधिकं क्रीडने।
क्रीडंस्तैः सह सर्वदा स्म भवति स्थाने, तथोच्चैश्च तैः
साधुर्वाचयति स्म-(वाञ्छति जनः श्रोतुं यतः प्रीयते)।।२८१९।।

१४१. यूयं ब्रूत श्रीकृष्णगौर!
मधुरमधुरहरिचैतन्यकृष्ण! निमायिनामगौराङ्ग!
शोकमोहभयनाशन-कलिमलहरण-प्रेमसरोवर!।
'बालस्तावत्क्रीडासक्तः' श्रीमच्छङ्करचिन्ता
परमिह गौडे बालः सिध्यतु कृष्णगौरसंवदनः।।

बालास्तत्प्रियनामसद्रवं कुर्वन्ति स्म, निशम्य तन्मुखात्।
एतत्कीर्तनमेष नित्यकोऽप्रेष्टाऽत्यन्त-(महो! प्रियश्रुतिः)।।२८२०।।

आहूय स्वसमीपमाह सुमना गौरोऽमुमत्रैकदा
'श्रीपादाऽस्ति निमायिनीह भवति स्नेहस्तथा मे कियान्।
तं जानाम्यहमेव, न क्षणमपि स्थानात्स्वतोऽहं पृथङ्
नेहे कर्तुमहो! भवन्त-(मपरः प्रत्यक्षमात्माऽऽत्मनः)।।२८२१।।

जीवानां तु परं न दुःखमवनौ द्रष्टुं मया शक्यते,
व्यस्मार्षुर्भगवन्तमत्र मनुजाः स्पष्टन्तु गौडावनेः।
ये न्यूनाधिकमुन्नताः कतिपयेऽद्धा शिक्षिताः सन्ति, ते
संमग्ना विलसन्ति संततमहो! विद्याभिमाने निजे।।२८२२।।

न न्यायाऽरसफक्किकाऽभ्यसनतस्त्वेवाऽवकाशोऽर्ज्यते
तेषां, कृष्णसुकीर्तनं तु घृणया दृष्ट्या विपश्यन्ति ते।
उद्धारे प्रभुरद्य कश्चिदपरो द्वीपे भवन्तं विना।
न श्रीगौडभुवोऽस्ति (सौहृदधनी कश्चिन्महामानवः)।।२८२३।।

कर्मेदं भवतैव सौहृदहृदा श्रीपाद!हे! शक्ष्यते,
गन्तव्यं भवता स्वगौडविषये कल्याणहेतोस्ततः।
जीवानां हरिनामसद्वितरणे भूत्वा पृथङ् मत्पुन-
(र्दक्षः संग्रहणेऽखिलो, वितरणे कश्चित्प्रमाता कृती)।।२८२४।।

दातुं भवानेव न भेदभावं
धृत्वोच्चनीचं भगवत्सुनाम्नः।
सर्वस्य लोकस्य तथोपदेशं
क्षमो'-(ऽवधूतो हि समत्वभावः)।।२८२५।।

श्रुत्वेदं प्रभुमर्मवेधिवचनं प्राप्तानि चाश्रूणि तन्-
नित्यानन्ददृशोश्च रुद्धगलतोऽसावाह नित्यः 'प्रभो!।
स्थाने सर्वसमर्थको ननु भवान्, ज्ञातुं न शक्या भव-
ल्लीला, कारयितुं किमिच्छति भवान् जाने न केनाऽवनौ।।२८२६।।

किं कर्तुमेव भवतस्त्वनुपस्थितौ स्यां
कामं क्षमोऽस्मि, तु भवन्तमृते प्रभो! हे!।

शक्ता न किञ्चिदपि कर्तुमहं, स्वपद्भ्यां
कुर्यात्पृथग् भुवि न मा'-(मलिरब्जवासः)।।२८२७।।

'आगत्य मेऽत्र समये समये ददातु
स्थाने स्वदर्शनमहो! ननु यातु कृत्वा।
श्रीदर्शनं भगवतो,ऽद्य तु गौडदेशे
गन्तव्यमेव भवता' (हि यतिः परार्थः)।।२८२८।।

नित्यानन्दयतिर्बभूव विवश,श्चक्रे तथाज्ञां शिरो-
धार्यां गौरमहाप्रभोः स विवशो भूत्वा यतिः प्रस्थितः।
गौडक्ष्मां त्वभिरामदासमपरं कृष्णं स दासं तथा
सङ्गे पण्डितकं पुरन्दरपदं नीत्वा गदादासकम्।।२८२९।।

इत्यादीन् सुहृदो निमायिहृदयान् भक्तान्निमायिप्रियान्,
नो कस्मादपि तस्य भीस्तु वचसो नित्यप्रभोः, साम्प्रतम्।
आसीदेव, जगाद स स्वयमहो! 'स्थास्यामि' गौरप्रभुः
'सङ्गेऽहं भवतः सदा,-(सहृदयः श्रीपादसङ्गं त्यजेत्?)।।२८३०।।

त्यक्त्वा कञ्चन भेदभावमभयो भूत्वा विदध्याद् भवान्
नाम्नः श्रीभगवद्धरेर्वितरणं सर्वत्र' कुर्वन् प्रभोः।
विश्वासं वचसीह पूर्णमसरत्स प्रेम्णि मत्तोऽग्रतो
नित्यानन्दयति-(र्हि भावपुरुषो विश्वासमालम्बते)।।२८३१।।

आनन्दे स परिभ्रमन् प्रियमदे नृत्यन् दयाञ्च स्मरन्
गौराङ्गस्य समं निमायिहृदयैर्भक्तैश्च गच्छन्नभूत्।
किञ्चित्तस्य निमायिनो निजकृते कर्तव्यमासीत्तु नो
(कर्तव्यं ननु काममूलमखिलं, कामो नृणां मायिनाम्)।।२८३२।।

जीवानां त्वखिलानां कल्याणस्य निमित्तम्।
आप्तः स्वप्रभुगौराऽऽदेशाद् गौडभुवं सः।।२८३३।।

आसीद् भक्तिरसामृतस्य तृषिता सम्पूर्णगौडावनी
पानायाऽत्र यथा स्थिता, भगवतो भक्तावसामान्यतः।
नात्रासीदधिकार एव विषये निम्नोक्तजात्यात्मना-
(मौचित्यं परमार्थतो व्यवहृतौ तन्नो तथा सिध्यति)।।२८३४।।

विद्वांसः परमार्थवस्तुजगतः श्रेष्ठास्तथा पण्डिता-
स्तानुक्त्वाऽनधिकारिणश्च भजनश्रीसाधनाद्वारयोः।
चक्रुर्नह्युपदेशमेव, निखिलस्त्वासीत्तथैकाध्वनः
शोधे, यत्प्रभुपादपद्मगमने सर्वोऽधिकारी भवेत्।।२८३५।।

एवैतादृशि सुन्दरे ह्यवसरे चक्रे प्रवेशं प्रभु-
र्नित्यानन्दयतिस्तु गौडविषये, वाण्यामथाऽऽकर्षणम्।
अस्यासीच्च तनौ निमायिमनसः स्फूर्तिस्तथौजो मुखे,
विश्वासश्च महाप्रभोः सुमनसः प्रेम्णस्त्वनन्यो दृढः।।२८३६।।

एतैरेव वचोभिरस्य विषये गौडे प्रवेशं कृते
सत्येवाल्पदिनैः प्रभावमहिमा नामोपदेशश्रियः।
सर्वत्र प्रसृतो हरेर्भगवतो मन्त्रप्रयोगो यथा
(मध्येतप्तहृदं महत्त्वमधिकं भावाम्बुनो जायते)।।२८३७।।

सामान्यात्किमपि प्रकारमथ नाऽयं भेदभावं दधा-
वेव श्रीप्रभुनित्यकस्तु भगवन्नामोपदेशे यतिः।
इच्छेदस्य तु यः स एव निकटादागत्य धर्तुं तथाऽऽ-
सीत्तापत्रयहारिपूतभगवन्नामोपदेशं क्षमः।।२८३८।।

नीचत्वेन विशेषतः सहृदयोऽसौ कथ्यमानासु तज्-
जातिष्वेव कृपां चकार सुमना नित्यस्तु सर्वाधिकम्।
वार्तास्वस्य तथोच्चजातिमनुजाः स्वश्रेष्ठतायाः स्मये
नैव ध्यानमदु(स्तथा प्रकृतितो ध्यानं, यथा धारणा)।।२८३९।।

शृण्वन्ति स्म च निम्नवर्गजनतास्त्वेवास्य नित्यप्रभोः
श्रद्धापूर्वकमत्र वाक्यममृतं, नित्योऽवधूतस्ततः।
तेषामेव तथोपदेशमधिकं चक्रे, च कुर्वंस्तथा
लोकेष्वेष निरन्तरं भगवतो नाम्नः प्रियं वर्षणम्।।२८४०।।

तत्कृष्णकीर्तनरसामृततस्तथाप्तोऽ-
पूर्वं जनांश्च सुखिनो विदधन्नितायी।
ग्रामे स्वभक्तसहितश्च गृहे स पानी-
हाटीपदे वसति राघवपण्डितस्य।।२८४१।।

आसीदेष महाप्रभोः स्वयमहोऽद्धा राघवः पण्डितो
भक्तोऽनन्यमना,स्तथाह्यतिशयं सत्कारमेषोऽकरोत्।
सार्धं सङ्गिजनैर्निितायिसुहृद,श्चापि प्रचारार्थकं
ग्रामेष्वेष बहिः समं सुमनसा गच्छन्नभूत्तेन तु।।२८४२।।

नित्यानन्दयतिस्तु तत्र सुमनाः स्थित्वा स मासत्रयं
कुर्वन् कृष्णसुकीर्तनस्य जनतायां चोपदेशं बभौ।
च ग्रामेषु ययौ स्वसङ्गिसहितो गङ्गातटस्थेष्वयं
कर्तुं जल्पति कृष्णकीर्तनमहो! सर्वांस्तु तत्र प्रियम्।।२८४३।।

स्थाने न त्वपठद्विशेषमवनौ विद्यामसौ पुस्तकीं,
ग्रामीणां जनतामहो! सुगमया निर्व्याजया भाषया।
सारल्येन समं स्म बोधयति, चात्यन्तं प्रभावोऽभव-
ल्लोकेष्वस्य तु बोधनस्य (भुवने संबोधको दुर्लभः)।।२८४४।।

कुर्वन्तस्तत एव ते च दिवसात्स्थानेऽभवन् कीर्तनं,
मध्येऽस्मिन्नयमम्बिकाख्यनगरेऽथाऽपि प्रचारार्थकम्।
यातः कीर्तनकस्य, तत्र सुहृदः सत्कारमस्याधिकं
चक्रे पण्डितसूर्यदाससुजनः (सत्कारकारोऽपरः)।।२८४५।।

उवास तस्यैष गृहे स्वभक्तै,-
स्तत्सूर्यदासस्य कुटुम्बवर्गः।
श्रीनित्यपादेऽतिशयं दधार
श्रद्धां (निमायी पर एव गेही)।।२८४६।।

एवं नित्ययतिर्निमायिहृदयः पानीकहाटीस्थले
धारां प्रेममयीं प्रसार्य भगवच्छ्रीनामभक्त्योस्तथा।
स्वैरानन्दमयीं समं परिकरैस्तस्थौ च गङ्गाधराऽऽ-
वासे त्वेडदहस्थले (सहृदयाभावः क्षितौ क्वापि नो)।।२८४७।।

ग्रामेऽत्रैव तथैकमुस्लिमजनः काजी विरोधी महा-
नासीत्कीर्तनकस्य, सोऽपि सुमनोनित्यप्रभावात्स्वयम्।
आगत्यात्र ननर्त सौहृदभरात्सङ्कीर्तने,ऽवर्धत
त्वस्यात्यन्तमथ प्रभावमहिमाऽनेनापि नित्यप्रभोः।।२८४८।।

श्रद्धामस्य नितायिनः स्म दधतेऽनन्यां जनः, श्रूयते,
सर्वत्र ध्वनिरेष एव– 'जयतु श्रीकृष्णचैतन्यकः'।
'श्रीमद्गौरनितायिनोर्ननु जयो भ्रात्रोस्तथापूर्वयो'–
'र्नित्यानन्दजयो' (यतोऽपरमुदोऽद्धा कीर्तनीयोऽत्र सः)।।२८४६।।

प्राप्तश्चैडदहस्थलात्खडदहे नित्यश्चलित्वा प्रभु,–
स्तत्रोभौ सुहृदः पुरन्दरबुधश्चैतन्यदासस्तथा।
एतस्यादरसत्कृतिं त्वतिशयं भक्ताविमौ चक्रतुः
श्रीनाम्नोऽस्य तथा प्रचारकरणेऽद्धा योगदानं पुनः।।२८५०।।

लोकं प्लावितमेवमेव संकुर्वन् प्रेम्णि हरेर्निमायिनः।
सप्तग्राममयं प्रभाववानाप्तः (सौहृदमस्ति नो मितम्)।।२८५१।।

वङ्गे तत्समये सुवर्णवणिजो जात्या समाजे जना
बुध्यन्ते स्म तथाधमा बहु नृणां, पानं जलस्याभवत्।
दूरं तत्करयोस्तु, जातिगुणिताः प्राज्ञा महान्तः पुन–
स्तत्स्पर्शेऽपि हृदा तथाहि वचसा चक्रुर्घृणां पण्डिताः।।२८५२।।

नित्यानन्दसुहृत्परं प्रथमतस्त्वेताञ्जनानेव स
स्वीचक्रे, धनिनो जनाः परममी ह्यासंश्च लालायिताः।
'नोऽपि स्यात्परमार्थवर्त्मनि तथा स्थाने प्रवेशः क्षिता'–
वस्पृश्यत्वमवारयत्सुमनसामेषान्तु नित्यप्रभुः।।२८५३।।

आसीत्स्वर्णवणिक् तदोद्धरणको दत्तस्तथैको धनी,
तस्थौ तस्य गृहे प्रगम्य यतिको नित्यो ददानोऽभवत्।
सर्वेभ्यो ह्युपदेशमेष भगवद्भक्तेर्वणिग्भ्यस्तथा
दीप्तिः स्वर्णवणिक्षु चातिमहती ह्येतत्प्रभावादभूत्।।२८५४।।

एतत्कर्म तु साहसस्य महतोऽस्यासीच्च नित्यप्रभो–
रेतेनात्र तथोच्चजातिजनता नानाऽकरोद्द् धिक्कृतिम्।
चक्रे नैष परं निमायिहृदयः कस्यापि चिन्तां यतिः
(सौहार्दं तनुते कृती सहृदयोऽलोकस्वसङ्केततः)।।२८५५।।

निर्भीकतायाः पुरतोऽस्य पश्चात्
सत्यप्रसक्तेः पदयोश्च सर्वे।
नेमुः शिरो नित्यनिमायिबन्धोः
(कियत्क्षणं स्यात्सुहृदां विरोधी?)।।२८५६।।

नामाऽस्य प्रसृतं सुवर्णवणिजां नित्यप्रभोः सर्वतो
द्वीपेऽङ्गीकरणा,ज्जनाः स्म विविधं कुर्वन्ति चालोचनाम्।
प्रत्यालोचनमस्य तत्र विषये, ग्रामेषु कुर्वन्नसौ
सप्तग्राममनु प्रियस्य भगवन्नाम्नः प्रचारं तथा-।।२८५७।।

अद्वैतस्य गृहे च शान्तिपुरकेऽसावागतो,ऽद्वैतजी
दृष्ट्वैवामुमभूत्तथापुलकितः, कुर्वंस्तथाऽऽलिङ्गनम्।
गाढं शीघ्रममुष्य, सौहृदभरात्प्रेमाश्रु मुञ्चन्नभूत्
(सत्प्रेमाश्रु निमायिसत्त्वसुहृदोः सम्मेलनात्स्यन्दते)।।२८५८।।

मुग्धौ प्रेम्णि परस्परं तु पुरुषावद्धा महान्तावुभौ
कुर्वन्तौ परिरम्भणं स्म भवतो गाढं, गते न्यूनताम्।
आवेगे बहु तन्निमायिमनसोः प्रेम्णः क्षणानन्तरं
ब्रूतेऽद्वैतगुरु'र्मनोगतमहो! भावं भवानेव तु-।।२८५९।।

श्रीचैतन्यमहाप्रभोश्च बुबुधे सत्यं नितायिन्!, भवान्
गौराङ्गस्य निमायिनो ननु बहिःप्राणोऽस्ति' कृत्वा स्तुतिम्।
नित्यानन्दयतेस्तथाविधमथाऽऽचार्यश्चकाराऽऽग्रहं
स्थातुं कञ्चिदमुष्य तत्र समयं (प्रेमी प्रियस्याऽऽग्रही)।।२८६०।।

अद्वैताऽऽग्रहतस्तथा यतिर्नित्यः शान्तिपुरे त्ववस्थितः।
कुर्वञ्छ्रीहरिनामकीर्तनश्रीलोकव्यवहारमाबभौ।२८६१।।

आचार्याच्च विसर्जितः प्रभुनवद्वीपं तथाप्तो यति,-
र्जातेऽभूत्सुहृदो यथा कलकलो द्वीपप्रवेशेऽस्य तु।
आगत्याऽस्य च सर्वतः सुमनसश्चागत्य भक्ता यतेः
पार्श्वे सम्मिलिता (निमायिविषयाऽऽकाङ्क्षाऽत्र सर्वात्मनि)।।२८६२।।

सर्वादौ कृतवानयं प्रभुगृहं गत्वा नितायी शची-
मातुर्वन्दनमत्र पद्मपदयोः, कालस्य पश्चाद् बहोः।
स्वं लब्ध्वाऽऽत्मजवन्नितायिनमहो! सीमा सुखस्यास्ति नो
मातु-(र्मातृपदं स्त्रियः प्रसवतो, धन्या विनाऽप्यत्र तम्)।।२८६३।।

क्रोडे सा शिशुवन्नितायिनमहो! कृत्वा त्वियन्तं वरं
हस्तं घूर्णयती तथाऽस्य वदने ब्रूते 'नितायिन्! सुत!।

व्यस्मार्षीत्स्मृतवान् पुनर्नहि तु मां पुत्रो निमायी, परं
व्यस्मार्षीः स्मरणं तथा त्वमपि मे, पुत्राऽद्य पश्चादभूत्-॥२८६४॥

एतावद्दिवसस्य मे तु परमानन्दोऽधुना त्वन्मुखं
दृष्ट्वा(कारणमस्तु तादृशमुदः किञ्चित्तु शुद्धात्मनाम्)।
संन्यासस्य समस्तदुःखमधुनाऽहं विश्वरूपस्य च
व्यस्मार्षञ्च निमायिनो-(ऽमितहृदि स्थानेऽखिलं लीयते)॥२८६५॥

मे पुत्र! प्रिय! सन्निधौ मम तथा संकीर्तनस्याधुना
स्थित्वाऽत्रैव कुरु प्रचारमपि तद्भक्तैः समं कीर्तनम्।
दृष्ट्वा स्यां सुखिनी सदा निजदृशोः स्थाने पुरस्त्वामहं'
(लब्ध्वा रूपमभीप्सितं स्वनयनद्वारा प्रसादो हृदः)॥२८६६॥

आज्ञां स्वीकृतवान्मुदा सहृदयो मातुर्नितायी, नव-
द्वीपेऽसौ च हिरण्यपण्डितगृहेऽवात्सीच्च, नित्यप्रभोः।
द्वीपे संवसनाद् गतः शिथिलतां संकीर्तनस्य ध्वनि-
र्भूयो व्योम्नि जुगुञ्ज दीर्घमवनेः शब्दायमानस्तथा॥२८६७॥

संकीर्तने प्रभुपुरश्च यथाहि लोका
मत्ता बभूवुरखिलास्तु, तथैव भूयः।
उद्दण्डनृत्यमिह सम्प्रति कुर्वते तेऽ-
संज्ञा (निमायिमनसामपरैव संज्ञा)॥२८६८॥

बहु प्रभावो ववृधेऽधिकं श्री-
नित्यस्य, जातं परिवर्तनं तु।
वृत्तावपीहाद्य निमायिबन्धो-
(र्जगत्स्वभावः परिवर्त्तनं तु)॥२८६९॥

वस्त्रं भूषणमेष सुन्दरमहो! नित्यो दधानोऽभव,-
न्नाना व्यञ्जनमागतं यतिगुरोर्वै भोजनेऽपि प्रभोः।
तन्निन्दाऽपि बभूव तस्य, विषये ख्यातिस्तथाऽस्याधिकं
जाता यत्र यथा, तथाहि लघु नो निन्दाऽपि तत्राऽभवत्॥२८७०॥

अस्त्येवैष च संसृतेस्तु नियमो, यावन्मुखं तावती
वार्ता क्रामति, किन्तु धीरपुरुषः कृत्वा न चिन्तां नृणाम्।

कार्यार्थी स्तुतिनिन्दयोः, प्रभवति स्थाने निजे व्यापृतः
कर्मण्येव (नहि क्षणोऽत्र कृतिनोऽसाध्वर्थचिन्ताकृते)।।२८७१।।

पश्चात्तु स्वयमेव निन्दकजनास्तिष्ठन्ति विक्लम्य ते
मौनं निन्दनतो, महानरकृतौ कौ लोकनिन्दादिशा।
विघ्नस्थानसहायतैव मिलते, चेत्स्यात्तथालोचना
निन्दा नात्र महात्मनां सुमनसामुच्चैश्च तत्कर्मणाम्।।२८७२।।

न प्रोत्साहनमेव तर्हि सरणेऽग्रे सन्निमाय्यात्मना-
मेतेषान्तु मिलेत, तान् रचयितुं निन्दौषधिस्तून्नतान्।
एकोऽस्तीह तथाविशेषविधिको, यो ज्ञानपूर्वं परं
लोके कर्म करोति निन्दितमहो!- (लोको यथा वासना)।।२८७३।।

एवं स्यान्नहि तादृशस्तु पुरुषो दम्भी कदाप्युन्नतो,
यत्नं त्वीदृशमेव तत्सुमनसा स्थेयं नृणा कुर्वता।
लोके निन्दितकर्मणो ननु पृथग् यावद्भवेत्संभवं
(स्थाने कार्यमकार्यमस्ति किमिह, ब्रूते प्रशस्तं मनः)।।२८७४।।

सत्यश्रेष्ठपथस्य चानुसरणं चेत्कुर्वतो निन्दनं
कुर्यात्कौ स्वत एव चात्र जनता, लोकस्वभावो यथा।
तच्चिन्तामपि न क्रियात्सहृदयः सौहार्दभावोन्नतः
(सौहार्दप्रथनं निमायिमनसामेवात्र लक्ष्यं परम्)।।२८७५।।

अस्यां गुरुमन्त्रोऽसावेव महान् कौ।
आप्तौ गुरुतायाः (सिद्धिर्गुरुताऽऽप्तिः)।।२८७६।।



# श्रीमन्नित्यानन्दस्य गृहस्थाश्रमे प्रवेशः।

१४२. गणना दोषगुणानां तावत्।
हेयं दोषत्वं ग्रहणीया गुणता भवरतमनसाम्
देहगेहममताबद्धानां यावदत्र मनुजानाम्।
अनन्यमनसां भगवति दयिते समहृदयानां सुहृदाम्
बुद्धेः परमुपयातानामिह तदुभयरहितावस्था।।

१४२. केवलमीश्वर एव समर्थः।
सामर्थ्यार्जनहेतोरखिला चेष्टा बुद्धिमतां भुवि
तत्सामर्थ्यं परमिह भिन्नं लोकालोकस्थितितः।
निखिललोककल्याणहेतवे रुद्रोऽब्धिजविषमपिबत्
नश्येत्तत्समचारी मौढ्यादसमर्थो देहात्मा।।

क्वापि क्वापि नृणां तथाहि महतां कौ जीवने प्राप्यते
धर्मस्यात्र विपर्ययो,ऽस्ति ननु किं तत्कारणं वस्तुतः।
सत्यं सत्यममुष्य नोत्तरमहोऽद्धा दीयते, किन्तु कौ
शास्त्राज्ञा मिलतीह- 'तादृशमदःकर्माऽनुकार्यं नहि'।।२८७७।।

शिष्यान्निर्मलमानसाः स्फुटं स्वान् वेदे सुहृदोऽनुयायिनः।
लेपुर्ब्रह्मगता महर्षयः—(सद्,यस्य प्रतिबिम्बितं तलम्)।।२८७८।।

१४४. चरिते सर्वेषां हेयांशः।
सदसन्मिश्रणजातो निखिलो दृश्यात्मकसंसारः
ग्राह्यत्वं हेयत्वं तस्मादुभयं निखिले वस्तुनि।
आचार्यो दिशते दीक्षान्तेऽधीतसकलशास्त्राणाम्
"अव्यवहितमिह सर्वं दृष्टं नश्चारितं युष्माभिः।
शोभनमस्ति तथाऽशोभनमपि तस्मिन्नुभयं नूनम्
तत्रोपास्यं साधु केवलं, शिष्या ! नो तद्भिन्नम्"।।

कार्या किन्तु न चेश्वरस्य महतां निन्दापि सद्भिर्नृणां
कार्याणां, तु महर्षिभिर्निगदितं—निन्दा तथाऽऽलोचना।
कार्याणां महतां नृणामघ,महो! कार्याणि निन्दति येऽ-
बोधाः सन्महतां, प्रमादमवनौ कुर्वन्ति ते बन्धवः।।२८७९।।

अन्यच्चात्र, सदैव निन्दकजनान् (तेऽपि प्रमाद्यन्ति) ये
गर्हन्ते, प्रकृतिस्तु निन्दकनृणामस्त्येव कौ निन्दनम्।
स्वे शीर्षे दधसे परं कथमघं तेषां पुनर्निन्दया,
सत्यं, कावुपकृत्तु निन्दकनरो (निन्दा मलक्षालनी) ।।२८८०।।

संसारे यदि कर्मणोऽलमसतो रुद्धं भवेन्निन्दनं,
तज्जायेत तु रौरवञ्च नरकं सम्पूर्णमेतज्जगत्।
निन्दातः पुरुषा न बिभ्यति तथाऽमुष्यां महान्तस्तु का,-
वेतानाविलयन्ति किञ्चिदपि नाऽद्धा लोकनिन्दाः पुनः।।२८८१।।

कौ नीचप्रकृतिर्जनोऽत्र कुरुतेऽद्धा लोकनिन्दाभयाद्
गर्ह्यं कर्म निगूह्य, ना भवति नाऽद्धा सर्वसाधारणः।
पापे कर्मणि लोकनिन्दनभयादेव प्रवृत्तस्तथा
(सृष्टिः संहृतिरस्य तु प्रकृतितो रक्षा समाजात्मना)।।२८८२।।

तस्मादत्र सुरक्षितस्थितिकृते भूमौ समाजात्मनां
वृक्षाणां लगिताऽस्ति कण्टकसमाऽद्धा लोकनिन्दाऽन्तिके।
यस्मात्पापपशुर्द्रुमन्तु सहसा कर्तुं न शक्नोति तं
नष्टं साधुसमाज-(मत्र निखिलं युक्तं हि सद्व्याख्यया)।।२८८३।।

तत्कुर्यात्परमार्थमार्गपथिको निन्दां न साध्वात्मना-
मेवास्मिन्महतां नृणां व्यवहृतेः सन्निन्दितायाः,स्तथा।
तेषां निन्दनशीलिनस्तु भुवने नो निन्दकस्यैव च,
श्रेयोऽस्ति स्तुतिनिन्दनात्तु परमं पूर्णं तटस्थस्थितौ।।२८८४।।

चेत्किञ्चित्कथनं विनैव वसनं नो संभवं स्यात्तदा
ह्यन्येषां करणीयमेव कथनं लोके गुणानां सदा।
लोकहृस्वगुणानपीह भुवने संवर्ध्य वाच्यं, तथा
कार्यं तन्निजजीवने परिणतं, यामोऽधुनाऽस्त्वग्रतः।।२८८५।।

नित्यानन्दयतेस्तथाव्यवहृतेर्जाताऽधिकाऽऽलोचना,
निन्दन्ती जनता बभूव तमथा,ऽऽसीदेव गौरावनौ।
निन्दाया विषय,स्तथाऽऽचरणकं कौ लोकदृष्टौ यते-
रेकस्याध्वनि बुध्यते त्वनुचितं बाल्यावधूतात्मनः।।२८८६।।

संन्यासं स यदा विहाय यतिको नित्यो गृहस्थोऽभव-
न्निन्दा तस्य तदा तु चाधिकमपि द्वीपे भवन्ती ववौ।
मन्ये भागवतं विनिर्मितमहो ! चैतन्यनामान्वितं
तस्यैवाप्रियनिन्दनस्य कविना शिष्यात्मना खण्डने।।२८८७।।

तस्मिन् भागवते तथा न घटितं चैतन्यनामश्रियि
श्रीचैतन्यनिमायिगौरचरितप्राधान्यमस्ति स्वतः।
तस्मिंस्तु प्रथिता विशेषदिशया नित्यप्रभोरेव तद्-
बाल्यत्यागियतेर्गुणाः (प्रतिभया भूः सत्कृतज्ञायते) ।।२८८८।।

नित्यानन्दयतौ तथा कुमनसः श्रद्धाविहीना जना-
स्त्वाक्रुष्टाश्च यथेष्टमत्र, विषयं चेमं त्यजेदेव चेत्।
तच्चैतन्यविशिष्टभागवतकृ,त्स्थाने तथापि क्षितौ
नित्यानन्दमहात्मकीर्तिरधुना न्यूनाऽभविष्यन्न तु।।२८८६।।

आसीत्किन्तु महाशयो रचयिता कर्तुं प्रमाता तथा
संबन्धाद्द् विवशो (मनःस्थितिमनु स्थाने प्रवृत्तिः स्वतः)।
तच्चैतन्यविशिष्टभागवतकृत्स्वामी स नित्यप्रभोः
श्रीवृन्दावनदासजी सहृदयोऽद्धा मन्त्रशिष्योऽभवत्।।२८६०।।

नित्यानन्दयतिः कृतेऽस्य सुहृदः सर्वस्वमासी,त्पुन-
र्नित्यानन्दतथाशिषैव भुवने जन्माऽभवत्स्वामिनः।
श्रीवृन्दावनदाससाधुमनसो, नित्यप्रभोरेव चो-
वासाऽसौ निकटे सदा (सहृदयः सौहार्दमालम्बते) ।।२८६१।।

सर्वस्वं यमहो ! वयं ननु निजं मन्यामहे, निन्दनं
कुर्यात्तस्य यथेष्टमत्र भुवने लोकश्च साधारणः।
एतत्तु प्रतिभान्वितोऽत्र पुरुषः शक्नोति सोढुं तथा
बह्वल्पः (प्रतिभा तनोति सहते भावं निजोपेक्षणम्) ।।२८६२।।

तदस्य सुन्दरेण तत्कवित्वकर्मणा गुरौ।
अनन्यभक्तिरेव तु प्रकाशतेऽस्य वस्तुतः।।२८६३।।

यावन्महाप्रभुमगाद्यतिनित्यनिन्दा,
नित्यावधूतपरिवादमहो ! यथेष्टम्।

एकः प्रभोः सहपठी कृतवां,स्तु विद्वान्
विश्वासमेव न महाप्रभुरत्र चक्रे।।२८६४।।

भक्ताः पूर्ववदेव गौडविषयाच्चापि द्वितीयक्रमे
संयाताः प्रभुदर्शनाय च रथश्रीयुक्तयात्राक्षणे।
कालेऽस्मिन्नपि नित्यधूतविषये वार्ता बहु प्राचलद्
(वार्ता संवदतामपीह सुहृदां कौ जायते दुर्घटे) ।।२८६५।।

श्रीवासपण्डितवचश्चलनक्षणे 'सोऽ-
बोधस्थितौ तु गृहतो यतिमार्गमाप्तः।
निर्गत्य नित्यसुजनः, स निजेच्छया नो
सन्यासमत्र जगृहे' (ग्रहणं, यदीच्छा) ।।२८६६।।

'कामं सोऽत्र निजेच्छयाऽथवा संन्यासं जगृहे परेच्छया।
कश्चित्तस्य कृते विधिर्निषेधश्च स्तो न' महाप्रभोर्वचः।।२८६७।।

नित्यानन्दयतेरभूदपि मनाक् क्षोभो निशम्याऽऽनना-
ल्लोकानां बहु नित्यमेव सुहृदो वार्तास्तु नानाविधाः।
ऊचेऽसौ स्वमनोव्यथामनुपमाऽऽधारां शचीं मातरं
(माता वेत्ति सुतव्यथाममलहृत्सम्पूर्णतः केवलम्)।।२८६८।।

आज्ञामस्य ददौ निमायिजननी माताऽत्र 'नीलाचलं
गत्वा त्वन्तु निमायिना मिल, यथा जल्पेत्स कुर्यास्तथा'।
मातुस्तद् दश पञ्च सोऽनुमतितो नित्योऽन्तरङ्गान्निजान्
सङ्गे भक्तजनान् विधाय सुमनाः प्राप्तश्च नीलाचलम्।।२८६९।।

याने श्रीप्रभुसम्मुखेऽस्य महती लज्जा प्रतीताऽभवत्,
तत्सङ्कोचवशादसौ सहृदयः स्थाने प्रभोर्नो ययौ।
उद्याने बहिरेव तत्र स जहत्त्वेकत्र चासीत्स्थितः
पश्चात्तापदृगश्रु (सौहृदमनाः सङ्कोचराशिः पुमान्)।।२९००।।

लब्ध्वैव तु समाचारं प्रभुरितः।
धावंश्च समये तत्रैव विषये।।२९०१।।

स नित्यशंसनं प्रभुर्दिशंस्तथा प्रदक्षिणाम्।
करोति तस्य चा-(ऽऽत्मनः प्रदक्षिणा निमायिनः)।।२९०२।।

कुर्वन्तं निजकप्रदक्षिणमहो ! दृष्ट्वा निमायिप्रभुं
श्रीनित्यो द्रुतमुत्थितः प्रणमने किन्त्वस्य तत्रैव सः।
प्रेमावेशवशात्पपात सुमना भूत्वा क्षितौ मूर्च्छितः
(स्पष्टं प्रेम पुरो विभाव्य भविता कौ कः प्रमाता स्थिरः)।।२६०३।।

धूलिं तत्पदयोर्निमायिहृदयस्तन्मूर्च्छितावस्थिता-
वेव स्वे शिरसि प्रभुश्च कृतवान्, पश्चान्निमायिप्रभोः।
नित्यानन्दपदाब्जधूलिमखिला भक्ताः स्वके चक्रिरे,
धृत्वा तत्प्रभुरासितोऽस्य चरणौ (स्थानं ह्युपास्यं सतः) ।।२६०४।।

बाह्यज्ञानमथोपलभ्य धरणेर्नित्यप्रभुश्चोत्थितः,
किञ्चित्स, स्म च वक्तुमेव लषते, प्रेम्णस्तु वक्तुं परम्।
आवेशे प्रभुरत्र किञ्चिदपि नो, क्रोडे पपात प्रभो-
स्तच्छीर्षं स्वयमेव तद्विलुठितं (स्थाने सदङ्गस्थितिः)।।२६०५।।

वारम्वारममुष्य शीर्षममना जघ्नौ च मन्दं तथा
मन्दं चालयति स्म तत्पुलकिताङ्गेषु स्वहस्तं प्रभुः।
लीनौ प्रेम्णि तथैवमेव सुहृदौ द्वौ भ्रातरौ प्रेमिणा-
वासीनौ च बहुक्षणं ह्यभवतां स्थाने च तत्रैव तौ।।२६०६।।

स्थाने स्वे प्रभुरेतं धृत्वा हस्तमथासौ।
निन्ये, सम्प्रति पुर्यामेवास्थाच्च स नित्यः।।२६०७।।

नीत्वोवास गदाधरः प्रभुपरोऽद्धा क्षेत्रसंन्यासकं
श्रीमद्द्रुद्रयमेश्वरस्य सुमनाः श्रीमन्दिरे निर्जने।
नित्यानन्दनिमायिपूज्यचरणस्तस्यैव पार्श्वेऽवसद्
(धृतोऽस्तु प्रभुरागिणाऽत्र विजने किञ्चित्तु कालं समम्) ।।२६०८।।

आनैषीत्सुमना गदाधरकृतेऽसौ गौडदेशात्प्रियं
नित्यश्चैकमनात्मतण्डुलमथ श्वेतं तथागन्धितम्।
स्वे सङ्गे ह्युपहर्तुमत्र च पटं रक्तं तथैकं बहू-
त्कृष्टं (स्नेहिजनः प्रियस्य निकटे सन्देशयुक्तोऽयते) ।।२६०९।।

चक्रे तत्र सुगन्धितं सहृदयः सिद्धञ्च तं तण्डुलं
सङ्गेनापि गदाधरो रचितवांश्चिञ्चादलव्यञ्जनम्।

'कालेऽस्मिन् प्रभुरत्र नास्ति' निखिलास्ते चिन्तयन्तोऽभवन्
(दुःखे वाऽस्तु न, किन्तु सौख्यसमये स्नेहात्प्रियः स्मर्यते) ।।२६१०।।

य'त्कार्योऽत्र निमन्त्रितः प्रभु'रहो ! जातं त्वियत्साहसं
नो कस्यापि, जना बभूवुरखिलाः संचिन्तयन्तस्त्वमी।
अस्मिन्नेव तथाक्षणे खट-खट-ध्वानं करोति स्म च
द्वारे कोऽपि, गदाधरेण तरसा द्वारं तथोन्मीलितम्।।२६०११।।

दृष्टं, श्रीलमहाप्रभुः स्वयमहो! तत्र स्थितोऽस्त्य,स्य तद्-
वात्सल्यं तु महाप्रभोः सुमनसो भक्तेषु शंसन्ति ते।
सर्वे मानस एव मानसतले, भोक्तुं प्रभुश्चासित-
श्चैतन्यः स्वयमेव शीघ्र-(ममना जानाति सर्वं मनः) ।।२६१२।।

सङ्गेनैव तदा प्रसादरसनाऽऽदेशोऽखिलस्याभव-
च्चासित्वा, सुमनोमहाप्रभुवचः सर्वैस्तथा पालितम्।
आसित्वा प्रभुणा समं सुमनसा सर्वे प्रसादं तदा
संलेभे (सहभोजनप्रियरसः कश्चित्प्रभावी पुमान्) ।।२६१३।।

गृह्णन्नेष तथा प्रसादमधुना ब्रूते 'त्वहा ! कीदृशं
सौभाग्यं मम, तण्डुलोऽर्च्यचरणश्रीपादनीतस्तथा।
सिद्धो मित्रगदाधरेण, च पुनः स्थाने प्रसादो महान्
गोपीनाथदयावतो भगवतः (सारः, क्रमादुत्तमः) ।।२६१४।।

कृष्णप्रेम हि लभ्यते सुमनसोऽत्रैवंप्रसादेन का-,
वेतत्तण्डुलवास एव रुचिरः श्रीभक्तिसंवर्धकः'।
एवं श्रीप्रभुकप्रसादरसनाल्लब्धः प्रमोदोऽपरः
सर्वेषा-(मखिलात्मसौख्यघटकः कश्चिन्निमायिप्रियः) ।।२६१५।।

भक्तानां नियमानुसारमभवत्कालस्तृतीयक्रमे
पुर्यामागमनस्य सम्प्रति रथश्रीयुक्तयात्रोत्सवे।
वारेऽस्मिन्निजगेहिनीरपि निजे सङ्गेऽत्र नीत्वाऽऽगता
भक्ता, यस्य निरूपणं तु भविताऽध्याये द्वितीयेऽग्रिमे।।२६१६।।

भक्तानां गमनक्षणे सहृदयश्चाहूय गौरो रहो।
नित्यानन्द,ममुं प्रभुः कथयति 'श्रीपाद! धूतप्रभो!।

वृन्दारण्यविहारिणो ननु भवाञ्छ्रीगोपकृष्णस्य तु
प्रेमात्मन् ! समुपासकोऽस्ति, भुवने किं ते निषेधो विधिः? ।।२६१७।।

जानीयुस्तु विधिं निषेधमथवा गोपालबालाश्च किं ?
ग्रामीणाश्च निराश्रया,स्तदधुना कार्यं तथैकं कुरु।
उद्वाहं निजकं करोतु, भुवने भूत्वा गृहस्थस्तथाऽऽ-
दर्शो, दर्शय लोकसम्मुखमथाऽऽदर्शं तथैकं वरम्।।२६१८।।

गार्हस्थ्येऽपि सता कथं नृणा संसारे भजनञ्च कीर्तनम्।
तावत्सत्परमार्थचिन्तनं सम्पूर्णं क्रियते निमायिना' ।।२६१९।।

ऊचे गद्गदकण्ठतोऽश्रु सुमना मुञ्चन्तितायी 'प्रभो!
संन्यासी तु भवानभूच्च युवतीं सन्तानहीनां तथा।
त्यक्त्वा विष्णुरमाप्रियां ननु गृहे, संन्यासितो मे पुन-
र्गार्हस्थ्यग्रहणोपदेशमवनौ पुर्यां करोति स्फुटम्।।२६२०।।

न त्वल्लीला। लोके ज्ञेया' ।।२६२१।।

'श्रीपादाऽद्य तथास्मि नात्र भुवने गार्हस्थ्यभोगक्षमो,
मेऽवस्थाभवदत्र वातुलसमः सम्पूर्णतः, कर्मणः।
व्यर्थं सम्प्रति मत्तु कस्यचिदपि स्थाने तथाऽऽशंसनं
(चेतःशुद्धिकृतेऽत्र कर्म कुरुते योगी त्वनासक्तितः) ।।२६२१।।

सम्पूर्णगौडावनिभारकार्यं
तवैव हे! चोपरि विद्यतेऽद्य।
तथा गृहस्थे भवतीह जाते
तु भावि पूर्णं भुवि कार्यमेतत्'।।२६२२।।

'आदेशस्य तु सम्मुखेऽत्र भवतोऽहं लोकनिन्दां तथा
मर्यादामपि चिन्तये न भुवने शास्त्रस्य धूतः प्रभो!।
कर्तारो मम निन्दनं त्वतिशयं लोका हि ''संन्यासितो
जातः सम्प्रति कौ गृही'' (हि विरलो लोकोऽत्र मर्माग्रही)।।२६२३।।

इदन्तु निन्दावचनं निमायिन्!
भवन्निदेशस्य पुरोऽवधूतः।
अत्यन्ततुच्छं परमस्मि मन्ये,
कर्ता यथाज्ञा भवतस्तथैव'।।२६२४।।

सर्वेषां मनसो महाप्रभुरसौ वेत्ति स्म गौरो वचः,
केन स्यादुचितन्तु कस्य भुवने कार्यस्य सम्पादनम्।
आसीज्ज्ञानममुष्य सौहृदहृदस्तस्यैव, कुत्रात्मनो
भक्ताञ्जल्पति चान्तरङ्गसुहृदः स्थाने विरक्तांस्तु सः –।।२६२५।।

१४५. नारीदर्शनमपि भुवि पापम्।
नारीनरसंयोगात्संसृतिरमितं प्रकृतौ प्रसरति
ममताऽहंतामूलमविद्यां केवलमिह संतनुते।
व्यवहारः परमात्मकौतुकं न च सत्यं परमार्थः
तत्सक्ताऽऽलोकनमपि गरलाशनतोऽसाधु सतामिह।।

चैतन्यः क्व स एव चाद्य दिशते स्थानेऽवधूतप्रभौ
नित्यानन्दयतौ गृहस्थभवनाऽऽदेशं निमायिप्रभुः।
नित्यानन्दसुहृन्महाप्रभुवचश्चक्रे स्वशीर्षेऽग्रजः
(सम्यङ्नर्तयिता यथाहि विरलोऽत्राऽद्धाऽपि संनर्तकः)।।२६२६।।

आगत्यैष पुनर्निवृत्य सुमनाः पुर्या नितायी तथा
तस्थौ पण्डितराघवस्य तु गृहे पानीकहाटीस्थले।
आसीत्पूर्वत एव नित्यसुहृदः प्रान्ते प्रभावोऽत्र चाऽ-
त्यन्तं (शुद्धसमाजहृत्परिचितः साधुर्न विस्मार्यते)।।२६२७।।

गौराङ्गापरविग्रहन्तु मनुते सर्वो जनोऽमुं, ततोऽ-
त्यन्तं वैभवतः प्रचारमधुना संकीर्तनस्याऽऽबभौ।
कुर्वन् भक्तजनान्निमायिहृदयान् सङ्गे स कृत्वात्मनो
(वागन्यत्र नियुज्यतेऽत्र मनुजैः, कैश्चित्तु संकीर्तने) ।।२६२८।।

अस्तीदं स्मरणं तु नः – सहृदयो नित्योऽवधूतः पुराऽ-
प्यासीत्पण्डितसूर्यदासवसतौ संकीर्तनाय स्थितः।
गत्वा तत्र तथाम्बिकाख्यनगरे तस्यैव गेहे स्थितोऽ-
भूद्भूयोऽधिकभक्तिमानपि तथाऽऽसीत्सूर्यदासोऽस्य च।।२६२९।।

चक्रे चादरसत्कृतिं ननु गृही सोऽस्याधिकं सङ्गिनां
श्रीनित्यस्य तथा कुटुम्बसहित,स्तस्यास्ति कन्याद्वयम्।
ते नाम्ना वसुधा सुशीलसुभगे कन्ये तथा जाह्नवी,
नित्यानन्दहृदाऽनयोः परिणयो जातो द्वयोः कन्ययोः।।२६३०।।

नित्यानन्दसुहृत्तथैवमधुना कृत्वा विवाहद्वयं
ग्रामेऽसौ खडदाख्यके भगवतीभागीरथीतीरगे।
आवासं कृतवांश्च, भक्तनिवहो मानं करोति स्म तन्-
नित्यस्याधिकमस्य (गेहिनिवहेऽद्धाऽल्पो निमायिप्रियः)।।२६३१।।

जन्माऽत्रैव तथा बभूव वसुधागर्भाच्च तेजस्विनोऽ-
त्यन्तं वैष्णवसम्प्रदायकृतिनः श्रीवीरचन्द्रस्य च।
नित्यानन्दनिमायिनः सति तिरोभावे स भिन्नं निजं
त्वेकं वैष्णवसम्प्रदायमकृत (स्वेन प्रगन्ता कृती)।।२६३२।।

नित्यानन्तरमस्य चान्यगृहिणी नित्यप्रभोर्जाह्नवी
देवी चापि तथाधिकं कृतवती भक्तिप्रचारं सती।
नित्यानन्ददिशा तथा गुरुकुलश्रीस्थापना चाभवत्,
क्वापि क्वापि न विद्यमानमधुना रूपे यदद्यावधिम्।।२६३३।।

आसीदेवमुपासकः सुमनसोऽनन्यो निमायिप्रभोः
श्रीनित्य,श्च जनापवादमपरं लोके सहित्वाऽपि सः।
तस्याज्ञामनुमत्य सौहृदवतश्चक्रे विवाहं यतिः
स्थित्वा स्त्रीतनयेषु लोकनिवहे संदर्शयामास च।।२६३४।।

गार्हस्थ्ये भजनं तथा भगवतो निर्लिप्तभावेन तु
स्थित्वैवं क्रियते, सदाऽभवदुदासीनस्तथैवावनौ।
गार्हस्थ्ये ननु सन्नपीह स यति,मर्गि प्रवृत्तावपि
क्षोण्यामाचरणं दिदेश करणं चाद्धा निवृत्तेः पथः।।२६३५।।

एतौ द्वाविह तु प्रवृत्तिरवनौ मार्गौ निवृत्ति,स्तथै-
को वाऽर्धस्तु निवृत्तिमार्गविषयाचारं विधातुं क्षमः।
कश्चिल्लक्ष जनेषु, तेन भगवानुक्त्वा चकार स्तुतिं
निष्कामस्य "विशिष्यतेऽवनितलेऽद्धा कर्मयोगः" पथः।।२६३६।।

मार्गश्च द्विविधः प्रवृत्तिपरकस्त्वेकः सकामोऽपरो
निष्कामो, मनुते तथोदरभरं मुख्यं तु यः केवलम्।
प्रायश्चेन्द्रियभोगवृन्दमवनौ भुञ्जन् गृहस्थो,ऽस्य नो
निष्कामोऽस्ति विसारिणो जगति नो धर्मः सकामोऽस्ति च।।२६३६।।

धर्मोऽयं ननु पाशवो,ऽवनितले ह्यन्योन्यसंसर्गतः
सन्तानं स्वत एव च प्रतिपलं याति प्रवृद्धिस्थितौ।
तच्चास्तीह सकामकर्म भुवि यद् वेदोक्तरीत्या क्रिया-
त्स्वर्गादिरभिलाषया (प्रथमतः प्रेयोऽस्ति मार्गो मतः) ।।२६३८।।

निष्कामोऽस्ति च कर्म तद्, भगवतो यत्प्रीतये केवलं
कर्तव्यञ्च निबुध्य कामपि विनाऽऽकाङ्क्षाञ्च सांसारिकीम्।
कुर्या,त्केवलमस्तु यस्य भगवत्प्रीतिस्तु लक्ष्यं परं
(भव्यं हीन्द्रियवर्गकर्म निखिलं सच्चेतनस्वादुकम्)।।२६३९।।

एतस्यां द्विविधं कुलं भवति कौ निष्कामकर्माऽऽचरत्,
तत्रैकं ननु वीर्यजन्यमथ चान्यच्छब्दजन्यं कुलम्।
यद्वंशक्रमतः समुद्भवति कौ तद्वीर्यजन्यं तथा
शाखा या चलतीह शिष्यसरेणस्तच्छब्दछजन्यं कुलम्।।२६४०।।

अद्यत्वेऽत्र 'महन्ती' तस्यैवास्ति कुलस्य।
मेदिन्यां विकृतं वाऽस्यां रूपं पतितं वा।।२६४१।।

जाता सृष्टिस्तद्द्वयोरेव नित्या-
नन्दद्वारा वंशयो,र्वैष्णवानाम्।
आचार्योऽभूदत्र गोस्वामिनाञ्च
स्थाने वंश्योऽप्यस्य साधुर्महात्मा।।२६४२।।

अद्यावधिमपि स्थानेऽस्य लसति।
शिष्यामलकुलं (कौ तिष्ठति कृती)।।२६४३।।



# श्रीप्रकाशानन्देन समं पत्रव्यवहारः

१४६. सन्तः सन्ति कियन्तो भुवने ?
परदुःखकातरप्रकृतिर्येषां सुकृतैः सहजा मिलिता
प्रेमरसान्तर्मधुराः सततं मनसि वचसि तनुवृत्तौ।
जनरञ्जनमिह लक्ष्यं केवलमुपकारैर्गुणकथनैः
घोरतमिस्राच्छन्नगगनभुवि तेऽमलशशिनः सन्तः।।

एकस्मिन् बुधसार्वभौमसुधिया स्तोत्रे निमाय्यात्मनो
निर्दिष्टानि महाप्रभोः सुमनसो नामानि चाष्टौ शतम्।
तेष्वेकं किल नाम मेऽस्त्यतिशयं सर्वप्रियेषु, प्रियं
दत्तब्रह्मचरस्य गौरकृतिनोऽद्धा''ऽदोषदर्शीति'' तत्।।२६४४।।

आसीत्सोऽवितथं महाप्रभुरहो! चादोषदर्शी, मुखा-
देवाऽन्यस्य न निन्दनं स्म कुरुते, नो चैतदेव, त्वसौ।
लोकानां सुमना न दोषनिवहेऽदाद् ध्यानमेव प्रभु-
(र्ध्यातव्यस्तृषितस्य सर्वकरणैश्चन्द्रश्चकोरस्य कौ)।।२६४५।।

सम्पूर्णामलजीवनेऽस्य कटुता कुत्रापि न प्राप्यते,
वृद्धानां पुरतः सदैव विनतः सोऽभूत्सुशीलस्तथा।
संन्यासी भुवि सन्नपीह कृतवान्नायं प्रभुः कर्हिचित्-
संन्यासित्वतथाभिमान-(ममना नाम्नश्च रूपात्पृथक्)।।२६४६।।

ज्येष्ठानां वयसाऽऽत्मनश्च सततं ज्ञानेन गौरो नृणां
श्रेष्ठानां पुरतोऽकृत व्यवहृतिं कौ नम्रतापूर्वकम्।
तेभ्यः स्म प्रयुनक्ति संततमसौ सम्मानसंबोधनं
(सम्यग् बोधनमुप्यतेऽत्र कृतिभिर्लोके सुसंबोधनात्)।।२६४७।।

स्नेहेनातिशयेन च स्वगुरुतां विस्मृत्य वार्तां तथा
गौराङ्गः कुरुते स्म सौहृदभराद् भक्तैः कनिष्ठै,र्यतः।
सर्वं लोपयति स्म तेषु च निजेऽद्धा भेदभावं तदा
(भेदं गुम्फति हीश्वरो, न सहते प्रेमावतारस्तु तम्) ।।२६४८।।

एतैरेव तु हेतुभिश्च निखिलैः संलाडयाञ्चक्रिरे
प्राणेभ्योऽप्यधिकं ह्यमुं, ननु सदाऽसीमानुकम्पाभरात्।

एतस्याऽऽनमितं निजं बुबुधिरे भक्ता निमायिप्रिया
(भारः कोमलगन्धपुष्पमनसः सद्भिः सदाऽऽकाङ्क्षितः)।।२६४६।।

यत्र प्रेम चकास्ति चातिशयितं, तत्रैव वै जायते
व्यक्तं श्रीभगवां,स्तथा भगवतोऽद्धा किञ्चिदेकं नहि।
रूपं निश्चितमस्ति, नाम नियतं नो किञ्चिदेकं पुन-
(र्व्यक्तं दृश्यमिदं तथाहि घटतेऽद्धा नामरूपात्मकम्)।।२६५०।।

तस्मिन् सत्यपि सर्वथा भगवति द्राङ् नामरूपोत्तरेऽ-
संख्यं नाम च रूपमस्त्यगणितं तस्याखिलस्यात्मनः।
यद्यस्य प्रियमस्तु नाममथ वा रूपं, प्रभुर्जायते
तेनैव प्रकटं (जनार्दनहरिर्भावाग्रही निश्चितः)।।२६५१।।

अस्ति प्रेममयस्तथाहि भगवान् भावात्मको, यत्र नु-
र्विश्वासोऽस्तु तु यत्र चापि सुदृढं, रूपं तदेव प्रभोः।
सत्यं तस्य कृते, तदैव तुलसीदासो बभाण स्फुटं
गोस्वामी (निखिलो वशे ननु गवां स्वामी निमायिप्रियः)।।२६५२।।

१४७. भावक्रीडनमखिलं विश्वम्।

भवकारणमिह भावः प्रोक्तः शास्त्रे सद्भिः कृतिभिः
भावेनैव व्यवहारो भुवि सततं प्रचलति निखिलः।
द्रव्यक्रिययोर्भावमहत्ता ततोऽधिका संसारे
अतो भावना विशदं कार्या यत्प्रियरामात्माप्तिः।।

प्रेमी यत्र निजप्रियस्य सुहृदोऽसीमानुकम्पाभरा-
दाक्रान्तः, स्वत एव तर्हि भवति स्वेच्छाऽस्य, कुर्यामहम्।
अत्राजीवनकं निजप्रियगुणाख्यानं, विधातुं तथा
स्वेच्छातो भुवि जायते स विवशो (वैवश्यमप्यर्ज्यते)।।२६५३।।

तच्छंशाकरणं विना स भुवने न स्थातुमेवाऽयते,
त्वेका प्रेम्णि विशेषता सुमनसामेषैव शुद्धात्मनाम्।
स्वानन्दं निखिले च वाञ्छति जने प्रेमी विभक्तुं तथा
(तृप्ताऽतृप्तदशाऽऽमनोः परिचयस्त्यागात्तथा संग्रहात्)।।२६५४।।

एकाकी स्वयमेव नो स पुरुषः स्वार्थी यथा चेष्टते
कौ तृप्तो भवितुं तदीयमधुतामाधुर्यसत्स्वादतः।

अन्येषामपि कौ तदद्भुतरसस्यास्वादनार्थं तथा
व्यग्रः सोऽध्वनि जायते-(ऽपरतृषा सत्साधुभिः शाम्यते)।।२६५५।।

तस्मिन्नेव स भूत्वा व्यग्रत्वे विवशोऽद्धा।
स्वोपास्यस्य गुणानां कुर्वंस्तिष्ठति गानम्।।२६५६।।

प्रेम्णा ते निखिला निमायिसुहृदो भक्ताश्च गौडावनेः
संतृप्ताः किल तावदत्र, यदमी रोद्धुं निजां मत्तताम्।
शक्ता नो, दिवसेषु तेषु भगवच्छ्रीकृष्णराधात्मनोऽ-
भूदेव प्रियनामकीर्तन-(महो! गौरस्य कृष्णः प्रियः)।।२६५७।।

तावत्कालमभून्नहि प्रचलितं श्रीगौरसंकीर्तनं,
तावद्भागवती प्रभौ सुमनसामासीत्परं भावना।
अद्वैतः सुहृदां बभूव परमोऽद्धा शास्त्रवेत्ता गुरुः
सर्वेषामलमग्रणी-(र्नहि भवेद् द्वैतस्थितिर्नायकः)।।२६५८।।

स एव प्रथमं ततः सहृदयोऽद्धा श्रीगणेशं गुरुः
श्रीमद्गौरसुकीर्तनस्य कृतवानेवात्र नीलाचले।
तावत्संरचितं न गौरसुमनःसंबद्धमासीत्पदं,
सोऽद्वैतः स्वयमेव तद्रचितवान्निम्नोक्तमेतत्पदम्-।।२६५६।।

*"श्रीचैतन्य ! नारायण! करुणासागर !*
*दुःखितेर बन्धु प्रभु मोर दयाकर"।।*

१४८. "करुणावरुणालय ! नारायण ! गौराङ्गाकृतिसुन्दर!
केवलहरिसकीर्तनमाध्यमसज्जीवनसंदेशक !।
श्रीकृष्णचैतन्य ! भववनदुःखितजनबन्धुरपथदर्शक !
कलिकवलितसद्भावकुमुदकुलगौरशशिन्! मयि दयताम्"।।

कृत्वाऽमुष्य पदस्य सोऽथ रचनां तालस्वरेणाखिलै-
र्भक्तैर्गापयति स्म तच्च गुरुकोऽद्वैतो,ऽखिला विह्वलाः।
भक्ताः प्रेम्णि पदस्य चास्य सुहृदः संकीर्तनं चक्रिरे
(प्रेयोवस्तुनि मत्तताऽस्ति जगतां, श्रेयस्यलं कस्यचित्)।।२६६०।।

श्रुत्वोल्लासमयं महाप्रभुरपि स्थाने तथाप्तः क्षणा-
त्त्रानन्दमयं पुनः सुमधुरं संकीर्तनस्य ध्वनिम्।

अश्रौषीन्निजनामकीर्तनमसौ गौरो यदा तर्हि तु
क्षिप्रं स प्रतिनिर्गतः (सहृदयस्थायिप्रभावो रसः)।।२६६१।।

क्रोधं प्रेमयुतं मनाक्प्रकटयन् पश्चान्निमायिप्रभुः
श्रीवासं त्विह पण्डितं कथयते'ऽनर्थं भवन्तोऽत्र किम्?।
कुर्वन्तीद,महो ! स एव तु भवे श्रीः कीर्तनीयो हरि-
(र्जिह्वाश्रोत्रहृदामघं हरित यो, धार्यः स एवाऽवनौ)।।२६६२।।

विस्मृत्याद्य तदीयकीर्तनमहो ! स्थाने भवन्तः पुनः
पुर्यामाचरणं तथा विदधते, लोके यतः स्यान्मम।
चैतन्यस्य निमायिनस्त्वपयशो, लोके परस्मिंस्तथा
पापस्यास्मि दधीय भाग-(मवनी पाथेयदात्री नृणाम्)।।२६६३।।

अस्मिन्नेव तथाक्षणे कतिपये गौडीयभक्ता जग-
न्नाथजीश्रीप्रियदर्शनात्प्रभुममुं स्माऽऽयान्ति संकीर्तनम्।
कुर्वन्तः प्रियमीक्षितुं "जय हरे ! चैतन्य ! कृष्णव्रतिन्!
गौरात्मन् ! सचल! प्रभो ! प्रियजगन्नाथाश्रयालम्बन ! ।।२६६४।।

हे द्वीपोद्भव-गौरकृष्ण ! जय हे संन्यासिवेष ! प्रभो !"
कुर्वन्तः प्रभुसम्मुखं जय-जय-ध्वानं तथेत्यादिकम्।
आयान्तश्च तथोच्चकैः, कथयते वासस्तदा 'हे प्रभो !
दाताऽऽज्ञां तु यथा तथैव सुमनःप्रेमन् ! करिष्यामहे।।२६६५।।

संसारस्य मुखं परन्तु भुवने शक्ताः पिधातुं वयं ?,
पुर्यां शिक्षितवांश्च कः परममून्, ब्रूतां भवानेव तु'।
तस्थौ मौनमतः प्रभुर्ननु मनाग् भूत्वा यथा लज्जितः,
सोऽदादुत्तरमस्य किञ्चिदपि नो (ह्यन्ते विरामो गिराम्) ।।२६६६।।

उत्साहोऽत्र यथा यथाहि ववृधे पश्चान्निमाय्यात्मनां
लोकानाञ्च तथा तथा भगवतः श्रीनामभिः संयुतम्।
श्रीचैतन्यनितायिगौरसुमनोनामाऽपि, तत्कीर्तनं
पश्चादस्य नितायिगौरसुहृदस्त्वेव प्रधानं ह्यभूत्।।२६६७।।

लोकानामधिकांशभक्तसुहृदामासीत्प्रति श्रीप्रभुं
भावः सत्यमथेश्वरत्वविषयो,ऽसौ सावधानस्त्वभूत्।

तस्मिन् सत्यपि, बोधते स्म तु निजं दासानुदासं, तथा
स्वीचक्रे भगवत्त्वमत्र न पुनः स्वं कस्यचित्कर्हिचित्।।२६६८।।

आसन् भक्तजना निमायिसुहृदो नानास्वाभावा,स्तथा
भावादेव महाप्रभुं तु बहवोऽमुं लाडयाञ्चक्रिरे।
वात्सल्या,त्पितृभावतोऽर्चति तथा संमन्यते सर्वदा
तानेषोऽपि (निमायिनां हि परमादर्शो निमायिस्थितिः)।।२६६९।।

अस्माकं ननु वर्तते परिचितो दामोदरः पण्डितो,
मातुः सेवनहेतवे गृहनवद्वीपे सुतस्तं प्रभुः।
व्यस्राक्षीन्मिलनार्थमेष सुहृदा प्राप्तो यदाह्येकदा
पुर्यां तु प्रभुणा, तदा सहृदयोऽसौ काममेव प्रभुः।।२६७०।।

वार्तास्वेव सुतः स्वमातृकुशलक्षेमं च पृच्छन् क्रमाद्-
ब्रूते 'पण्डितजी ! करोति जननी श्रीकृष्णभक्तिं तु न ?'।
पर्याप्तं पुनरेतदेव, सुहृदो ह्यावश्यकत्वाधिकं
क्रोधः सम्प्रति पण्डितस्य ववृधे दामोदरस्य क्षणात्।।२६७१।।

श्रद्धा मातृपदोर्दधौ स महतीञ्च स्पष्टवक्ताऽप्यभूत्-
ताव,त्कर्म महाप्रभोर्यदपि चाशास्त्रीयमस्याथवा।
संसारेऽनुचितं प्रतीतमभव,त्तद् भाषते तत्क्षणं
सर्वेषां पुर एव- (सौहृदभराद् ब्रूते हितात्मा कटु)।।२६७२।।

पृष्टः स प्रभुणा तथा कथयते रोषेण सार्धं 'प्रभो !
संबन्धे गुरुविश्वरूपजननीभक्तेर्भवान् पृच्छति ?।
वार्ता सत्यमिदन्तु तर्हि, भगवद्भक्तिर्लघुर्वाऽधिका
यत्किञ्चित्त्वयि दृश्यते,ऽखिलमिदं मातुः कृपायाः फलम्'।।।।२६७३।।

श्रुत्वैतादृशमुत्तरं प्रभुरयं दामोदरस्याभव-
न्मग्नः प्रेम्णि तथाहि मातुरधुनाऽद्धा प्रेममय्याः सुतः।
स्नेहस्य स्मरणं विधाय सुमना रुद्धस्वराद् भाषते
'सत्यं पण्डितजी ! तथाहि भवता तूक्तं वचः सर्वथा।।२६७४।।

मातुर्भक्तिमहोऽत्र कोऽपि भविता किं बोद्धुमेव क्षमो,
याथार्थ्ये भवतैव विश्वजननी माताऽत्र बुद्धा परम्।

यत्किञ्चित्त्वपि सत्यमस्ति हृदये श्रीकृष्णभक्तिर्मम,
स्थाने सम्प्रति मातुरेव करुणामूर्तेः प्रसादोऽस्ति सा।।२६७५।।

एवं प्रेममयीमपीह जननीं हाऽहं विहायाऽऽगतो'
जल्पन्नेवमयं रुरोद च पटेनाच्छाद्य गौरो मुखम्।
तस्यैषा पुरुषस्य चात्र महतोऽवस्था तु, साक्षाज्जग-
न्नाथं भक्तजनो बुबोध सचलं यं सर्वथा वस्तुतः।।२६७६।।

मत्वा रुक्षमिदं स किञ्चिदपि नो दामोदरस्योत्तरं
दुष्टं, प्रत्युत शंसनन्तु कृतवांस्तस्य प्रसन्नात्मना।
तर्ह्येवाद्य तु गौरकृष्णचरणावाश्रित्य नाना नराः
प्रानन्दानुभवं नरत्वमपि ते कुर्वन्ति धन्यं निजम्।।२६७७।।

ख्यातिस्तस्य महाप्रभोः सुमनसोऽद्धा दूरदूरे गता,
सामान्येषु जनेषु नैव, तु परं विद्वत्समूहेष्वपि।
अस्यालौकिकसत्प्रभावमहिमा चर्चामितोऽत्राधिकं
(सौगन्ध्यं कुरुते निजोन्मुखमहो ! सर्वानलं संज्ञिनः)।।२६७८।।

भट्टाचार्यकसार्वभौमसुधियः पाण्डित्यमध्यापनेऽ-
द्धा शैली सुगमा तथाहि सरला मेधाप्रभावस्तथा।
यत्ख्यातिः प्रसृता बभूव परितः, काशीसुधीवृन्दके
स्थाने सम्प्रति गौरवेण सहितं तन्नाम वै गृह्यते।।२६७९।।

आसीदेकयतिस्तदा शिवपुरीवाराणसीगः प्रका-
शानन्दाख्यसरस्वती वरमतिर्दण्डी च संन्यासिकः।
शास्त्रस्य प्रथितस्तथाहि परमो विद्वान् प्रकाण्डः सुधी-
र्वेदान्तस्य (समस्तशास्त्ररसदो वेदस्तदन्ते शिवः)।।२६८०।।

पाण्डित्येन विलक्षणप्रतिभयाऽऽसीत्सार्वभौमस्य स
ह्युग्रेणाऽऽस्य च गेहिनः परिचित,स्तेन श्रुतं यद्यदा।
'पुर्यामेकनवायुरस्ति युवकः संराजमानोऽधुना
संन्यासी, ननु सार्वभौमसदृशो विद्वांस्तथा बुद्धिमान्।।२६८१।।

मत्वा तुच्छमहो! तदीयपदयोर्वेदान्तबोधं निजं
भक्तिं संविदधाति, बोधति च तं साक्षात्तथाहीश्वरम्।
तस्यात्यन्तमतः कुतूहलमभूत्संन्यासिवेदान्तिनो
(वेदान्ते विदितेऽपि कोऽपि भजते, केन त्वकर्मा भवेत्?)।।२६८२।।

आसीत्तस्य तु तावदत्र भुवने ह्यद्वैतवेदान्तके
निष्ठा, यद्यपि काममेष सरसश्चासीत्तथा प्रेमिहृत्।
किन्त्वद्यावधि तस्य सा सरसता लीनैव संन्यासिनो
ह्यासीत् (तिष्ठति वस्तु लीनमवनौ सर्वं शुभं वाऽशुभम्)।।२६८३।।

आघातो लगितो न कस्यचित्तस्यां कौ महतो हि वस्तुनः।
यत्स्तुत्वोपरि साऽजनिष्यत (स्थाने विस्फुटिता निमायिनः)।।२६८४।।

एकं स कौतुकवशाच्च विलिख्य पद्यं
पार्श्वे निमायिसुहृदो विससर्ज विद्वान्।
आगच्छतः प्रति पुरीं नियतं कराभ्यां
कस्यापि गौडधरणीजनितस्य साधोः।।२६८५।।

आसीत्पद्यम्। तच्चैतद्वै - ।।२६८६।।

*''यत्राऽऽस्ते मणिकर्णिका मलहरी स्वर्दीर्घिका दीर्घिका*
*रत्नं तारकमोक्षदं मृततनौ शम्भुः स्वयं यच्छति।*
*एतत्त्वद्भुतमेव यत् सुरपुरान्निर्वाणमार्गस्थितान्*
*मूढोऽन्यत्र मरीचिकासु पशुवत् प्रत्याशया धावति''।।*

१४६. मुक्तिः शिवकाशीसंवसनात्।
संसृतिरेषा दुःखमन्दिरं तन्नाशाखिलचेष्टा
ज्ञानाज्ञानाज्जन्तूनामिह सततं प्रचलति सृष्टौ।
दुःखसमूलविनाशो ज्ञानात्, तच्छिवसन्निधिवासात्
काशीमरणान्मुक्तिः प्रथिता, मूढो भ्राम्यति भुवने।।

ज्ञानं प्रधानं ननु चात्र पद्ये
तेनैव मोक्षः पुरुषार्थसारः।
तत्प्राप्तिहेतोः कृतवान्मनीषी
सङ्केत-(मर्थो विदुषां हि गूढः) ।।२६८७।।

तत्पद्यं नरपूज्यपादभगवत्संन्यासिवर्यप्रका-
शानन्दस्य तथा यथासमयमाश्चागत्य नीलाचलम्।
पत्रं ह्यर्पितवान्महाप्रभुकरे गौडीयभक्तोऽथ स
(स्थाने सत्पुरुषा भवन्ति भुवने स्थाने हि तत्त्वार्थिनः)।।२६८८।।

लब्ध्वा पत्रमथ प्रभुः, प्रमुदितः श्रुत्वा च नाम प्रका-
शानन्दस्य तथाधिकं, स्वयमहो ! तून्मोचयामास सः।
पत्रं तन्महताऽऽदरेण सहितं चोन्मुच्य गौरोऽपठत्,
तद्भावं बुबुधे स पद्यपठनादेव प्रभुः पण्डितः।।२६८६।।

मन्दं मन्दमथ स्मयंश्च सुमनाः श्रीसार्वभौमादिकं
पश्यन्नस्ति, ततः स्वरूपसहितः सर्वस्य दामोदरः।
जिज्ञासाशमनाय गौरहृदयः पत्रं पठित्वाऽखिलान्
भक्ताञ्छ्रावितवान् (स्वरूपमपरं गौरस्य दामोदरः)।।२६९०।।

पाण्डित्यस्य चकार शंसनमथ श्रीपादवर्यप्रका-
शानन्दस्य महाप्रभुर्वरयतेः सम्मानहेतोस्तथा।
एकं पद्यमथ स्वरूपसुहृदाऽसौ लेखयित्वोत्तरं
तत्पार्श्वे करतो विसर्जयति चैतस्यैव भक्तस्य तु।।२६९१।।

अस्तीदं तत्पद्यम्- । (चैतन्यश्रीरात्मा) ।।२६९२।।

*"घर्माम्भो मणिकर्णिका भगवतः पादाम्बु भागीरथी*
*काशीनाम्पतिरर्द्धमेव भजते श्रीविश्वनाथः स्वयम्।*
*एतस्यैव हि नाम शम्भुनगरे निस्तारकं तारकं*
*तस्मात्कृष्णपदाम्बुजं भज सखे ! श्रीपादनिर्वाणदम्"।।*

१५०. एतद् विष्णुमयं जगदखिलम्।
मोक्षादुपरि प्रेमा तिष्ठति तत्पञ्चमपुरुषार्थः
तत्सुखसुखिता प्रेमावृत्ति,र्जगत्प्रभोः सत्काम्या।
श्रीमत्प्रेमोत्पत्तिर्हृदये श्रीमत्कृपया भजताम्
श्रीपतिरूपमधुरराधाप्रियकृष्णस्तद्भजनीयः।।

भक्तिर्भागवती निमायिनः पद्येऽस्मिन् पुरुषार्थशीर्षगा।
मुक्तिर्भक्तिपुरस्तृणोपमा तुच्छा (प्रेमतृषोत्तमस्पृहा)।।२६९३।।

एतद्व्युत्तरमाप्य तत्र भविताऽभूत्का दशा श्रीप्रका-
शानन्दस्य यतीश्वरस्य च महाराजस्य तु स्वामिनः।
एतद् वेत्तु स एव, किन्तु स पुनः पद्यं तथैकं प्रभोः
पश्चादल्पदिनस्य सौहृदवतः पार्श्वे यतिः प्राहिणोत्।।२६९४।।

आसीच्छ्रीलमहाप्रभोस्तु नियमः श्रीमत्प्रसादग्रहे
चक्रे क्वापि विलम्बमेष न यति,र्लेभे यदापि क्षणे।
श्रीमन्मन्दिरकप्रसादममना गौरस्तदैव प्रभु-
स्तं स्वास्ये निसिषेच (शीघ्रधरणं तन्मानदानेऽयते)।।२६६५।।

प्राणेभ्योऽप्यधिकं निमायिहृदयास्तं लाडयाञ्चक्रिरे
भक्ताः सुन्दरसुन्दरञ्च विविधं तं नित्यमेव प्रभुम्।
वस्तूनि स्म सुभोजयन्ति तदहो ! सर्वात्मकं तन्मुदे
भुङ्क्ते वस्तु महाप्रभुस्त्वपि, दिने सोऽनेकवारं तथा।।२६६६।।

संन्यासस्य विरुद्धमस्ति नियमात्साधारणात्संसृता-
वेतत्त्वाचरणं, निजोदरभरः कार्यस्तु संन्यासिभिः।
भिक्षायां ननु रूक्षशुष्कमवनावन्नं पुनर्यन्मिलेत्,
तेनैवात्र तथैकवार-(मपरः स्वादोऽत्र संन्यासिनाम्)।।२६६७।।

स्वादस्तेन पृथक्पृथक् च विविधं ग्राह्यो रसानां नहि,
प्रेमी किन्तु महाप्रभुः परमभू,त्संन्यासिकोऽपि त्वभूत्।
प्रेमी किन्तु पुरा निमायिसुमनाः पश्चात्स संन्यासिकः
(संसारेऽच्छलरागिणोऽपि विरलाः, सत्प्रेमिणः का कथा?)।।२६६८।।

एष प्रेमपुरः स्वतस्तु नियमान् स्थाने विसस्मार तान्
संन्यासस्य कदापि कर्हिचिद,होऽप्यस्त्यत्र चाभाणकम्।
'संसारे नियमो निमायिनि तथा न प्रेम्णि वै वर्तते'
(लोके सम्मतपालनाय नियमोऽलोकस्थितिः प्रेमिणः)।।२६६९।।

सत्यं प्रेमवशङ्गतः सहृदयो भक्तात्मनां प्रेमिणां,
तन्मोदार्थमयं विशेषमकृत स्थाने न चिन्तां तथा।
संसारे नियमस्य, बोद्धुमिदमा! मस्तिष्कमुख्यः कथं
वेदान्तादिविचारकः प्रभुरहो ? (पन्थाः पृथक् कौ पृथक्)।।३०००।।

मस्तिष्कप्रमुखः सुधीस्तु नियमानेवेश्वरं बोधते,
पारुष्येण हठेन सोऽत्र नियमान् सार्धञ्च पुष्णाति कौ।
एतादृक् पुरुषोऽपि लोकनिवहे वन्द्यश्च पूज्यः पुनः-
स्यादन्योऽपि तथेदृगेव निखिलः कावाग्रहो नोचितम्।।३००१।।

लोकेऽध्वा पर एव सौहृदवतां तु प्रेमिणां, गोकुल-
ग्रामाऽध्वैव पर,स्तथाहि मथुरा त्वन्यैव सत्प्रेमिणाम्।
संसारे भुवनत्रया,त्पुनरहो ! चैतन्यधाम्नः प्रका-
शानन्दो नियमस्य देशयति तत्पारुष्यमादर्शयन्-।।३००२।।

सम्प्रति पद्याद्भर्तृहरेस्तु (आप्तवचो हि स्वीकरणीयम्)।।३००३।।

१५१. इन्द्रियनिग्रहणं संयमतः।
पवनवारिकेवलपर्णाशनमुनिरपि ललितं लब्ध्वा
स्वस्थधारणासंयमचलित,श्चित्रं मोहनरूपम्।
घृतदधिदुग्धान्वितशाल्यन्नं मनुजो भुङ्क्ते नित्यम्
य,स्तस्येन्द्रियनिग्रहणं यदि, तद्गिरिसागरतरणम्।।

एतत्पद्यमसौ पपाठ सुमना गौरः पठित्वैव तल्-
लज्जेवास्य समुद्गता ननु मनाक् चित्ते, विरक्तात्मना।
हस्ते पत्रमिदं स्वरूपसुहृदश्चादा,त्स्वरूपो मना-
गूचे रोषरवे 'ददामि तरसैवास्योत्तरं साम्प्रतम्'।।३००४।।

सारल्येन तथाधिकेन सुमना गौरो जगादाऽ'स्य हे !
किं स्यादेवमथोत्तरं, तु भवितुं स्याद् गालिरेवाऽवनौ।
गालेरुत्तरमत्र, गालिददनं लोके विवेकी नरः
स्थाने नोचितमेव बोधति (तपोऽसाधुस्वराऽसर्जनम्)।।३००५।।

तस्मात्तिष्ठति मौनमेव भुवने श्रुत्वाऽन्यगालिं स, नो
कीदृश्यास्त्वपि चोत्तरं वितरति स्थानेऽत्र गाले,रतः।
नास्त्यावश्यकतोत्तरस्य सुधियां काप्यस्ति चास्याधुना,
वार्तेयं भुवि सत्यमेव-(सुजनो भूयात्तु सत्याग्रही)।।३००६।।

इन्द्रियाणि शक्तिमन्ति देहे सन्ति, तानि पण्डितानपीह।
कुर्वते निजोन्मुखं हठेन' (स्वात्मनीह वर्तते हि शत्रुः)।।३००७।।

आज्ञातोऽत्र महाप्रभोर्ननु तदाऽस्थुर्मौनमेवाखिला
भक्ताः, किन्तु सहिष्णुता न भवितुं शक्नोति तुल्या प्रभोः।
सर्वेष्वत्र, ततो विसर्जितमिदं भक्तैर्लिखित्वा प्रका-
शानन्दस्य (परोक्षमेव सुहृदो गौरस्य) पार्श्वे यतेः-।।३००८।।

*"सिंहो बली द्विरदशूकरमांसभोजी*
*संवत्सरेण कुरुते रतिमेकवारम्।*
*पारावतस्तृणशिखाकणमात्रभोगी*
*कामी भवेदनुदिनं, वद कोऽत्र हेतुः?"।।*

१५२. लोकः शास्त्रनियमदृष्टान्तः।
असतो ग्रहणान्मनसो विकृतिः संस्कारः सद्ग्रहणात्
शास्त्रं दिशते, ज्ञः स्वीकुरुते, क्वापि भुवि तु विपरीतम्।
पञ्चाननभोजनमांसादिः पारावतकणशष्पम्
महदन्तरमनयो रतिभावे, किं कारणमिह ? मृग्यम्।।

पद्यस्यास्य बभूव को वरयतिश्रीपादवर्यप्रका-
शानन्दोपरि (मौनमन्तिमफलं) ज्ञातं (प्रभावो) नहि ।
तत्पश्चान्ननु पत्रकव्यवहृती रुद्धैव जाता पुनः
(संवादे मनसोः स्थिते व्यवहृतिर्वाचां क्षणाद्रुध्यते)।।३००९।।

आज्ञां याचितवान्महाप्रभुमहो ! श्रीसार्वभौमो बुधः
काशीं यातुमथ 'प्रदेहि तु ममाऽऽज्ञां, तत्र जित्वा न्वहम्।
शास्त्रार्थेऽसरसात्मरूक्षचरितश्रीपादवर्यप्रका-
शानन्दं ननु भक्तितत्त्वमपरं संबोध्य चायामि तम्'।।३०१०।।

शास्त्रार्थश्च पराजयो भुवि जयो, भौमप्रतिष्ठान्वितं
नासीत्कार्यमिदं प्रभोः रुचिकरं, भक्तः प्रभोः कं जयेत्?।
सर्वं दीव्यति तु स्वरूपमवनौ तस्येष्टदेवस्य, तत्-
सीतारामम‌यं निबुध्य निखिलं बद्धाञ्जलिर्वन्दते -।।३०११।।

१५३. सीतारामम‌यं जगदखिलम्।
शुद्धा प्रकृतिः पुरुषोऽविकृतोऽन्योन्यं समवेताविह
काले प्रकटं भूत्वा भूमौ मर्यादां स्थापयतः।
अखिलसिता सीता चासदृशो रामो, भक्तजनानाम्
तुलसी तन्मयमखिलं ज्ञात्वा बद्ध्वा पाणी प्रणमति।।

भक्तः कीदृगपीह किन्तु सुमतिः श्रीसार्वभौमोऽमलः
शास्त्रार्थस्य निजस्य वाल्पमधिकं तस्याभिमानस्त्वहो !।

आसीदेव, पुरो निमायिमनसां लीनस्तथा सोऽवसत्,
स्थाने स स्फुटितोऽभिमानिमनसां (दृश्यं हृदुद्दीपकम्)।।३०१२।।

चैतन्येन निवारितोऽपि सुहृदा काशीं तु यातुं प्रभौ
भूयः सोऽकृत चाग्रहं, प्रभुरदोवाञ्छां हि दृष्ट्वोत्कटाम्।
तत्काशीगमनस्य सम्प्रति ददावाज्ञां, स यातोऽपि तत्-
काशीं किन्तु यथा गतः सहृदयस्तस्मात्तथैवाऽऽगतः।।३०१३।।

शास्त्रार्थे सुमना महामहिमकश्रीपादवर्यप्रका-
शानन्दं न तथापराजितमथैवासौ विधातुं क्षमः।
निर्मातुं ननु भक्तमेव न पुनस्तं ज्ञानिनस्तु क्षमो
(रोगो मानसिको यथा नरि मनोवैद्यस्तथाऽपेक्षितः)।।३०१४।।

एतेनात्मनि लज्जितोऽपि सुमना जातो मनाक्सोऽधुना,
सङ्कोचं कुरुते महाप्रभुपुरः स्माऽद्धाऽऽगतावेव तु।
गत्वा तं च मिमेल तत्स्वयमहो ! गौरप्रभुः सान्त्वनां
यच्छञ्जल्पति 'कार्यमत्रभवतः स्तुत्यं तथासीन्महत्।।३०१५।।

लोके भक्तिविहीनजीवजगतः श्रीभक्तिमार्गे तथा-
वाञ्छा त्वानयनस्य कस्यचिदहो ! चित्ते तु साध्वात्मनः।
स्थाने संभवति' प्रभोः सुमनसोऽदःसान्त्वनासंयुतै-
र्वाक्यैः सम्प्रति सार्वभौमसुमतेर्लज्जा गताऽल्पं मनाक्।।३०१६।।

तस्य प्रेम महाप्रभोः पदेऽदोवृत्तस्य तथाह्यनन्तरम्।
भूयोऽवर्धत चाधिकं (प्रियेऽत्यन्ते हृत्स्वत एव पद्यते)।।३०१७।।



# पुर्यां गौडीयभक्तानां पुनरागमनम्

१५४. अमृतं प्रकृतिभेदतो विविधम्।
अमृतं नृपसम्मानप्राप्तिर्मानेहान्तर्मनसाम्
पायसभोजनममृतं स्वादुप्रियमधुरान्नरसानाम्।
शीतनिवारणसाधनरहिताऽमृतवह्निः शीततौ
प्रियतमदर्शनममृतं सततं तस्यातुरहृदयानाम्।।

सत्यं यो हृदयप्रियो लगति नोऽत्रात्यन्तमेवावनौ,
चित्तं यस्य कृते सदैव च तपत्तिष्ठे,त्प्रियस्येदृशः।
चेत्कुत्रापि मिलेत्तु दर्शनमहो ! तर्हि प्रमोदः कियान्
सच्चित्ते त्वधिकं भविष्यति भवन् ? (मोदाय चेष्टाऽखिला)।।३०१८।।

प्रेमी कर्तुमथाऽमलः सहृदयस्त्वस्यानुभूतिं क्षमो,
लोके स्वप्रियहेतुदुःखसहनेऽप्येकं सुखं जायते।
आनन्दः स्मरणे प्रियस्य, करणे तत्कर्मणः कौ सुखं
स्वर्गीयं, प्रियहेतुतो मधुरिमा वैकल्यतावस्थितौ।।३०१९।।

वियोगजन्येऽपि तथाऽस्य दुःखे
मिष्टं तु मिष्टं सुखमेव चैकम्।
किमस्ति कौ सम्मिलने ?, ममाऽदो-
निदेशनं बुद्धिबहिस्तु वार्ता।।३०२०।।

श्रीनीलाचलमाययौ प्रतिशरत्कृत्वोपलक्ष्यं रथ-
श्रीयात्रां प्रभुजन्मभूमिविषयाद् गौडीयभक्ताकरः।
शक्नोत्येव न वर्तमानसमयश्रीतीर्थयात्री जनः
कौ तात्कालिकतीर्थयात्रिसुहृदां दुःखस्य कर्तुं प्रमाम्।।३०२१।।

पद्भ्यामेव विधीयते स्म समये सर्वत्र तस्मिञ्जनै-
र्यात्रा, चाध्वनि यात्रिणामगणिताः स्मायान्ति नद्यो नदाः।
एतत्पारगतिर्बभूव कठिनं नौभिः सतां केवलं
(भूद्वीपा भवसागरेऽस्ति विहिता नौरेव सत्प्राणिनाम्)।।३०२२।।

नाना तत्स्थलघाटवारकजनाः क्लेशं ददुर्यात्रिणां,
पारं गन्तुमथ प्रतीक्षणविधिः कार्यो बहूनामभूत्।

द्वौ द्वौ त्रीणि दिनानि यावदथवा तु त्रीणि साध्वात्मनां,
दूरेऽल्पे परिवर्तते स्म समयेऽस्मिन् राज्यसीमा पुनः।।३०२३।।

चिन्तामेव चकार यात्रिसुहृदां तत्स्त्रीनराणां तथाऽ-
सामान्यां न विधर्मिशासकनृपो,ऽन्योन्यं नृपेणाऽधुना।
एकेनाऽऽजिरभून्नृपस्य बहुधा त्वन्यस्य, चाजिक्षणेऽ-
सौविध्यं बहु यात्रिणां स्म भवति (क्षेत्रं यतः सौविधम्)।।३०२४।।

वस्त्रे प्रच्छदविस्तरे निजशिरःस्कन्धे पुनस्तैस्तथाऽऽ-
धीयेते स्म, समाप्यते स्म च शनैः सम्पूर्णयात्रा शनैः।
पद्भ्यामेव, तथासमस्तविषयैस्तत्तीर्थयात्राकृतिः
काले तत्र च बुध्यते स्म कठिनं कार्यं तथैकं महत्।।३०२५।।

क्राम्यो विंशकपञ्चविंशकदिनैर्द्वीपाज्जगन्नाथजी-
पादाऽध्वाऽस्ति, निमायिनः प्रतिशरत् ते गौरभक्ताः पुनः।
दुःखे तावति सत्यपीह महताऽऽनन्देन चोल्लासतः
स्माऽऽयान्ति प्रभुदर्शनातिशयिताऽऽकाङ्क्षास्तु नीलाचलम्।।३०२६।।

आयान्ति स्म पुरा तु केवलनराः प्राय,स्तथा प्रावृषः
स्थित्वा मासचतुष्टयं च सुहृदा सार्धं निमाय्यात्मना।
प्रत्यायान्ति निजं निजं प्रति गृहं, वर्षाद्द्वितीयात्तथा
भक्तानां सुहृदां स्त्रियोऽपि सुपुरीतीर्थे स्म चायान्ति च।।३०२७।।

गौराङ्गप्रभुदर्शनैर्निजमहो! धन्यं तथा चक्रिरे,
श्रीपुर्यामिह मातरश्च परमा भक्ता द्वितीयेऽब्दके।
प्राप्ता गौरनिमायिवत्सलरसाद् द्वे वा चतस्रो,ऽधुना
प्रायः सर्वनिमायिभक्तसुहृदां वर्षे तृतीये स्त्रियः।।३०२८।।

श्रीनीलाचलयानहेतुमभवन्नीत्वा लघून् स्वाँल्लघून्
बालानत्र समुद्यताः प्रभुयतिश्रीदर्शनाकाङ्क्षया।
आसीद् गेहकुटुम्बरूप्यकधनद्रव्यस्य तासां नहि
ध्यानं किञ्चिदपी-(ह भावजगति द्रव्यं तथोपेक्षितम्)।।३०२९।।

तत्राऽऽसी,दवधस्तु यत्र भुवने रामस्य वासस्थलं,
लोकोक्तिः स्फुटिता, प्रभुर्निवसति स्थाने तदीयः क्षितौ।
यस्मिं,स्तद्गृहमस्ति सत्यमपरं तत्रैव, तद्दर्शिते
तासां मार्गभयेऽपि तत्र पतिभि,र्भीता बभूवुर्न ताः।।३०३०।।

पृष्ट्वाऽऽपृच्छ्य महाप्रभुप्रियमभूद् विष्णुप्रियां वस्तु य-
च्चात्यन्तं, तु तदेव तत्प्रभुकृते पक्त्वा स्वसङ्गेऽचलन्।
नीत्वा, लड्डुकमेव गौरसुहृदे काचिद् बबन्धा,ऽपरा
नाना सम्प्रति मिष्टपाकमपरा सन्धानकान्येव च।।३०३१।।

सन्देशो रचितः कयापि, शरदो यावन्न दोषं व्रजेत्
क्षोदस्याऽऽरचितं कयापि विविधं मिष्टान्नमेवाऽमितम्।
एवं ते विविधोपहारसहिता भक्तास्तथादःस्त्रियो
नीत्वा खाद्यपदार्थकञ्च निखिला नीलाचलायोद्यताः।।३०३२।।

पानीहाटिनिवासिराघवबुधश्रीसोदरा चादधौ
श्रद्धां गौरपदोस्तथाहि महतीं, सा सुन्दरं सुन्दरम्।
वस्तूनि प्रतिवर्षमेव च शतं निमार्य च प्राहिणोत्
पाणिभ्यां निजसोदरस्य निकटे त्वाधाय झाल्यां प्रभोः।।३०३३।।

तस्या वस्तु कियानपीह दिवसांस्तिष्ठेत्कथं नो धृतं
स्थाने न स्म विशीर्यते तु नियतं नो दुष्यते स्माऽपि च।
आसीद्राघवपण्डितस्य सुहृदो झाली प्रसिद्धाऽखिले
भक्ते, राघवझालिवस्तु निदधौ यावद्दिनं चाधिकम्-।।३०३४।।

गौराङ्गोऽपि सुरक्षितं सहृदयः, पानीकहाटी नव-
द्वीपः शान्तिपुरं कुलीनपदकग्रामश्च खण्डाख्यकः।
एतत्सर्वनिवासिनः सुमनसो भक्तास्तथा पुञ्जिताः
स्माऽऽयान्ति प्रथमं निमायिजननीस्थाने शचीसम्मुखे।।३०३५।।

शीर्षे मातृपदाम्बुजाऽमलरजः कृत्वा, तदाज्ञां तथा
नीत्वैव स्म करोति गौरहृदयः प्रस्थानमेषोऽखिलः।
वारेऽस्मिन् जननी ददर्श, गृहिणी श्रीचन्द्रशीर्षस्य चाऽ-
सीन्मातुर्भगिनी समं स्वपतिना साऽपि प्रयाति स्म तु।।३०३६।।

श्रीनीलाचलयानहेतुमधुना चाचार्यपत्नी निजै-
र्बालैः सार्धमथोद्यताऽस्ति पुरतः सीताऽपि देवी पुनः।
देवी वासगृहाङ्गना सहृदया सा मालिनी, तच्छिवा-
नन्दस्यापि च दृश्यतेऽत्र गृहिणी चैतन्यदासः सुतः।।३०३७।।

सर्वे यात्रिकवेषतः सहृदया (गुप्तो मुरारिः समं
पत्न्या-)ऽमी समुपस्थिताश्च, जननी पर्यश्रुनेत्रा ददौ।

यात्राज्ञामवरुद्धवाक्च रुदती सर्वानवोचच्च सा'ऽ-
त्यन्तं सम्प्रति यूयमेव निखिलाः सद्भाग्यवन्तो, यतः-।।३०३८।।

द्रष्टारस्तु निमायिपद्मवदनं गत्वा पुरीं, मे कदा
(जाने नो) भविता निमायिसरितो भाग्योदयः कौ, यदा।
तत्स्वर्णाभनिमायिसुन्दरमुखं दृष्ट्वा हृदं शीतलं
कर्तुं स्यां (प्रभुरत्र कौ निजहृदो वाञ्छाप्रपूर्तौ क्षमः)।।३०३९।।

ब्रूयास्त्वं निखिलो निमायिसुहृदं तं–तत्स्वसद्दुःखिनी-
मातुर्दर्शनमेकवारमवनीद्वीपे तथाऽऽगत्य सः।
दत्वा यातु तु, तस्य पद्मवदनं द्रष्टुं कियद्व्याकुला
वर्तेऽहं' (जननीकृते सुतमुखादन्यन्न कौ सुन्दरम्)।।३०४०।।

सङ्केतेन तमेव सा निजवयःस्त्रीणां तथैवं निजाऽ-
भिप्रायं प्रकटं निमायिवनिता चक्रेऽपि विष्णुप्रिया।
सर्वे स्त्रीपुरुषाश्च मातृपदयोस्तीर्थं पुरीं वन्दनां
कुर्वन्तश्चलिता (निमायिवनिता माता समाजाऽऽदृता)।।३०४१।।

मार्गश्रमो विदधतो हरिकीर्तनं नो
कस्यापि गौरसुमनःसुहृदः प्रतीतः।
प्राप्ताः पुरीं भगवतो निखिलाश्च भक्ता
(यातीह लक्ष्यमपरं सरलं निमायी)।।३०४२।।

तेषामागमनं निशम्य सुमनास्तत्स्वागतार्थं प्रभु-
गौरः पूर्वत एव सौहृदभरो गोस्वामिदामोदरम्।
गोविन्दप्रभृतिञ्च भक्तसुहृदं संप्रेशयामास, ते
गत्वाऽऽचार्यगुरोः समस्तसुहृदामग्रयस्य पादेऽनमन्।।३०४३।।

मालास्तस्य गले तथाहि निखिलाः संभारयन्ति स्म, चाऽऽ-
गत्यात्रापि महाप्रभुस्तु मिलितो भूय,स्तथोल्लासतः।
स्वे स्थाने त्वखिलान्निनाय, निखिलस्थानप्रसादादिको-
पायः पूर्ववदेव तेन विहितः (कोऽप्यातिथेयो यतिः)।।३०४४।।

भक्तानां प्रथमं तथैव ददृशुः संन्यासिवेषे प्रभुं
गौराङ्गं तु बहुस्त्रिय,श्च रुरुदुर्ह्युच्चैर्निमायिप्रभोः।

दृष्ट्वा भिक्षुकवेषमीदृशममू,र्भक्तस्त्रियश्च क्रमाद्
भिक्षां सम्प्रति कारयन्ति (सुहृदः सेवा प्रमोदावहा)।।३०४५।।

प्रेम्णा चातिशयेन तु प्रभुरयं स्वीकृत्य शुद्धात्मनां
सर्वासां हि निमन्त्रणं स्म कुरुते गत्वा च गत्वा तथा।
भिक्षां तद्वसतौ, च पूर्ववदहो! त्वायोजिता ह्युत्सवाः
सर्वे (यः क्रियते क्रतुस्तु मिलितैः सद्भिः स कावुत्सवः)।।३०४६।।

यात्रा श्रीलरथस्य, सम्प्रति तथा हेरान्विता पञ्चमी,
श्रीकृष्णोत्सवकाष्टमी, दशहरा, दीपावली चादयः।
उन्मत्ताः स्म भवन्ति कीर्तनममी गौडीयभक्तास्तथा
कुर्वन्तोऽत्र विचेतनाश्च लुठिता संकीर्तनस्यान्तरे।।३०४७।।

सार्धं सर्वजनैर्ननर्त सुमना गौरस्तथौच्चैः प्रभुः
कुर्वन्नृत्यमयं तथैकदिवसे कुर्वंश्च कूपेऽपतत्।
भक्तैरेष ततो निमायिहृदयः कूपात्तदोर्ध्वीकृत-
श्चाघातो नहि कोऽपि तस्य लगितो देहे निमायिप्रभोः।।३०४८।।

इच्छां भक्तजनस्य चैष सुमना नानाप्रकारैः प्रभुः
पुर्यां पूरयति स्म, भक्तनिवहो येन प्रकारेण तु।
सन्तुष्टो भवितुं ललाष सुहृदं संभोज्य संपाय्य च
श्रीगौराङ्गयतिं, निमायिहृदयस्तेन प्रकारेण तु।।३०४९।।

तेषामनुसारं भिक्षां स विधाय।
सन्तुष्टमहोऽमुं चक्रेऽथ निमायी।।३०५०।।

पश्चादाश्विनमासपर्वविजयाश्रीमत्तिथेः प्रस्तुता
भक्ता गेहनिवर्तनाय निखिला, गौरप्रभुः पूर्ववत्।
प्रत्येकं स पृथङ् मिमेल सुमना भूय,श्च तान् पृष्टवान्
वार्तास्तन्मनसां (भवे परमनोग्राही प्रमाताऽपरः)।।३०५१।।

आनिन्युरत्र प्रतिवर्षमाज्ञा-
नुसारमस्य प्रभुगौरधाम्नः।
श्रीमज्जगन्नाथकृते कुलीन-
ग्रामस्य लोका वरपट्टरज्जुम्।।३०५२।।

तेऽत्र प्रतिवारं पृच्छन्ति च गौरम्।
श्रीवैष्णवसाधोः स्थाने परिभाषाम्।।३०५३।।

पृष्टः प्रभुः कथयति प्रथमे स वर्षे
'यस्याननाद् भगवतो,ऽपि तथैकवारम्।
उच्चारणं जगति जातमथाप्तनाम्नः,
श्रीवैष्णवो ननु स एव मनुष्यलोके।।३०५४।।

निरन्तरं यो भगवत्सुनाम्ना-
मुच्चारणं कौ भवतीह कुर्वन्।
तं वैष्णवं विद्धि मनुष्यसाधुं'
द्वितीयवारे प्रभुराह पृष्टः।।३०५५।।

'उच्चारणं भगवतः स्वत एव नाम्नां
यद्दर्शनात्तु मुखतोऽस्तु भवज्जनानाम्।
मर्त्यात्मसाधितहरिर्भुवि वैष्णवोऽयं'
वर्षे जगाद सुमनाः स्वमनस्तृतीये।।३०५६।।

वर्षत्रये दिशति स त्रिविधस्य चैवं
भक्तस्य तत्त्वममना (भुवि वैष्णवश्च।
आद्य,श्च वैष्णवतरो भवति द्वितीयो,
भक्तश्च वैष्णवतमः सुमनास्तृतीयः)।।३०५७।।

सर्वेषामुपदिष्टमस्य य'च्छ्रद्धाभावमथाऽऽदधातु कौ।
स्थाने वैष्णवमात्रकं प्रति (श्रीभावो विरलो भुवीह ना)।।३०५८।।

कामं कीदृगपीह वैष्णवः संसारे कथमस्तु न क्वचित्।
सम्मान्योऽस्ति च पूज्य एव स' (श्रद्धेयोऽमलभाववान्नरः)।।३०५९।।

एवं योऽपि महाप्रभुं सहृदयं प्रश्नं तु यं पृष्टवान्
तस्यैव प्रभुरेष चोत्तरमदा,च्चक्रे सचेष्टं पुनः।
कर्तुं संततमेव भक्तसुहृदामद्वैतमावेक्षणं
त्वाचार्यं (परिवारवृद्धसुजनोऽवेक्षाधिकारोचितः)।।३०६०।।

सद्भक्तानयनस्य गौडधरणीद्वीपाच्च नीलाचलं
मार्गे तन्निखिलप्रबन्धनविधेर्भारश्च दत्तोऽमुना।

गौराङ्गप्रभुणा पुरोपरि शिवानन्दस्य, भूयः प्रभुः
'सर्वानानयतां तथाह्यवहितोऽत्यन्तन्तु' तं भाषते।।३०६१।।

श्रीनित्योऽथ निवेदितः सुमनसा 'श्रीपाद! नीलाचलं
नायातु प्रतिवर्षमेव तु, भवान् संकीर्तनस्य प्रियम्।
स्थित्वा तत्र तथाप्रचारमपरद्वीपे तु कुर्वन् भवेद्'
(विद्वद्भिर्नियता प्रचारणमहो! विद्यातुरीयस्थितिः)।।३०६२।।

संबोध्याखिलमेवमेव सुमनाः प्रस्थापयामास स
द्वीपं, गौरयतिं प्रणम्य सुहृदं स्वं गौडदेशं प्रति।
चेलुर्गाढनिमायिसक्तहृदया भक्ता रुदन्तोऽखिलाः
(स्यात्सक्तिः कियती, परं भुवनतो गन्तव्यमेवाखिलैः)।।३०६३।।

श्रीविद्यानिधिपुण्डरीकसुजनो गौरप्रियः केवलं
कञ्चित्कालमथाधिकं सुमनसा सार्धं निमाय्यात्मना।
पुर्यामेव तथा ललाष भवितुं, तत्तेन सार्धं प्रभुः
स्वस्थाने यतिरागतः (सहृदयाऽऽसङ्गस्त्वकालावधिः)।।३०६४।।

नाम्ना 'प्रेमनिधि'र्महाप्रभुरमुं विद्यानिधिं कारणा-
त्प्रेम्णः प्रेमपयोनिधिः समभवत्कुर्वन् स संबोधनम्।
गौराङ्गाऽपरहृत्स्वरूपसुमनोदामोदरेणाऽधिकं
तद्विद्यानिधिपुण्डरीकसुहृदो भावः प्रगाढोऽभवत्।।३०६५।।

स मन्त्रशिष्योऽस्य गदाधरश्चाऽऽ-
सीदेव, तत्सेवनमस्य कुर्वन्।
बभूव विद्यानिधिगौरधाम्नः
(सेवासमो नास्ति परोऽत्र धर्मः)।।३०६६।।

शीतस्य प्रथमा तथा भवति याऽह्वा चाश्विनानन्तरं
षष्ठी, सौढनषष्ठिका त्विह पुरीतीर्थे जनैः कथ्यते।
श्रीपुर्यां परिधाप्यते प्रभुजगन्नाथादिमूर्तौ तिथौ
तस्यां शैत्यपटो (भवेऽत्र भगवत्सेवाऽपि भावो यथा)।।३०६७।।

दृष्ट्वा वस्त्रमधावितं भगवतो देहे तथा मण्डितं
जाता तत्र दिने घृणाऽतिमहती भक्तस्य विद्यानिधेः।
तस्मिन्नेव दिने निशीह भगवान् रामेण सार्धं हसं-
श्चैतत्कोमलगल्लयोरतिशयं स्थाने चपेटान् ददौ।।३०६८।।

स्वापाज्जागरितो ददर्श सुमनाः (स्तः फुल्लितौ वस्तुतो
गल्लावस्य) तथाऽमुना प्रमुदिताऽभूदस्य विद्यानिधेः।
गौरः कृष्णकथेरणश्रवणयोर्दामोदरेणाऽमुना
च श्रीमत्प्रभुरत्र सार्धमभवत्प्रीतस्तु सर्वाधिकम्।।३०६९।।

तथाहि किञ्चित्समयस्य पश्चा-
दाज्ञां प्रभोरेष निधिश्च नीत्वा।
स्थानं स्वकीयं सुमना निवृत्तः
(पाथेयमस्तीह महत्प्रसङ्गः)।।३०७०।।

यावद् वर्षचतुष्टयं सुमनसो भक्ताः समीपे रथ-
श्रीयात्रासमये तथैव सुहृदः प्रत्येकवर्षं प्रभोः।
आयान्ति स्म निरन्तरं, कथितवान् वर्षे प्रभुः पञ्चमे
भक्तान् (हार्दिकगाढभावकथनं काले विधत्ते बुधः)।।३०७१।।

'आगत्य स्वयमेव पावनधरां वर्षेऽत्र गौडावनीं
श्रीवृन्दावनयानलक्ष्यमनसा नूनं करिष्याम्यहम्।
गौराङ्गो जननीकजन्मधरणीपादश्रियोर्दर्शनं
(मातुः सम्मुखमत्र जन्मवसुधोत्सङ्गे च यो, भाग्यवान्)।।३०७२।।

वर्षे भाविनि तत्पुरीं प्रति तथा सर्वे भवन्तः प्रिया!
नागच्छन्तु' तदाऽमुनाऽस्य वचसा जातः प्रमोदो महान्।
सर्वेषां सुहृदां, यतस्तु समयात्प्राप्तः समाप्य प्रभुः
पुर्यां दक्षिणतीर्थकभ्रमणकं, तस्मादसावेव तु-।।३०७३।।

श्रीवृन्दावनयानमत्र सुमनाश्चासीत्तथा चिन्तयन्,
रामानन्दकसार्वभौमकमहाराजप्रतापात्मनाम्।
अत्यन्ताग्रहकारणात्तु गमनेऽशक्नोन्न चाद्यावधिं
(संसारेऽलमपुण्यपुण्यफलनं स्थाने ग्रहश्चाग्रहः)।।३०७४।।

श्रीवृन्दाविपिनस्य सम्प्रति सतो जाताऽस्य यानस्पृहा
त्वत्यन्तं प्रबला,ऽधिकञ्च विवशं कर्तुं पुरीवासिनः।
नैच्छन् तं सुहृदोऽपि सौहृदभराद् भक्तास्ततः कारणात्,
तद्वृन्दावनयानसम्मतिमदुस्ते दुःखितेनात्मना।।३०७५।।

औत्सुक्यमद्य प्रकटं विशेषं
विभाति वृन्दावनमेत्य कुर्वन्।

महाप्रभुश्चैष निजप्रियश्री-
श्रीकृष्णलीलास्थलदर्शनार्थम् ।।३०७६ ।।

वृन्दावनयानस्यायं कुरुते स्म।
सज्जां (भुवि यात्री नानाविधसज्जः)।।३०७७।।

'गीतानन्तरसं' निमायिचरितं सौहार्दसारात्मकं
काव्यालङ्कृतिरीतिवस्तुविगुणं सद्भावसम्मेलनम्।
श्रीचैतन्यमहाप्रभुप्रियमनःसंसारिपाथेयकं
भाषायां पथिकेन साधुघटितं गीतं परं संस्कृते।।३०७८।।

गौरप्रीतिहृदा निमायिमनसा चैतन्यभावात्मना
दत्तब्रह्मचरस्य गौरचरितं चास्वाद्य मुग्धाऽऽस्थया।
गौरोऽनन्तरसोऽत्र धीरललितः सद्विप्रलम्भाश्रयो
गीतोऽनन्तरसैर्निरन्तरतयाऽनन्तो 'निमायी' रसः।।३०७८।।

आरब्धं घटनं तृतीयमिह यद्राकातिथावाश्विने
'श्रीस्वप्नेश्वरसन्निधौ', ननु दिनैः सार्धैकवर्षाधिकैः।
गीतानन्तरसस्य पूर्णमभवत्तत्रैव तन्माधवे (२००२ ई.)
मेधाया मिहिरात्मजस्य शरणे शुक्ले प्रवेशान्मधौ।।३०८०।।

तल्लोकोत्तरवर्णनापटुकवेः कर्माऽस्ति काव्यं, भवेन्-
निर्दोषं ध्रुवमेव साम्प्रतगुणालङ्कारशोभाञ्चितम्।
दोषं, काव्यगुणं, बुधो न सहते, साहित्यिकोऽवेक्षते,
सद्भावस्फुरणं तु काव्यमपरं भावप्रमातृप्रियम्।।३०८१।।

श्रीमन्महाप्रभुपवित्रचरित्रधारा
भागीरथीह वितता प्रभुदत्तसद्भिः।
संसारसागरतरङ्गविमूर्च्छितान्त-
श्चैतन्यदा सहृदयस्य न कस्य साधोः।।३०८२।।

जयतु निमायिककृष्णचेतनो
जयतु सदा प्रभुदत्तसत्तमः।
जयतु रसोऽमितगीतभावितो
जयतु कृती मधुरप्रमातृकः।।३०८३।।

माधवी पूर्णिमा
२६/५/२००२

✪✪



(गोस्वामी चन्द्रप्रकाशजीमहाराजः)

राजस्थानधरान्तरे 'जुरहरा'ग्रामे कदाचित्पुरा
जातः कश्चि'दनन्तराम'पुरुषो गोस्वाम्युपाधिर्महान्।
'देवीचन्दन'नामिकाऽस्य गृहिणी साध्वी, तयोरात्मजो
'वंशीलाल'महाशयः समभवद् गोस्वामिवंशोज्ज्वलः।।१।।

'वंशीलालः' प्रकृतिसरलः साधु गोस्वामिमूर्तिः
सत्यासक्तिः परमविरतिः स्वाप्तिसम्पत्तिवृत्तिः।
सम्मानोऽस्य ध्रुवमपि जने पीरवन्मुस्लिमानां,
गेही पुत्रौ स भुवि सुषुवे क्षेत्र'पुष्पावती'तः।।२।।

'सतीशचन्द्रः' प्रथमो, द्वितीय-''श्चन्द्रप्रकाशो'' गृहिसाधुभावौ।
आद्योऽभवद् वंशपुरस्सर,स्त्वाऽऽदेशात्पितुश्चात्र परः फकीरः।।३।।

सोऽयं गोस्वामी चन्द्रप्रकाशो युवा ब्रह्मचारी चन्द्रप्रकाशः सुरूपो जटाधारी शिवव्रती साहित्याचार्य-एम.फिलोपाधिर्बाबासिमरणदासजीमहाराज-चतुर्दशसंततिक्रमजातगोस्वामि-वंशीलालजीमहाराजात्मजः स्वपितृपादैकमात्रगुरु-स्तत्प्रगाढभक्तिश्रद्धान्तः-करणस्तदीयादेशगृहीतयतिव्रतस्तद्दीक्षितो रामानन्दीसम्प्रदायः काशी-दशाश्वमेधघाट-गङ्गापावनजलस्थितमन्त्रजपसाधनापूतः श्रीदेवीवैष्णवीगाढ-प्रीतिपूरितः कैलासमानससरोवरादि-हिमालयसमस्ततीर्थादारभ्य कन्याकुमारीपर्यन्तं तीर्थभ्रमणस्थिरमनाः समाजकल्याणपरोपकारसम्पादनैकलक्ष्यः करनालमण्डलान्त-र्गतमुख्याश्रमः सततजन-मङ्गलारतो यथाऽधुना विलसति तथा सदैव स्वस्थप्रसन्नस्तिष्ठतु सोत्साहम्।

एतच्छुभाशंसया गीतानन्तरस-तृतीयखण्डमिदं प्रकाशमायातमिति शतशः साधुवादोऽस्य प्रणयिनः।

शुभाशंसी-
प्रमाता

